BIBLIOTHECA INDICA: 200

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES, No. 1277.

# किरणावली ।




# KIRAṆĀVALĪ

BY

UDAYANACĀRYYA

WITH THE COMMENTARY OF VARDHAMANOPADHYĀYA.

EDITED BY

MAHĀMAHOPĀDHYĀYA SIVA CHANDRA SĀRVVABHOUMA.

FASCICULUS I.

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

No. 5, Nandakumar Chawdhury's 2nd Lane.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1, PARK STREET.

1911.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH,
11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO
HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied — some of the Fasciculi being out of stock.*

### BIBLIOTHECA INDICA.

*Sanskrit Series*

| Title | Rs | As |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2, 4 @ /10/ each .. .. Rs | 1 | 4 |
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Agni Purāṇa, Fasc. 6-14 @ /10/ each .. | 5 | 10 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-5; Vol III, Fasc. 1-5, Vol. IV, Fasc. 1-8 @ /10/ each .. .. .. | 14 | 6 |
| Aitereya Lochana. ... ... ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc. 2-5 @ /10/ each .. ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc 1 @ 1/- | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc 1-6 @ /10/ each ... ... | 3 | 12 |
| *Atharvana Upanishad, Fasc 4 5 @ /10/ each ... ... ... | 1 | 4 |
| Atmatattaviveka, Fasc I. @ /10/ each ... ... ... ... | 0 | 10 |
| Açvavaidyaka, Fasc 1-5 @ /10/ each .. | 3 | 2 |
| Avadāna Kalpalatā, (Sans and Tibetan) Vol I, Fasc. 1-7; Vol II. Fasc. 1-7 @ 1/ each .. ... | 15 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2, Vol 2, Fasc. 1 @ /10/ each ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol. II, Fasc 1-3 @ /10/ each .. | 3 | 12 |
| *Bhāmatī, Fasc 4-8 @ /10/ each ... | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-6; Vol. 2, Fasc. 1, @ /10 each ... | 4 | |
| Baudhyostatrasangraha ... ... ... | 2 | |
| Bṛhaddēvatā Fasc. 1-4 @ /10/ each ... .. | 2 | |
| Bṛhaddharma Purāṇa Fasc 1-6 @ /10/ each ... .. .. | 3 | |
| Bodhicaryāvatāra of Çantideva, Fasc. 1-5 @ /10/ each ... ... | 3 | |
| Cri Cantinatha Charita, Fasc. 1-3 ... ... | 1 | |
| Çatadūṣaṇī, Fasc. 1-2 @ /10/ each ... | 1 | |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2/ each ... .. | 8 | |
| Çatapatha Brāhmaṇa, Vol I, Fasc. 1-7, Vol II, Fasc. I-5, Vol. III, Fasc. 1-7 Vol. 5, Fasc. 1-4 @ /10/ each .. | 14 | 6 |
| Ditto Vol. 6, Fasc. 1-3 @ 1/4/ each ... .. .. | 3 | 2 |
| Ditto Vol. VII, Fasc. 1-5 @ /10/ .. ... | 3 | 2 |
| Çatasāhasrikā Prajñāpāramitā Part, I. Fasc 1-14 @ /10/ each .. | 8 | 12 |
| *Caturvarga Chintāmaṇi, Vol II, Fasc. 1-25; Vol III Part I, Fasc 1-18. Part II, Fasc 1-10 Vol IV. Fasc 1-6 @ /10/ each ... | 36 | 14 |
| Ditto Vol 4, Fasc. 7-8, @ 1/4/ each .. .. | 2 | 8 |
| Ditto Vol IV, Fasc. 8 9 @ /10/ ... | 1 | 4 |
| Çlockavartika, (English) Fasc 1 7 @ 1/4/ each .. ... | 8 | 12 |
| *Çrauta Sūtra of Āpastamba, Fasc. 1-17 @ /10/ each .. ... | 3 | 12 |
| Ditto Çānkhāyana, Vol. I, Fasc. 1-7; Vol. II, Fasc 1-4, Vol. III, Fasc. 1-4; Vol 4. Fasc 1 @ /10/ each ... ... | 10 | 0 |
| Çrī Bhāshyam, Fasc 1-3 @ /10/ each ... .. ... | 1 | 14 |
| Dāna Kriyā kaumudī, Fasc 1-2 @ /10/ each ... ... | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol. I, Fasc 1-7 @ /10/ each ... | 4 | 6 |
| Ditto Āchārasārah Vol. II, Fasc. 1-4 @ /10/ each | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol I @ /10/ each .. ... | 3 | 2 |
| Ditto Vol II. Fasc -2 @ 1/4/ each ... .. ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... ... ... | 2 | 0 |
| Ditto Grihya Sangraha ... ... .. ... | 0 | 10 |
| Haralata ... ... .. ... ... | 1 | 14 |
| K rmapradiph, Fasc. I ... ... ... ... | 1 | 4 |
| la Viveka, Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| atantra, Fasc 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc. 1-14 @ 1/4/ each | 17 | 8 |
| *Kūrma Purāṇa, Fasc 3-9 @ /10/ each .. | 4 | 6 |
| Lalita-Vistara, (English) Fasc 1-3 @ 1/- each | 3 | 0 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each .. | 6 | 14 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc. 1-9; Vol. II, Fasc 1-12 Vol III, Fasc. 1-10 @ /10/ each .. ... ... ... ... | 19 | 6 |
| Ditto Vol IV, fasc. 1 @ 1/4 ... ... .. ... | 1 | 4 |
| **Manutikā Sangraha, Fasc. 1-3 @ /10/ each** .. ... ... | 1 | 14 |
| **Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each** ... .. | 9 | 0 |

# किरणावली ।

ॐ नमो गणेशाय ।

विद्यासन्ध्योदयोद्रेकादविद्यारजनीक्षये ।
यदुदेति नमस्तस्मै कस्मैचिद्विश्वतस्त्विषे ॥ १ ॥

---

## किरणावलीप्रकाशः ।

श्रीगणेशाय नमः ।

मिलन्मन्दाकिनीमल्लीदामां मूर्द्ध्नि पुरद्विषः ।
विश्ववीजाङ्कुरप्रख्यां वैधवीं तां कलां नुमः ॥

कर्त्तव्यविघ्नविघातकं रविनमस्कारं निबध्नाति । विद्येति । यदिति सामान्यतोऽपि कर्त्तृनिर्देशे विद्याविद्ययोः सन्ध्या-

## किरणावलीप्रकाशविवृतिः ।

श्रीगणेशगुरुचरणकमलेभ्यो नमः ।

गण्डाभोगविलोलषट्पदघटासंवारणव्याजतः
शुण्डादण्डविघट्टनेन परितो विघ्नं विनिघ्नन्निव ।
निर्गच्छन्मदवारिरपिच्छिलतरे मार्गे मुहुः प्रस्खल-
न्नारम्भे मम जायतामिह करालम्बाय लम्बोदरः ॥

जयदेवगुरोः सम्यगधीत्य मतमद्भुतम् ।
द्रव्यप्रकाशविवृतौ रुचिदत्तः प्रवर्त्तते ॥

मिलदिति । यद्यपि मन्दाकिनीपदं वियद्गङ्गापरं तथापि गङ्गासामान्य-

रजनीभ्यां निरूपणाद्रविरुदेता लभ्यते । विद्येव या पूर्व्वसन्ध्या तदुदयोद्रेकादुत्पत्त्याधिक्यादविद्येव या रजनी तत्क्षये सति यदुदेति उदयगिरिशिखरमारोहति । सन्ध्या च न रात्रे र्भागविशेषः निरस्तैतद्द्वीपवर्त्तिरविरश्मिजालस्य कालविशेषस्य रात्रित्वात् । सन्ध्यायाञ्चात्र द्वीपे कतिपयतत्सत्त्वात् । अतएव रात्रिसन्ध्ययो-र्धर्म्मशास्त्रे पृथगभिधानम् ।

---

परम् । अन्यत्रापि प्रयोगदर्शनात् । विश्ववीजं महादेव स्तदङ्कुरसमामित्यर्थः । अत्रान्यदपि वीजं जलसम्बन्धेनाङ्कुरतीति ध्वनिः ।

चिन्तामणिकारमतेनाह । कर्त्तव्येति । ननु रवेर्नमस्कार इत्ययुक्तम् । रवेरत्रानुल्लेखात् । तथात्वे वा यदिति नपुंसकलिङ्गानुपपत्तेरिति स्वोक्तमुपपादयति । यदिति । ननु विद्येव या पूर्व्वसन्ध्येति व्याख्यानात् सन्ध्यारजन्योरेव रूप्यत्वं न तु विद्याविद्ययोरिति चेत् । अत्र विद्याविद्ययोरिति विभक्तिविपरिणामः । तेन सन्ध्यारजन्योर्विद्याविद्याभ्यां निरूपणादित्यर्थपर्य्यवसानमित्येके । रूप्यतेऽनेनेति व्युत्पत्त्या रूपणं रूप्यरूपकभावः सम्बन्धः । तथाच विद्याविद्ययोः सन्ध्यारजनीभ्यां सह निरूप्यनिरूपकभावः सम्बन्धः । इत्यन्ये । क्वचिन्निरूपणादिति पाठः । तत्र निरूप्यतेऽनेनेति व्युत्पत्त्या निरूपणशब्द उपमानमानमाह । तथाच भावप्रधाननिर्द्देशादुपमानत्वादित्यर्थो वाच्यः ।

विद्ययेति मध्यपदलोपी समासः । योग्यताबलात् सामान्यशब्दो विशेषपर इत्याह । पूर्व्वेति । ननु रजन्येकदेशः सन्ध्या तथाच तत्सत्त्वे न रजनीक्षय इत्यत आह । सन्ध्याचेति । निरस्तेति । ननु निरासो न प्रागभावः प्रध्वंसो वा अतीतानागतयो स्तदभावात् । नात्यन्ताभावो दिनेऽतिव्याप्तेः । एतद्द्वीपवर्त्तिरविरश्मिजालस्य द्वीपान्तरे तदाप्यत्यन्ताभावसत्त्वात् । अतएव न संसर्गाभावो नाप्यन्योन्याभावोऽपीति चेन्न । सावधिसंसर्गाभावस्य विवक्षितत्वादित्येके । रविरश्मीनामुत्पन्नत्वेन विशेषणात् प्रध्वंसस्यैव विवक्षितत्वादित्यन्ये । द्वीपश्चात्र भारतो वर्षो विवक्षितः । तेन जम्बूद्वीपान्तर्गतमेरोरुत्तरभागे रविरश्मिसत्त्वेऽपि

यद्वा ल्यपूलोपे पञ्चमी । सप्तमी च निमित्ततायाम् । तथाच विद्याहेतुः या सन्ध्या तदुदयोद्रेकं प्राप्याविद्याहेतुरजनीक्षयार्थं यदुदेति तस्मै । विश्वतो विश्वस्मिन् त्विट् दीप्तिर्यस्य तथाभूताय । कस्मैचिदिति शिष्याशक्यनिर्वचनगुणगरिम्णे नमः । यद्वा एतच्छास्त्रसाध्यमोक्षहेतुतत्त्वज्ञानविषयायात्मन एवायं नमस्कारः । विद्या आत्मसाक्षात्कारः सैव तत्त्वप्रकाशकत्वात् सन्ध्या । तदुदयोद्रेकात् दृढतरसंस्कारजननात् । अविद्या आत्ममिथ्याज्ञानं सैव तत्त्वज्ञानविरोधित्वात् रागजनकत्वाद्वा रजनी । तस्याः क्षये सति यदात्मस्वरूपमुदेति मोक्षलक्षणप्रयोजनभाग्भवति । तस्मै कस्मैचित्सर्व्वोत्कृष्टाय विश्वतस्त्विषे योगजधर्म्मसाचिव्याद्विश्वविषयकज्ञानाय नमः ॥ १ ॥

---

नाव्याप्तिरित्याहुः । केचित्तु द्वीपपदं न भारतवर्षपरम् । कुरुक्षेत्रदेशे दण्डद्वयरात्रावव्याप्तिः । तत्र ज्योतिःशास्त्रस्य प्रमाणत्वात् । तथा चैतद्द्वीपपदं तत्तद्देशपरम् । न चाननुगमः । कुत्र देशे कः कालविशेषो रात्रिरित्यनुगतस्यैव लक्ष्यत्वादिति वदन्ति ।

न च निशि वह्निगतरविरश्मिसत्त्वादसम्भव इति वाच्यम् । तदा तत्र रविरश्मित्वाभावात् । तस्याशुविनाशित्वात् तदारम्भकपरमाणुभिरन्यतेजसामारम्भात् । अन्याप्रविष्टेति विशेषणाद्वा । प्रकाशकत्वेति विशेषणाच्च सौरत्रसरेणुसत्त्वेऽप्यसम्भवः । यदि सकलपदमप्यस्ति तदा तत्सूचनायैव जालपदम् । प्रलयेऽतिव्याप्तिवारणाय विशेषपदं कार्य्यद्रव्याधारपरम् । यद्वा यावद्रविरश्मिजालसंसर्गाभावावच्छिन्नैतद्द्वीपावच्छिन्नत्वं विवक्षितम् । तेन प्रलये न प्रसङ्गः । तदा[illegible]भावेन विशेषणाभावाधीनविशिष्टाभावसत्त्वात् । न च विशेष्यपदं व्यर्थम् । [illegible] नित्यद्रव्यस्य वारणीयत्वात् । उपाधेरेव रात्रित्वात् ।

[illegible] निरस्तैतद्द्वीपवर्त्तिरविरश्मिकत्वमेव कालस्य रात्रित्वं लाघवात् । न तु

**यतो द्रव्यं गुणाः कर्म्म तथा जातिः परापरा ।**
**विशेषाः समवायो वा तमीश्वर मुपास्महे ॥ २ ॥**

एतच्छास्त्रप्रतिपाद्यपदार्थोद्देशं कुर्व्वन्नेव नमस्कारवद्रूपान्तरेणापि सर्व्वहेतुभगवदुपासनमभीष्टसाधनमिति दर्शयति । यत इति । उत्पत्तिज्ञप्तिहेतुत्वं नित्यानित्ययोर्यथायोगमत्र बहुत्वेऽप्यात्मनः प्राधान्यख्यापनाय द्रव्यमित्येकवचनम् । तद्विषयाणां श्रवणादिप्रतिपत्तीनां बहुत्वं गुणा इति बहुवचनेन व्यज्यते । परा व्यापिका । अपरा व्याप्या । वाशब्दः समुच्चये ।

यद्वा यत ईश्वरात् । द्रव्यं हिरण्यादि । गुणाः शास्त्रादयः । कर्म्म हिताहित हेतुव्यापारः । जातिः परा उत्कृष्टा ब्राह्मणत्वादिः । अपरा अधमा चण्डालत्वादिः । जातेरनिमित्तकत्वेऽपि तज्जातीय

तद्गर्भ्भमिति । सन्ध्यापि रात्रिरेव । सन्ध्यारात्र्योर्धर्म्मशास्त्रे पृथगभिधानं गोवृषन्यायात् । तत्र प्रयोजनान्तरवदिहापि दोषातिशयादिप्रयोजनप्रदर्शनार्थमित्यस्वरसादाह । यद्वेति । ल्यप्लोप इति । न च कर्म्मयोगं विना न सप्तमीति वाच्यम । उद्देतीत्यस्योदयगिरिशिखरमारोहतीत्यर्थ इति प्रदर्शनात् । उपसर्गार्थस्यैव कर्म्मत्वादिति भावः । ननु ल्यबर्थे पञ्चम्या न शक्तिर्मानाभावात् । न लक्षणा सुब्विभक्तौ तस्याव्युत्पत्तेरिति चेन्न । कर्म्मणीति सूत्रस्वरसात् कर्म्मत्वमात्रे पञ्चमी । न च ल्यबर्थाभावः । ल्यप्लोप इति पञ्चमीविधानेन लुप्तल्यबन्तस्यैव तद्बोधकत्वात् । सैवेति । यद्यप्यात्मसाक्षात्कारः तत्त्वप्रकाशः न तु प्रकाशकः तथाप्युत्तरप्रकाशव्यक्तिं प्रति पूर्व्वप्रकाशव्यक्तिहेतुत्वान्न दोष इत्याहुः । तत्त्वप्रकाशकत्वं तत्त्वविषयत्वम् । तत्त्वविषयता च क्वचित् प्रतिपत्त्यनुबन्धितया क्वचिद्व्यापारानुबन्धितयेत्यन्ये । मिथ्याज्ञानमिति तज्जन्यवासनेत्यर्थः । नपुंसकत्वानुपपत्तेराह आत्मस्वरूपमिति ॥ १ ॥

अर्थानां प्रविवेचनाय जगता मन्तस्तमःशान्तये
सन्मार्गस्य विलोकनाय गतये लोकस्य यात्रार्थिनः।
तत्तत्तामसभूतभीतय इमां विद्यावतां प्रीतये
व्यातेने किरणावली मुदयनः सत्तर्कतेजोमयीम् ॥३॥

शरीरोत्पत्तिस्तद्धेतुका। विशेषा इतरेभ्योऽतिशयरूपाः। समवायो मेलकः। सदसद्भ्यां महेत्येतत्सर्वं यतः ईश्वरात् स उपास्यत इत्यर्थः। यद्वा प्रचितो नमस्कारो बलवत्तरविघ्नवारणायालमिति नमस्कार एवोपासना ॥ २ ॥

प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयं प्रयोजनञ्चाह। अर्थानामिति। अर्थाः पृथिव्यादयः पदार्था घटादयश्च तेषां प्रविवेचनाय इतरभेदानुमित्यै साक्षात्काराय च। तद् यदर्थं तदाह अन्तरिति। अन्तस्तमः आत्मनि मिथ्याज्ञानं गृहान्तर्वर्त्तिध्वान्तञ्च। वहिस्तमसा मरणेनैव निरासात्। तथाचात्मभेदप्रतियोगितया पृथिव्यादयोऽप्यत्र विवेक्तव्या इत्यर्थः। जगतामात्मश्रवणाधिकारिणामशेषभुवनानाञ्च। तत्प्रयोजनमाह। सन्मार्गस्येति। मोक्षभूमेरीप्सितायाः सन्मार्ग उपायः प्रमाणं श्रेष्ठं वर्त्म च। तत्प्रकृष्टज्ञानार्थं तमःशान्तिरित्यर्थः। तदपि यदर्थं तदाह गतय

---

साक्षात्काराय चेति। साक्षात्क्रियतेऽनेनेति व्युत्पत्त्या साक्षात्कारहेतुर्गृहान्तर्वर्त्ती आलोक उक्तः। तेन तद् यदर्थमिति सूर्य्यपक्षे न विरुद्धमित्याहुः। आत्मभेदेति आत्मनिष्ठभेदेत्यर्थः। मोक्षेति। यद्यपि तत्त्वज्ञानेन मिथ्याज्ञानं निवर्त्त्यते इति मिथ्याज्ञाननिवृत्तेर्न प्रमाणत्वज्ञानं प्रति प्रयोजकत्वं तथापि व्यक्तिविशेषे

इति । तत्रार्थिनो मोक्षगमनार्थिनो ग्रामाद् ग्रामान्तरमीयासोश्च गतये प्राप्तये गमनाय च । ननु तदर्थकाः प्राचीननिबन्धाः सन्ति किमनेन ग्रन्थेनेत्यत आह । तत्तदिति । ते ते तामसाः कुतर्काभ्यासजनिततमोगुणप्रधानाः नास्तिकाः नक्तञ्चराश्च भूतास्तेषां भीत्यै । प्राचीननिबन्धाश्च सौगताद्युत्थापितकुहेतुसन्तमसाच्छादिता स्तत्त्वज्ञानाय न पर्य्याप्ता इति तन्निरासाय । विद्यावतां श्रुतिवाक्यजातश्रवणवतां मननार्थिनां श्रुत्यध्ययनशालिनाञ्च । अनेन ग्रन्थेनात्ममननविधानात् । सूर्य्योदये सति वैदिककर्म्मानुष्ठानाच्च । प्रीतये । उदयनः आचार्य्यः । ऊर्द्धं अयनं यस्येति व्युत्पत्त्या सूर्य्यश्च । किरणावलीं ग्रन्थम् । किरणपरम्पराञ्च । व्यातेने व्यातनोतु । आशंसायां भूतवच्चेति आशंसायां लिङिति मतमयुक्तम् । तत्र सूत्रे भूतसामान्यस्यैवातिदेशात् । भूतविशेषे विहितयोर्लङ्लिटोरनतिनिर्द्देशात् । तिङन्तप्रतिरूपकोऽयं निपातः । चक्रे सुबन्धुः सुजनैकबन्धुरितिवदिति केचित् । वस्तुतोणलुत्तमोवेति ज्ञापकात् कर्त्तुरपरोक्षेऽपि लिट् साधुः । ग्रन्थकरणारम्भसम्भ्रमवशेन चित्तविक्षेपोवा । ऋजवस्तु नायमाचार्य्यस्य श्लोकः किन्त्वन्यस्येति समादधुः ॥ ३ ॥

---

तथात्वसम्भव इति भावः । किरणपरम्पराञ्चेति । तत्र तेजःपदेन प्रभायाः किरणावयवस्य वा विवक्षमाणत्वमतो न तेजःकिरणयोरैक्येनान्वय इति भावः । ननु चात्र कथं परोक्षे लिडित्याशङ्कायां कस्यचित् समाधानमाशङ्क्य निराकरोति । व्यातनोत्विति । वस्तुत इति । अत्र ज्ञापकमिदं चित्तविक्षेपादि लिट्परत्वेनान्यथासिद्धमतएव बहु जगद किलाहमित्यादौ चित्तविक्षेप एव तथा प्रयोग इति चिन्त्यम् ॥ ३ ॥

अतिविरसमसारं मानवार्त्ताविहीनं
प्रविततबहुवेलप्रक्रियाजालदुःस्थम् ।
उदधिसममतन्त्रं तन्त्रमेतद्वदन्ति
प्रखलजड़धियो ये तेऽनुकम्प्यान्त एते ॥ ४ ॥

---

अतिविरसमिति । एतत् तन्त्रं शास्त्रम् उदधिसममतन्त्रम् असम्यक्शास्त्रं ये वदन्ति । प्रखलाः प्रकर्षेण खलाः दोषैकदृश्वानो जड़धियो विशेषादर्शिनस्ते नैतद्ग्रन्थेनानुकम्प्यान्ते सम्यगवबोध्यन्ते । उदधिसाम्यञ्च सम्यक्त्वासम्यक्त्वाभ्याम् । तत्रासम्यक्त्वपक्षे रसाः शृङ्गारादयस्ते अतिशयेन विगता यस्मात् तदतिविरसम् । अथ-चातिक्रान्ता वयः पक्षिणो यस्मात् तादृशो रसः पानीयं यत्र लवणाकरत्वात् । असारम् । सारः प्रयोजनं तच्छून्यम् । मोक्षस्य तुल्यायव्ययत्वेनापुरुषार्थत्वात् । अथच सारो धनं तद्रहितम् उद्धृतरत्नत्वात् । मानेति । शब्दादिषु मानान्तरेषु सत्सु प्रत्यक्षानु मानयोरेवाङ्गीकारात् मानवार्त्तया शास्त्रान्तरापेक्षया विशेषतो हीनम् । अथच मानमियत्ता तत्संकथयापि हीनमपरिमित मित्यर्थः । प्रविततेति । प्रकर्षेण वितता विस्तीर्णा बहुवेला बहुक्षणा प्रक्रिया पाकजद्वित्वाद्युत्पत्तिविनाशप्रकार स्तस्या जालं समूहः सैव वा आनायो दुरधिगमत्वात् । तच्चिन्तयैव पुरुषायुष-पर्य्यवसानेन फलासम्बन्धात् । तथा प्रवितता बहुवेला अति-

---

ननु तन्त्रमतन्त्रमिति व्याहृतमतोऽप्राशस्त्येनापि दर्शयति । असमर्थ्यमिति ॥ ४ ॥

शास्त्रारम्भे सदाचारपरम्परापरिप्राप्ततया काय-वाङ्मनोभिः कृतं परापरगुरुनमस्कारं शिष्यान्

---

शयिता । अतिवेलशब्दवत् बहुवेलशब्दस्यापि अतिशयितार्थत्वात् । एवम्भूता प्रकृष्टा क्रिया कर्म्म तज्जालं महावराहक्षुरक्षोभ सुरासुरमथन रामशरानलदाहरूपं तेन दुःस्थम् । समीचीनत्वपक्षे अतिविरसं रसविगममतिक्रान्तम् । रसो मोक्षेच्छा । मोक्षे पुरुषार्थत्वस्योपपाद्यमानत्वात् । मधुरादिषड्विधरसव्युत्पादनाद्वा । अथवा अतिशयिता वयः पक्षिणो गरुड़ादयो यत्र तादृग्रसः पानीयं यस्य । न सारमुत्कृष्टं यस्मात् । मोक्षसाधकत्वात् । अथच न सार उत्तमो यस्मादित्यसारं रत्नाकरत्वात् । यद्वा अकारो विष्णुवचनः । अः सारो यत्रेत्यसारम् । तच्छयनत्वात् । मानवार्त्तया अविहीनमिति नञः प्रश्लेषः । शब्दादीनामनुमानएवान्तर्भावात् । अथच मानेत्यादिना महाशयत्वमेवोक्तम् । प्रगता विततबहुवेलप्रक्रियाजालेन दुःस्था दुःस्थितिः यत्र । अत्र प्रक्रियायाः सम्यग्व्युत्पादनात् । तथा प्रविततं यद् बहुवेलं अनुवेलं सांयात्रिकाणां प्रक्रियाजालं गतागतसमूहस्तेन दुःस्थम् । अनेन परोपकारित्वमुक्तम् ॥ ४ ॥

ननु नमस्कारे प्रवृत्तिर्न युक्ता फलाभावात् । नापि समीहितनिर्विघ्नसिद्धिस्तत्फलं मानाभावात् । भावेऽपि वा प्रणामद्वयं व्यर्थम् । एकेनैव तत्सिद्धेः । तन्निबन्धनञ्च व्यर्थम् । न हि तन्निबन्धनमपि तदङ्गमित्याह । शास्त्रेति । सदाचारानुमितकर्त्तव्यता

शिक्षयितुमादौ निबध्नाति। प्रणम्येति। कर्त्तव्यापेक्षया प्रणामस्य पूर्व्वकालत्वात् क्त्वानिर्द्देशः। भक्तिश्रद्धातिशयलक्षणः प्रकर्षः प्रशब्देन द्योत्यते।

---

बोधकश्रुतिरेवात्र मानम्। नमस्कारद्वयञ्च बलवत्तरविघ्नवारणाय। निबन्धस्येप्सितविघ्नशान्तये देवताप्रणामः कर्त्तव्य इति शिष्यशिक्षार्थमित्यर्थः। सत्त्वञ्च न यद्यपि वेदविहितार्थानुष्ठातृत्वं यावत्तदेकदेशविकल्पाभ्यां स्वरूपासिद्धातिव्याप्त्योः प्रसङ्गात्। वेदनिषिद्धाननुष्ठातृत्वे सतीति विशेषणे अवशिष्टादेरप्येतत्त्वापत्तेः। नापि (१) क्षीणदोषपुरुषत्वम्। इदानीन्तनानामसत्त्वेन तदाचारस्य वेदाननुमापकत्वापत्तेः। नापि (२) ज्ञानवत्त्वे सत्येतत्-

---

(१) क्षीणेति। दोषपदं रागद्वेषमोहपरम्। तथाच लक्षणत्रयं बोध्यम्। तथाहि समानाधिकरणरागप्रागभावासहवृत्तिरागध्वंसवत्पुरुषत्वं रागपदस्थाने द्वेषादिपदप्रक्षेपेण बोध्यम्। पुरुषपदञ्च कालेऽतिव्याप्तिवारणाय। एतेन क्षयपदेनाभावमात्रं विवक्षितम्। न तु ध्वंसः पुरुषपदवैयर्थ्यापत्तेरित्यपास्तम्। असत्त्वेऽशिष्टत्वे।

(२) ज्ञानवत्त्वे सतीति। एतत्कालीनेत्यभावविशेषणम्। एतच्च प्रतियोगिसमवायिदेशेऽपि समवायावच्छेदेनात्यन्ताभाव इति वादिमते बोध्यम्। घटादावतिव्याप्तिवारणाय सत्यन्तम्। यद्यप्येतदपि वृक्षादावतिव्याप्तं तथापि प्रकृष्टज्ञानवत्त्वे सतीत्यर्थः। ते चातिमन्दान्तःसंज्ञा इति भावः। जन्मान्तरीयतादृशमिथ्याज्ञानात्यन्ताभावमादाय बौद्धेऽतिव्याप्तिवारणाय एतत्कालीनेति। तथाच यदात्यन्ताभाववत्त्वं तदा शिष्टत्वं इति भावः। इदं रजतमित्यादिभ्रममादाय अव्याप्तिर्माभूदत उक्तमदृष्टसाधनत्वविषयकेति। यद्यपि शिष्टस्यापि क्वचिददृष्टासाधनेऽपि साधनत्वभ्रमसम्भवाद्दोषतादवस्थ्यं तथाप्यदृष्टं तत्साधनञ्च नास्तीति

कालीनादृष्टसाधनताविषयकमिथ्याज्ञानात्यन्ताभाववान् अस्मिन् काले शिष्टः (३) निषिद्धकर्म्मासक्तस्यादृष्टसाधनतागोचरमिथ्याज्ञानविधुरस्यापि तत्त्वापत्तेः। (४) तथापि वेदप्रामाण्याभ्युपगन्तृत्वम्। न चात्रापि कार्त्स्न्यैकदेशविकल्पः। तत्तत् तात्पर्य्यविषये कार्त्स्न्यस्यैव विवक्षितत्वात्। विशिष्य तत्तत् तात्पर्य्यमविदुषामपि तदर्थमनुतिष्ठतां तात्पर्य्यविषये वेदः प्रमाणमिति सामान्यतस्तदभ्युपगमस्य सत्त्वात्। तदाचारे च धर्म्मशास्त्रानिषिद्धत्वरूपमविगीतत्वमलौकिकविषयत्वञ्च विशेषणम्। तेन निषिद्धतदाचारे भोजनाद्याचारे च न व्यभिचारः। (५) एवञ्च प्रयोगः। नमस्कारः वेदबोधितकर्त्तव्यताकः अलौकिकविषयाविगीतशिष्टाचारत्वात् दर्शवत्।

एवंरूपमिथ्याज्ञानाभाववत्त्वं बोध्यम्। ध्वंसमादाय बौद्धादावतिव्याप्तिवारणाय अत्यन्तेति। न च मिथ्याज्ञानस्याव्याप्यवृत्तितया तत्सत्त्वकालेऽपि तदत्यन्ताभावसत्त्वादतिव्याप्तिरिति वाच्यम्। प्रतियोगिव्यधिकरणत्वस्यात्यन्ताभावविशेषणत्वात्।

(३) निषिद्धेति। यद्यपि तदा तस्य शिष्टत्वेऽपि न क्षतिः तदाचारे चाग्रे विशेषणप्रक्षेपेण वेदानुमाने न कोऽपि दोषः। अन्यथा सिद्धान्तेऽप्यगतेः। तथाप्यस्मिन् काल इति विशेषणोपादानबलेन विशेषणनिरपेक्षवेदानुमापकत्वलाभात्। अन्यथा तद्विशेषणप्रक्षेपे कानुपपत्तिरेतदुक्तम्। तदा तस्य शिष्टत्वव्यवहाराभावात् अतिव्याप्तिरित्यप्याहुः।

(४) लाघवाद्वेदप्रामाण्येत्यादिकमेव शिष्टत्वमुचितं व्यभिचारवारणोपायस्यानुपदमेव दर्शयिष्यमाणत्वादित्यभिसन्धायाह। तथापीति। एतल्लक्षणं प्रत्यक्षप्रकाशे विपश्चितम्।

(५) ननु शिष्टाचारस्य वेदव्यधिकरणत्वात् कथं तदनुमापकत्वमतोऽनुमानप्रकारमाह। एवञ्चेति। लौकिकेति। ननु शिष्टकर्तनिष्फलनलताडनादौ

कायेति। ननु कायिकादिषु नमस्कारत्वस्यैकस्याभावात् भिन्नानामेषां कथं सकृदुच्चरित प्रणम्येति पदेन निबन्धनम्। अत्र ज्ञानविशेषपूर्व्वकत्वमप्रतिसन्धाय कायिकादौ नमस्कारपदाप्रयोगात् नागृहीतविशेषणन्यायेन (६) मानस एव नमस्कारोऽन्यत्र लक्षणा। न च तस्यापि परकीयचेष्टाशब्दविशेषाभ्यामेवा

व्यभिचार। न च न विप्रः क्षत्रियो भवेदित्यादिना तस्य वेदनिषिद्धत्वेन स तत्र व्यभिचार इति वाच्यम्। शिष्टपदवैयर्थ्यापत्तेः। चैत्यवन्दनादिव्यभिचारवारणस्याविगीतपदादेव सम्भवात्। न च लौकिकत्वादेव तस्य स तत्र व्यभिचार इति वाच्यम्। लौकिकत्वं ह्यन्वयव्यतिरेकादिप्रमापि बलवदनिष्टाननुबन्धीष्टसाधनताकत्वम्। न च तत्र तदस्ति। दृष्टादृष्टफलाभावात्। न च शिष्टपदमिष्टसाधनतांशे भ्रमरहितपरमतो न व्यभिचार इति वाच्यम्। सदाचारेति पूर्व्वग्रन्थविरोधात्। तच्छब्देन पूर्व्वप्रक्रान्तस्यैव परामर्शात्। प्रमादाच्छूद्रसम्पृक्तान्नभोजने तथापि व्यभिचाराच्चेति चेत्। अत्र वदन्ति। वेदेत्यादिना शिष्टव्यवहारप्रयोजकं शिष्टत्वमुक्तम्। वेदानुमापकहेतौ तूपलक्षणमेव तत्। तेनेष्टसाधनत्वांशे भ्रमरहितत्वस्योपलक्ष्यत्वात्। तथा चात्र शिष्टपदं तत्परमेव। तेन निष्फले कर्म्मणि न व्यभिचारः। न चाविगीतपदेन तद्वारणमिति वाच्यम्। विगीतत्वं हि वेदनिषिद्धत्वं तच्च तत्र नास्ति सर्व्वथा दृष्टफलाभावात्। प्रसक्त्यभावे वैदिकनिषेधासम्भवात्। निषेधस्य कथञ्चित् प्राप्तविषयत्वात्। लौकिकत्वञ्च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणबोधितेष्टसाधनताकत्वम्। एतच्च भोजनादौ व्यभिचारवारणाय। नचैवमविगीतपदवैयर्थ्यं अगम्यागमनादेर्लौकिकपदेन वारणादिति वाच्यम्। वेदबोधितकर्त्तव्यताविशिष्टबलवदनिष्टाननुबन्धीष्टसाधनताकत्वस्य साध्यतया श्येनयागे व्यभिचारवारणत्वात्। तस्य शब्दबोधितेष्टसाधनताकत्वेनालौकिकत्वात्। एतदपि श्येनयागे बलवदनिष्टाननुबन्धित्वं न गम्यते तत्र बोध्यमिति॥

(६) मानस एवेति। तथाच जातिविशेष एव तत्पदशक्यतावच्छेदक इति

नुमानमित्यविनिगमः । तावतापि तावत्स्वैकजात्यसिद्धिः । अननु-गतैरपि व्याप्यैस्तदनुमानसम्भवात् । तथाच कायेन वाचा चोप-लक्षितेन मनसा कृतमिति योजनेत्येके । कायिकादौ नमस्कारत्वं जातित्रयमेवेति । तत्र नमस्कारपदं नानार्थमेव । पदावृत्त्यानु-प्रणम्येति पदात् तन्निबन्धनमित्यन्ये ।

ननु प्रणामस्य पूर्व्वकालत्वं न संग्रहापेक्षया । मुनिप्रणामेन व्यवधानात् । अव्यवहितपूर्व्वकालत्वस्य क्त्वावाच्यत्वात् । नापि मुनिप्रणामापेक्षया । मुनिप्रणामे तदभावात् । तत्कथं क्त्वानिर्देशः । इत्यत आह । कर्त्तव्येति । प्रणामत्वेन द्वयोरपि प्रणामयोः कर्त्तव्यसंग्रहापेक्षया पूर्व्वकालत्वात् क्त्वानिर्देशप्रयोग इत्यर्थः ।

---

भावः । अविनिगम इति । तथाच कायिकादिकनमस्कारपदवाच्यमिति भावः । तावतापीति । जातिसाङ्कर्य्यात् कायिकवाचिकयोरेकजात्यसिद्धेः । शक्यतावच्छे-दकाभावात् तदभयं न नमस्कारपदवाच्यमित्यर्थः । कथं तर्हि ताभ्यां तदनुमान-मित्यत आह । अननुगतैरिति । अयं ज्ञानविशेषरूपनमस्कारवान् उन्मादाद्य-हेतुकदण्डवत्पतनादिकारित्वात् इत्यादिप्रकारेणानुमानं बोध्यम ॥ मनसेति मनोव्यापारैरित्यर्थः । तेन मनोभिरिति बहुवचनं नानन्वितमिति भावः । ननु तावत्स्वित्यादिना चेष्टामात्रवृत्तिजात्यानपवादाद्विनिगमकाभावः तदवस्थ एव । मनःपदस्य मुख्यार्थत्यसम्भवे व्यापारलक्षणाकल्पनमयुक्तं चेत्यनुशयं हृदि निधायाह । इत्येक इति । जातित्रयमित्युपलक्षणम् । सङ्करभयेनाधिकस्यापि सम्भवात् । अन्येत्यित्यस्वरसोद्भावनम् । तद्बीजन्तु तात्पर्य्ये सकृदुच्चारितादपि नानार्थसमायो युगपद्बोधदित्याद्यावृत्तिकल्पनमयुक्तम् । तात्पर्य्याभावे चावृत्तिरपि न स्यात् । स्वाप-कर्षबोधनानुकूलतावच्छेदकजातिमत्त्वस्य प्रवृत्तिनिमित्तस्य सम्भवाच्च नानार्थ-तापि ॥

यद्वा नात्र विशेषापेक्षा किन्तु कर्त्तव्यमात्रापेक्षा (७) सा चोभयोरप्यस्तीत्यर्थः। इति सम्प्रदायविदः। नवीनास्तु क्त्वाप्रत्ययस्य पूर्व्वकालत्वमात्रार्थत्वात् तस्य च व्यवधानेऽपि सम्भवान्नायमाक्षेपः। प्रधानक्रियान्वयस्याभ्यर्हितस्य त्यागप्रसङ्गात् न समाधानमपीति मत्वान्यथा व्याचक्षते।

ननु नमःपदेनापि नमस्कारसिद्धेः किमर्थं तत्पूर्व्वकालताबोधनं इत्यत आह। कर्त्तव्येति। कर्त्तव्यमात्रापेक्षया प्रणामस्य पूर्व्वकालत्वभावे दर्शिते शिष्या अपि तथा कुर्व्वन्त्विति शिष्यशिक्षार्थमित्यर्थः। ननु समानकर्त्तृकत्वं क्त्वावाच्यं ततो नियमेन तदुपस्थितेः पूर्व्वकालत्वं तथात्वेऽप्यशक्यम्। तस्याक्षेपतोऽपि लब्धेः। यद्यप्येकः कर्त्ता युगपदनेकां क्रियां करोत्येव यथा यज्ञोपवीतं वहन् पन्थानमोक्षमार्गोऽधीयानो गच्छतीति तथापि (८) प्रधानक्रिया

(७) सा चेति। कर्त्तव्यमुनिप्रणामापेक्षया ईश्वरप्रणामे कर्त्तव्यमंपक्षापेक्षया मुनिप्रणामे चाव्यवधानमस्त्येवेत्यर्थः। पूर्व्वकालत्वमात्रार्थत्वादिति। न चैवं भोजनानन्तरमासादिना व्यवधानेऽपि भुक्त्वा व्रजतीति प्रयोगः स्यादिति वाच्यम्। तथा विवक्षाया मिष्टत्वादिति भावः। अत्रेदमनभिमतबीजमाक्षु। प्रतीतिबलेनाव्यवधानपर्य्यन्तं शक्यम। न हि भुक्त्वा व्रजतीत्यत्र प्रातर्भोजनसायंगमनयोः प्रतीतिरपि तु भोजनमात्रापेक्षया विलम्बितस्तस्मिन् मत्यत्र चलित इति। अतएव क्त्वान्तः कारणताप्रहोऽपि। न च भोजनानन्तरमव्यवहितापिसमकाल गत्यभावाद सम्भवोदर्मिति वाच्यम्। क्रियान्तरानुकूलविलम्बाभावस्याव्यवधानपदार्थत्वात तदनुकूलक्रियायास्तदव्यवधायकत्वात्। अन्यथा व्यापारव्यवहितानामिन्द्रियादीनामजनकत्वापत्तेरिति। तथात्वेऽपीति नियतोपस्थितिकत्वेऽपीत्यर्थः॥

(८) प्रधानक्रियामिति। प्रधानत्वं क्रियायामसमानकालीनत्वम। तथाच

मनेकामेकः कर्त्ता कदा न करोतीति आक्षेपो युक्तः। (९) अथैवं भुक्त्वा व्रजतीत्यादौ व्रजनक्रियाया अपि पूर्व्वकालत्वेनैककर्त्तृकत्वोपपत्तौ नियतक्रियापूर्व्वभावबोधानुपपत्तिः। एककर्त्तृकक्रिययोः पूर्व्वोत्तरभावनियमे पूर्व्वोपस्थितक्रियायामेव पूर्व्वकालत्वं युज्यत इति चेन्न। व्रजति भुक्त्वेत्यत्र तदभावात्।

(१०) न चेदं नियामकम्। न हि पूर्व्वभाविक्रियावाचकं पदं प्राक् प्रयुज्यत इति नियमः। भुक्त्वा व्रजतीत्यत्र हि भोजनव्रजनक्रिययो रेकः कर्त्तेति नानुभवः। अपि तु व्रजनक्रियया सह भुजिक्रियैककर्त्तृकेति। तथाच भुजिक्रियायाः प्राधान्येनोपस्थितेः तदपेक्षमेव पूर्व्वकालत्वं कल्प्यते। अपि च मुखं व्यादाय स्वपितीत्यत्र क्त्वाप्रत्यये पूर्व्वकालत्वं प्रतीयते। तत्कथं क्त्वावाच्यत्वं तस्योपपद्यते। भिन्नकर्त्तृकत्वेऽपि क्त्वा दर्शनात्। समानकर्त्तृकत्व-

समानकालीनसमानकर्त्तृकानेकक्रियात्वेन लिङ्गेनाक्षेपात् पूर्व्वत्वधीरिति न तत्रापि शक्तिरिति। न चासमानकालीनत्वं कुत उपस्थितमिति वाच्यम। अन्यलभ्यतया पूर्व्वकालत्वस्याशक्यत्वेऽपि तस्य क्त्वाप्रत्ययशक्यत्वाभ्युपगमात्। भिन्नकालीनप्रयत्नसाध्यत्वं क्रियायां प्रधानत्वमित्यन्ये॥

(९) अथेति। व्रजनक्रियाया अपीति। ननु व्रजतीति लडर्थस्य वर्त्तमानकालत्वेन व्रजने पूर्व्वकालत्वबाधासैवमिति चेत्। न। व्रजनकालस्य वर्त्तमानत्वेऽपि भिन्ननिरूपितपूर्व्वकालत्वाविरोधात्। भुक्त्वा जगामेत्यादौ तथाप्यप्रतीकाराच्च। भूतेऽपि लटप्रयोगदर्शनाच्छङ्केयमित्यप्याहुः॥

(१०) ननु क्त्वान्तस्य पश्चात् प्रयोग एव। नेत्यत आह। न चेति। स्वेच्छाधीनपदप्रयोगस्यानियमादिति भावः। केचित्तु पूर्व्वोक्तमेव स्पष्टयति न चेती-

मपि न नियमेनोपतिष्ठत इति चेत् न। क्रियान्तर मध्याहृत्य तत्समाधानस्य साम्प्रदायिकत्वात्।

अत्रोच्यते। (११) अनेकक्रियाकर्त्रैक्यस्य प्रधानक्रियापेक्षोत्तर कालत्वेनाप्युपपत्तेः। पूर्व्वकालत्वस्य न नियमेनाक्षेपः। न वा समानकर्त्तृकत्वेन तदाक्षेप्तुं शक्यतेऽपि। तद्धि एककृतिसाध्यत्वं वा एकजातीयकृतिसाध्यत्वं वा कृत्याश्रयैक्यं वा। नाद्यः भुक्त्वा व्रजतीत्यादौ कृतिभेदात्। न द्वितीयः नानापुरुषकृतीना मप्येक जातीयत्वात्। नान्त्यः एककृतिसाध्ये युगपदुत्पन्ननानात्वग-

त्वाद्युः। नेति। भुक्त्वेति क्त्वावाच्यसमानकर्त्तृकत्वस्य प्रकृत्यर्थएवान्वयनियमादतएव वैपरीत्येनापि नानुभव इति भावः। तदपेक्षं तच्चिन्त्यम्॥

(११) अनेकक्रियेति। नियतपूर्व्वक्रियापूर्व्वत्वाक्षेपकलिङ्गाभावादिति भावः। न च भुजिक्रियायाः प्राधान्येनोपस्थितेः तद्गतमेव पूर्व्वकालत्वं कल्प्यत इति वाच्यम्। प्राधान्योपस्थितिर्हि शाब्दबोधे आकाङ्क्षाप्रयोजकत्वेन कार्य्यानुमिया- मिका स्यात् प्रकृते तु आक्षेपोऽनुमानं तत्र व्याप्तिपक्षधर्म्मते तन्त्रमिति तदधी- नान्यतरपौर्व्वापर्य्यावधारणेऽपि न प्रधानक्रियापूर्व्वत्वधीस्तथा लिङ्गाभावात्। न चाक्षेपलभ्यस्यापि शाब्दबोधविषयत्वमित्याकाङ्क्षावशात् प्राधान्येनोपस्थितक्रियाया- मेव तदन्वयधीरिति वाच्यम्। शाब्दीत्यादि न्यायेनातथात्वात्। अतएव भुक्त्वा व्रजति भुक्त्वा जगामेत्यादौ व्रजनादेः कालान्तरसम्बन्धित्वेन उपस्थिततया कालान्- न्वयनिराकाङ्क्षतया साकाङ्क्षभुजिक्रियायामेव पूर्व्वत्वान्वय इति निरस्तम्। तदा भुक्त्वा जगामेत्यत्र तत्कालसम्बन्धित्वेनोपस्थिते भोजने पूर्व्वत्वानन्वयप्रसङ्गाच्च। यदि च भिन्ननिरूपितपूर्व्वत्वान्वयेन विरोधस्तदा व्रजनादावपि तुल्यम्। न चेति। नचा समानकालीनसमानकर्त्तृकानेकक्रियात्वेन तदाक्षेपे न दोष इति वाच्यम्। परेण समानकर्त्तृकत्वमात्रस्यैव क्त्वावाच्यत्वाभ्युपगमेन तेन रूपेणानुपस्थितेः। व्याप्यताव- च्छेदकरूपेणोपस्थितेरेवाक्षेपाङ्गत्वात्। तस्य तद्वाच्यत्वाभ्युपगमे वा समानकर्त्तृकत्व- भागस्य व्यर्थत्वापत्तेः। यद्यप्येवमपि असमानकालीनानेकक्रियात्वेन तदाक्षेपः सम्भ-

च्छिदादौ व्यभिचारात्। (१२)तस्मादनन्यलभ्यतया पूर्व्वकालता क्त्वः शक्या। तर्ह्युभयमपि शक्यमस्तु नियतं तदुपस्थितेरिति चेन्न। भुक्त्वा व्रजतीत्यत्र भोजनव्रजनकर्त्त्रोरभेदस्य विशेषणविशेष्यभावमहिम्ना वा कार्य्यत्वेनाशक्यत्वात्। भोक्तुं व्रजति पश्यन् व्रजतीत्यत्रैव। न हि लट् तुमुनोरपि समानकर्त्तृकत्वं वाच्यम्। मुखं व्यादाय स्वपितीत्यत्र व्यादानोत्तरमपि स्वापानुवृत्त्या तदभिप्रायेण क्त्वा प्रत्ययः। सुप्त्वा व्याददत इति व्यत्ययात् प्रयोग इति प्रत्यभावपरीक्षायां वाचस्पतिमिश्राः। एवं भूत्वा घटस्तिष्ठतीत्यत्रापि स्थितिपूर्व्वकालविद्यमानत्वविवक्षया प्रयोगः। अस्मद्गुरवस्तु पूर्व्वकालतापि न शक्या। किन्त्वानन्तर्य्यम्। भुक्त्वा व्रजती-

---

वत्येव तथापि न नियतक्रियापूर्व्वत्वधीः स्यात्। असमानकालीनत्वस्य शक्यत्वाभ्युपगमे किमपराद्धं पूर्व्वकालीनत्वेन। तन्न शक्यं किन्तु आक्षेप्यं इति दूषणं बोध्यम्॥

(१२ तस्मादिति। न चैवं क्त्वातः पूर्व्वकालत्वोपस्थितावपि कुतः प्रधानक्रियायां तदन्वयनियम इति वाच्यम्। प्रत्ययस्य प्रकृत्यर्थान्वित स्वार्थबोधकत्वात्। उभयमिति पूर्व्वकालत्वं समानकर्त्तृकत्वञ्चेत्यर्थः। कर्त्त्रोरिति। धर्म्मभेदात् तदुपहितधर्म्मिविवक्षया द्विवचनम। ननु क्त्वः कर्त्तरि शक्तिविरहात् भोजनकर्त्तुरनुपस्थितौ कथमभेदान्वयधीरिति चेन्न। अभिन्नकर्त्तृकत्वे अभेदांशस्यान्यलभ्यत्वेनास्याशक्यत्वेपि कर्त्रंशस्य शक्यत्वाभ्युपगमात्। यद्वा कृतिमात्रस्य शक्यत्वाभ्युपगमाद्भोजनगमनकृत्योरैकाधिकरण्यस्य वाक्यार्थत्वेन भानम। तथाच व्रजनकृतिमान् व्रजन पूर्व्वकालो न भोजनकृतिमानित्यन्वय। न चैवं चैत्रो व्रजति मैत्रो भुनक्तीति वत् चैत्रो भुक्त्वा मैत्रो गच्छतीति भिन्नकर्त्तृकत्वेपि क्त्वाप्रयोगः स्यादिति वाच्यम्। तत्र तस्यासाधुत्वात्। समानकर्त्तृकक्रियायामेव तथात्वादिति। मुखमिति। तथापि प्रधानक्रियायामेव पूर्व्वकालत्वाक्षेपाभ्युपगमात् अनन्यगत्या तथाभ्युपगन्तव्यमिति भाव। अनुभव इति। एतेनानुभव एवात्र विनिगमक इति सूचितम्॥

त्यतो हि भोजनानन्तरं व्रजतीत्यनुभवो व्रजनविशेष्यकः पौर्व्व-कालस्य तु शक्यत्वे व्रजनपूर्व्वकाले भोजनमिति भोजनविशे-ष्यकोऽनुभवः स्यात् । (१३) तस्मात् प्रधानक्रियानन्तर्य्यं शक्यम् । पूर्व्वकालत्वस्त्वानन्तर्य्यनिरूपकत्वेन जघन्यप्रतीकमित्याहुः ।

ननु नत्वेत्यनेनैव नमस्कारनिबन्धात् प्रशब्दो व्यर्थ इत्यत आह । भक्तिश्रद्धेति । (१४) आराध्यत्वेन ज्ञानं भक्तिः । आराधना च गौरवितप्रीतिहेतुक्रिया । वेदादिबोधितफलावश्यम्भावनिश्चयः श्रद्धा । यद्वा भक्तिश्रद्धे ज्ञानत्वाव्याप्यपरजातिविशेषौ ।

ननु प्रजयतीत्यादौ प्रकर्षस्य विजयत इत्यादावतिशयस्याभ्या-

(१३) तस्मात् प्रधानेति । न च प्रकृत्यर्थगतस्वार्थाभावाद्व्युत्पत्तिविरोधः । प्रकृत्यर्थान्वयमात्रव्युत्पत्तेः । प्रकृते चानन्तर्य्यनिरूपकत्वेन भोजनरूपप्रकृत्यर्था-न्वयोऽस्त्येवेति भावः । सुपविभक्तावेव तथा नियमात् क्त्वातथाभावेऽपि अदोष इत्यप्याहुः । एवं भोजनकृतिमान् भोजनानन्तरव्रजनकृतिमान् इत्यन्वयः । न च भोजनस्योभयान्वयदोषः घटेनेत्यादौ घटादेरेकस्य तृतीयोपस्थाप्यकरणैकत्वा-भ्यामन्वयदर्शनादित्याहुः ॥

(१४) आराध्यत्वेनेति । आराधनाविषयत्वेनेत्यर्थः । वेदादीति । फलाव-श्यम्भावनिश्चयः श्रद्धा तत्र निश्चयत्वमप्रामाण्यशङ्कानास्कन्दितत्वम् । तत्र च वेदबोधितत्वं प्रयोजकमिति कृत्वा वेदादीत्युक्तम् न लक्षणान्तर्गतम् । तेन नाननुगम इत्याहुः । भक्तिश्रद्धे इति भावप्रधानो निर्देशः । जातिविशेषौ नमस्कारहेतुज्ञाननिष्ठजातिविशेषौ । नन्वेकज्ञाननिष्ठत्वे तुल्यव्यक्तिकत्वापत्तिः भिन्नज्ञाननिष्ठत्वे यत्रैकमसमूहालम्बनेन नमस्कारः कृतस्तत्राव्याप्तिः । कचिदेक-निष्ठत्वे क्वचिच्च भिन्ननिष्ठत्वे जातिसङ्करापत्तेरितिचेत् । भिन्ननिष्ठत्वेऽपि समूहा-लम्बनकृतनमस्कारस्य न फलदातृत्वमिति वदन्ति । केचित्तु नमस्कारनिष्ठाद्युक्त-जातिविशेषावित्याहुः ॥

गच्छतीत्यादावाभिमुख्यसामीप्ययोः प्रतीतावुपसर्गान्वयव्यतिरेका-नुविधानात् तत्र तेषां शक्तिः। न चैवं प्रतिष्ठत इत्यत्र स्थिति-प्रकर्षधीप्रसङ्गः। तत्र प्रशब्दस्य धात्वर्थविरुद्धार्थत्वात्। तच्च गमनमेव। धातोरिव तस्याप्यनेकार्थत्वात्। न च धातोः सार्थकत्वकल्पनात् तत्रैवानेकार्थत्वं कल्प्यम्। धातूनां बहुत्वात् प्रशब्दस्यैकत्वेन तत्रैव प्रकर्षवाचकत्वकल्पनात्। धातोरनेकार्थत्वं स्वीकृतं तदभियुक्तैर्नोपसर्गस्येति चेत्। न। तथा सत्यर्थविशेषे धातोस्तदनुविधानानुपपत्तेः। अश्वादिपदे तथा दर्शनात्। उप-सर्गाणां धात्वनुविधानं साधुत्वार्थं तेन विना तेषामप्रयोगात्। न च सामान्यवाचकस्य धातोरर्थविशेषे तात्पर्य्यमात्रग्राहकत्वं उपसर्गाणामिति वाच्यम्। प्रकर्षादिविशेषस्याशक्यत्वेन तत्र लक्षणायां युगपद्वृत्तिद्वयविरोधापत्तेः। उपसर्गाणां वाचकत्वमिति केचित्। तन्निरासायाह द्योत्यत इति। इदमत्राभिसंहितम्। प्रकर्षादेरुपसर्गवाच्यत्वे तत्राख्यातार्थभावनान्वयो न स्यात्। प्रकृ-त्यर्थान्वितस्वार्थान्वयबोधकत्वात् प्रत्ययानाम्। ओदनं पचतीत्यत्र ओदनविषयकपाकान्वयवत् प्रकर्षादिविशिष्टधात्वर्थेन तदन्वयः स्यादिति चेत्। (१५) तथापि लाघवादुपसर्गाणां शक्त्यवच्छेद-कत्वं न शक्तत्वम्। प्रोत्तरजित्वेन प्रकृष्टे जये शक्तेः। एवं हि

(१५) तथापि लाघवादिति। उपसर्गाणां शक्तत्वे शक्त्यन्तरकल्पनागौरवं स्यादित्यर्थः। नन्वेवमपि शक्त्यन्तरकल्पनमेवायत आह। एवं हीति। तत्रैव नानाशक्ति यत्र परस्परव्यभिचारि नानाप्रवृत्तिनिमित्तमिति भावः। यद्यपि जि-पूर्वत्वेन शक्तौ शक्त्यन्तरकल्पनागौरवमेव बाधकं तथापि लाघवेन प्रवृत्ति

क्लृप्तविशेष्यशक्तेर्विशेषणविषयत्वमात्रं कल्प्यते। अन्यथा तु शक्त्यन्तरमेवेत्यौपसन्दानिकाशक्तिरेव द्योतनम्। न च जिपूर्व्वत्वेन शक्तिरस्त्विति वाच्यम्। प्रतिष्ठत इत्यत्रोपसर्गस्य शक्ततावच्छेदकत्वकल्पनात्। (१६) यद्वा प्रतिष्ठत इत्यत्र विरोधिलक्षणया धातोर्गमनोपस्थितौ तात्पर्य्यग्राहकः प्रशब्दः। अनन्यलभ्यस्य शब्दार्थत्वात् प्रजयतीत्यत्र विशेष्यवाचकस्य धातोर्विशिष्टे लक्षणैव

निमित्तभेदमात्रस्यैव शक्तिभेदप्रयोजकतया प्रोत्तरजित्वेनापि प्रकृष्टजयत्वावच्छेदेन शक्तौ शक्त्यन्तरमेवेति तत्रापरितुष्यन् समाधानान्तरमाह। प्रतिष्ठत इति। प्रकर्षविशिष्टधात्वर्थान्वयासम्भवेनात्र प्रशब्दार्थगमनस्याख्यातार्थान्वयानुपपत्त्या प्रशब्दधातुभ्यां गमनतदभावयोरुपस्थितौ परस्परविरोधेनान्वयबोधाभावप्रसङ्गेन च प्रोत्तरस्थात्वेनानन्यगतिकतया गमने शक्तिकल्पनादिति भावः।

नन्वत्र प्रशब्दस्याभावमात्रवाचकतास्तु। तथाच धात्वर्थगतिनिवृत्त्यभावस्यैवान्वयात् परम्परया प्रकृत्यर्थप्रत्ययार्थान्वयोऽपीति न शक्ततावच्छेदकत्वकल्पनमिति चेत्। भवेदेवं यदि गतिनिवृत्त्यभावत्वप्रकारिका धीः स्ततो भवेत्। न चैवम्। गमनत्वप्रकारकान्वयानुभवात्। केचित्तु प्रशब्दस्याभावमात्रपरत्वेऽपि धात्वर्थस्य गत्यभावस्य प्रज्ञानत्वेनानुपस्थित्या गत्यभावत्वेनापि धीर्दुर्लभेत्याहुः।

ननु यद्युपसर्गस्य न सार्थकत्वं सुगतिब्राह्मण इत्यादौ सुशब्देन कथं बहुव्रीहिसमास इति चेत्। न। द्योतकत्वेऽपि तस्य तत्र साधुत्वादित्याहुः। नव्यास्तु उपसर्गाणां वाचकत्वे अर्थवदित्यादिनैव प्रातिपदिकसंज्ञायां सिद्धायां निपातस्यानर्थकस्येत्यादेरनुशासनान्तरस्य विभक्तिविधायकस्यानर्थक्यप्रसङ्गः। तथाच तदनुपपत्तिरित्यनर्थकस्य चेत्यभिसन्धानं तेषां द्योतकत्वे बीजमित्याहुः।

(१६) ननु गमनप्रकृष्टजयादौ शक्तिरेव न। कुतो धातूपसर्गशक्तिविनिगमकगवेषणा। लक्षणयैवोपपत्तेः। अनन्यलभ्यस्य शब्दार्थत्वादित्याह। यद्वेति। विरोधीति। विरोधित्वसम्बन्धेनैव लक्षणेत्यर्थः। प्रजयतीति। विशेष्यवाचकस्य विशिष्टे प्रकृष्टजये लक्षणैवेत्यर्थः। ननु शक्ये जयांशे न लक्षणा स्वस्मिन्

तथाभूता हि परमेश्वरनति र्मङ्गल मावहति। कृतमङ्गलेन चारब्धं कर्म्म निर्व्विघ्नं परिसमाप्यते प्रचीयते च। आगममूलत्वाच्चास्यार्थस्य व्यभिचारो न दोषाय। तस्य कर्म्मकर्त्तृसाधनवैगुण्यहेतुकत्वात्।

विशेष्यादिविशिष्टस्यान्यत्वात् प्रादेस्तु तात्पर्य्यग्राहकत्वम्। अनन्यलभ्यस्यैव शक्यत्वात्। व्यतिम इत्यत्र धातुरेव लुप्तोऽर्थप्रत्यायकः। धातुर्लोपमजानत स्तदर्थप्रतीत्यनुदयादिति।

ननु प्रकर्षद्योतनं किमर्थमित्यत आह। तथाभूतेति। उक्त-

सम्बन्धस्याभावात्। न च प्रकर्षांशस्य लक्षणया जयांशस्य शक्त्योपस्थितावभेदान्वयेन प्रकृष्टजयोपस्थितिरिति वाच्यम्। युगपद्वृत्तिद्वयविरोधात्। अतएव गङ्गायां घोष इत्यत्रापि न गङ्गातीरत्वेनोपस्थितिरपि तु वस्तुगत्या तस्यास्तीरत्वेनेति सिद्धान्त इति चेत्। अत्र वदन्ति। विशेष्यवाचकस्य जयवाचकस्य विशिष्टे प्रकर्षविशिष्टे लक्षणेत्यर्थः। तथाच चिन्तामणिकारमते वृत्तिद्वयापत्तेरिष्टतया शक्त्यैव जयांशस्योपस्थितावभेदान्वयाद्विशिष्टोपस्थितिः। न चैकपदोपस्थाप्ययो-रन्वयो न दृष्टचर इति वाच्यम्। सत्याकाङ्क्षादौ अदर्शनमात्रस्यादोषत्वात्। आख्यातार्थकृताविष्टसाधनताया लडर्थवर्त्तमानत्वादेश्चान्वयदर्शनात्। रथो गच्छतीत्यादौ स्वोपस्थ धनञ्जयगतस्वगत्यान्वयबोधकत्वदर्शनाच्च। अनुभावकत्वे च शक्तत्वं प्रयोजकम्। न तु लाक्षणिकत्वाभाव इति धातोरभेदान्वयधीः।

नन्वेवं गङ्गातीरत्वेनापरोपस्थित्यापत्तिरिति चेन्न। तत्र शक्तिलक्षणाभ्यां पूरतीरोपस्थितावपि नाभेदेनान्वयोऽयोग्यत्वात्। न सम्बन्धित्वेन तथानुपस्थितेः। न च सम्बन्धोऽन्वयतया भासत इति वाच्यम्। स्वतन्त्रपदार्थद्वयोपस्थितावभेदान्वयस्यैवाकाङ्क्षाक्रमेण व्युत्पत्तिसिद्धत्वात्। अतएव षष्ठीसमासादौ विभक्त्यर्थे लक्षणा। न च भूतले घटो नेति अत्र घटस्याभाव इतिवदन्वयोऽस्त्विति वाच्यम्। नञ् पदे

रूपप्रकर्षवतीत्यर्थः । ननु मङ्गलस्य (१७) विशिष्टशिष्टाचारत्वे नेष्टसाधकत्वज्ञानेऽपि इष्टविशेषाज्ञानात् कथं तत्र प्रवृत्तिरित्यत आह । कृतेति । नमस्कारस्याशुविनाशित्वात् समीहितसिद्धेश्च कालान्तरभावित्वात् न तत्र साक्षात्साधनत्वमिति द्वारापेक्षायामाह । निर्व्विघ्नमिति । विघ्नध्वंसस्तद्द्वारं । स च समीहितक्रियास्वरूप-

व्युत्पत्तिभेदात् । अतएव घट समवाय इत्यत्र घटस्य समवाय इति नान्वयधीः । न वा घटोऽभाव इत्यत्र तथाधीरिति । एतन्मते गङ्गातीरत्वेन धीरिष्टैवेत्याहुः । नन्वभेदे शक्यसम्बन्धाभावात् न लक्षणेत्यत आह । विशेष्यादिति । यद्यपि विशिष्टस्यार्थान्तरत्वेऽपसिद्धान्तः । अनर्थान्तरत्वे सम्बन्धानुपपत्तिः । तथापि प्रकृष्टे जयस्याभेदरूपसम्बन्धाल्लक्षणोपपत्तिः । न चैवं जयांशेऽपि लक्षणायां न दोष इति वाच्यम् । सम्बन्धतावच्छेदकभेदं विना अभेदसम्बन्धस्य ग्रहीतुमशक्यत्वात् । न हि घटो घट इत्यभेदधीः । प्रकृते च प्रकृष्टत्वेन जयत्वेन चोपस्थितेः भेदग्रहसम्भवात् न चैवं प्रकृष्टजयत्वेनोपस्थिते विशिष्टे जयस्याविच्छिन्नाभेदसम्भवादभेदलक्षणैवास्त्विति वाच्यम् । नीलघटो घट इत्यत्रेव तथाप्यभेदसम्बन्धाग्रहात् अस्तु वा तथा तथापि प्रकृते सङ्गतिरिति । पादैरिति । तथा च तदर्थे तात्पर्यग्राहकत्वमेव द्योतकत्वमिति भावः । लुप्त इति । न चैवं षष्ठीसमासेऽपि षष्ठ्यर्थलक्षणा न स्यात् लुप्तस्मृतषष्ठीतस्तदुपस्थितेरिति वाच्यम् । प्रकृतिं विना प्रत्ययस्य निराकाङ्क्षतया धातुज्ञानं विना शाब्दबोधासम्भवेनात्र तथात्वात् । तदिदमाहुः धातुलोपमिति । राजपुरुषादिस्थले च षष्ठीभानं विनापि लक्षणयाकाङ्क्षानिर्वाहे अन्वयबोधसम्भवेन तथात्वात् । यत्र दैवात् षष्ठीस्मरणं तत्र का गतिरिति चेत् । एकत्र तथा कल्पनेऽन्यत्रापि तथा कल्पनात् तत्र न लक्षणेत्यप्याहुः ॥

(१७) विशिष्टेति । भ्रमाचारजन्यत्वेनेत्यर्थ । समीहितक्रियेति । क्रियापदं क्रियमाणपरम् । दृष्टप्रतिबन्धकदुरितेऽतिव्याप्तिवारणायेत्याहुः । अविच्छेद इति । यद्यपि प्रत्यये विच्छेदासम्भवः तथापि बहुकालमविच्छेदो बोध्य ।

प्रतिबन्धकं दुरितम्। प्रचयश्च गुरुणा शिष्याध्ययनदानस्याविच्छेदः।

ननु मङ्गलस्य समीहितनिर्व्विघ्नसिद्धौ नान्वयव्यतिरेकाभ्यां हेतुत्वग्रहः। मङ्गलं विनापि नास्तिकानां तत्सिद्धेः। कृतनमस्कारस्यापि तदसिद्धेश्च। न च मङ्गलं सफलं (१८) शिष्टाचारविषयत्वात् दर्शवदिति फलसिद्धौ प्रारिप्सितसिद्धेश्च तदानीमपेक्षितत्वेनोपस्थितत्वात्। फलान्तरस्यातथाभावादनुमानात्तद्ग्रहः। व्यभिचारेण ग्राह्यस्य कारणत्वस्याभावादित्यत आह। आगमेति। दोषाय यो व्यभिचारो व्याप्यव्यभिचारो विनापि मङ्गलं निर्व्विघ्नसमीहितसिद्धि रित्येवंरूपः। स इह नास्ति। कुतः। आगममूलत्वाच्चास्यार्थस्य कार्य्यकारणभावस्य। तथाचागमात् कार्य्यकारणभावे एव धृते यत्रापततो नमस्कारादर्शनेऽपि निर्विघ्नं समाप्ति र्दृश्यते। तत्रापि तथैव लिङ्गेन जन्मान्तरीयो नमस्कारोऽनुमीयत इत्यर्थः। (१९) नन्वेवमन्योन्याश्रयः। जन्मान्तरीय तदनुमाने व्यभिचाराग्रहात्। कारणत्वस्य मतः श्रुत्या बोधनम्। कारणत्वग्रहे च तदनुमानमिति। तथाच नियत-

(१८) शिष्टेति। शिष्टत्वं अभ्रान्तत्वम्। अनुमानादिति। परिशेषानुमानादित्यर्थः।

(१९) योग्यतानिश्चयत्वेन शाब्दबोधहेतुत्वमिति मन्वान शङ्कते। नन्वेवमिति।

ननु कारणत्वग्रहो व्यभिचारग्रहेऽपि दृष्ट इत्यत आह। हेतुत्वावच्छिन्नावच्छेदेनेति शेषः। सामानाधिकरण्येन कारणत्वस्य तत्रापि ग्रहात्। न च

पूर्व्वसत्त्वस्य ग्राह्यस्य बाधात् श्रुत्याप्ययोग्यतया कारणत्वं न बोध्यते। तृणारणिमणिस्थलेऽप्यकार्य्यकारणव्यावृत्तं रूपं वह्नि-निष्ठकार्य्यतानिरूपितकारणतावच्छेदकरूपवत्त्वं तृणादौ, तृण-निष्ठकारणताप्रतियोगिक-कार्य्यतावच्छेदकरूपवत्त्वं वह्नौ वा परिच्छिद्यते। न तु कार्य्यकारणभावः। मैवं (२०) योग्यानुप-लम्भेनैहिकस्य मङ्गलविशेषस्याभावग्रहेऽपि ऐहिकामुष्मिकसाधा-रणमङ्गलमात्राभावस्य निश्चेतुमशक्यत्वात्। जन्मान्तरीयस्य तस्या-योग्यत्वात्। तथाच विशेषव्यभिचारेऽपि श्रुत्या सामान्यतः कारणत्वबोधनं नायोग्यतया परिभवितुं शक्यम्। तथापि व्यभि-चारसन्देहोऽस्त्येवेति चेत्। न। प्रमाणप्रवृत्तौ बोध्यसन्देहस्या-प्रतिबन्धकत्वादन्यथा प्रमाणमात्रोच्छेदापत्तेः। प्रत्युतानुकूलत्वं सन्दिग्धे न्यायः प्रवर्त्तत इत्यभ्युपगमात्॥

ननु सत्यपि मङ्गले कथं समाप्त्यभावः। साङ्गादृष्टिककर्म्मणः फलावश्यम्भावनियमादित्यत आह। तस्येति। यथा कारीर्य्यां सत्या-मपि वृष्टेरभाव इत्यर्थः॥

---

तद्देशत्वापि कारणत्वग्रहोऽस्त्विति वाच्यम्। अरणिमण्यभाववति स्तोमविशिष्टे तृणान्वयव्यतिरेकवदत्र तद्ग्राहकस्याभावात्। न च श्रुतिरेव तद्ग्राहिका व्यभिचारेण ग्राह्यकारणत्वस्य बाधात्। यद्यप्येवमपि तृणत्वसामानाधिकरण्ये श्रुत्या हेतुत्वग्रहः सम्भवत्येव तथापि समाप्तित्वमङ्गलत्वावच्छेदेन कार्य्यकारण-भावग्रहोऽशक्य इति भावः। केचित्तु पर्व्वते वह्निव्याप्यवत्ताग्रहेऽपि यथा न तत्र वह्निग्रहः तथा कारणतावच्छेदकरूपवत्ताग्रहेऽपि तृणादौ न कारणत्वग्रह इत्याहुः।

(२० मङ्गलत्वावच्छिन्नव्यभिचारनिश्चयाभावात् तत्सन्देहस्य चाप्रतिबन्धक-

साङ्गुण्येऽपि विघ्नहेतूनां बलीयस्त्वात्। न चैवं किमनेनेति वाच्यम्। प्रचितस्यास्यैव बलवत्तरविघ्नवारणेऽपि कारणत्वात्।

---

ननु साङ्गेऽपि तत्र कुतः समाप्त्यभाव इत्यत आह। साङ्गुण्येऽपीति। ननु विघ्नत्वेनैव नमस्कारनाश्यत्वावगमात् एकेनैव तेन बहवो न नाश्येरन् एकोऽपि वा न नाश्येताविशेषादित्याशङ्का निराकरोति। न चेति। प्रचयश्च माहित्यम्। यद्यप्याशुविनाशिनां तेषां एककालत्वाभावादसम्भवो तथाप्येकैकनमस्कारादेकैकविघ्ननाश एवात्र प्रचयो द्रष्टव्यः।

ननु न प्रचितं तथा अप्रचितादपि फलसिद्धेः। क्वचित् प्रचितं क्वचिदप्रचितं इत्यत्राननुगमेन श्रुत्या बोधयितुमशक्यत्वात्। (२१) किञ्चैवं दुरितस्य भूयस्त्वाल्पीयस्त्वानध्यवसायान्मङ्गले

---

त्वात् तदवच्छेदेन हेतुत्वग्रहो भवत्येव इत्याह। योग्येति। संशयसाधारणयोग्यताज्ञानत्वेनैव हेतुतेति भावः। यद्यपि मानसनमस्काराभावो न योग्यानुपलब्धिनिश्चेय स्तथापि प्रकारान्तरेण तन्निश्चय इति भावः। विशेषेति। ऐहिकमङ्गलत्वावच्छेदेनेत्यर्थः। सामान्यतो मङ्गलत्वावच्छेदेनेत्यर्थः। यथेति। तथा न तत्र मङ्गलमेव साङ्गमिति भावः। प्रचयश्च यद्यप्यसम्भवीत्यन्वयः। आशुविनाशिनामिति। क्षणिकानामित्यर्थः।

(२१) ननु विघ्नसमसंख्यमङ्गलत्वेन हेतुतायां नानुगम इत्यरुचेराह। किञ्चेति। ननु विघ्नसन्देहवतां शिष्टानामाचारश्रुत्या तथैव बोधनात् संशयेऽपि प्रवृत्तिरित्यस्वरसादाह। न चेति। अन्वयेति। यद्यपि विघ्नसमसंख्यमङ्गलस्य हेतुत्वान्वयव्यभिचारः समाप्तिविशेषहेतुत्वाच्च व्यभिचारः अन्यथा प्रायश्चित्त-

न हि घनविमुक्त-मुदक-मेक-स्तृणस्तम्बो वारयितुं न समर्थ इति तदर्थं नोपादीयते। सजातीयप्रचय सम्वलितस्य तस्य शक्तत्वात्।

प्रवृत्त्यनुपपत्तिः। न वा जन्मान्तरीयग्रन्थाद्युद्दिश्य मङ्गलाचरणं येनाव्यभिचारः स्यात्। न च यत्र पुत्रेष्ट्यावैहिकपुत्रार्थं जन्मान्तरीयं फलं तथा मङ्गलेऽपीति वाच्यम्। तत्रैहिकामुष्मिकपुत्रमात्रस्य फलत्वेन श्रवणात्। इह त्वाचारादनुमानम्। स चैहिकमात्रविषय इति। तेन श्रुतिरपि तथैव कल्प्या।

अत्रोच्यते। मङ्गलं न समाप्तौ हेतुः। अन्वयव्यतिरेकव्यभिचारात्। किन्तु विघ्नध्वंसस्तत्फलं प्रायश्चित्तवत्। प्रारिप्सिते विघ्नो माभूदिति कामनया तदाचारेण तथैव श्रुतेरुन्नयनात्। निर्विघ्नं समाप्यतामिति कामनया तदाचारेऽपि (२२) सविशेषणे हीति न्यायेन विघ्नाभाव एव काम्यः। समाप्तिस्तु स्वकारणादेव। यथा कारीरीतः प्रत्यवायहानिवृत्तिमात्रं वृष्टिस्तु स्वकारणादेव। समाप्तौ च विघ्नसंसर्गाभावो हेतुः। तथैव प्रतिबन्धकाभावस्य हेतुत्वात्। तथाच यत्र मङ्गलं विनापि समाप्तिः तत्र जन्मान्तरा

जन्यो विघ्नध्वंसे व्यभिचारात् सोऽपि न फलं स्यात् तथापि प्रत्यक्षप्रकाशोक्तमनुसन्धेयम्॥

(२२) सविशेषणेत्विति। अत्र स्वर्गीयः स्वामित्वं च गौरवादिना विशेष्ये बाधादिति भावः। विघ्नात्यन्ताभाव इत्युपलक्षणम्। अनुत्पादध्वंसावपि द्रष्टव्यौ। वस्तुतोऽत्यन्ताभावपदं तत्परमेव। आत्मनि तदत्यन्ताभावाभावादिति वदन्ति। चोक्तेति। यद्यप्येवमपि साक्षाद्वैदिककर्मणः फलावश्यम्भावनियमो भग्न

न च विघ्नहेतुसद्भावनिश्चयाभावात् तद्वारणे कारण-मनुपादेयम् । यतः तत्सन्देहेऽपि तदुपादानस्य न्याय्यत्वात् । अन्यथानुपस्थितपरिपन्थिभिः पार्थिवैः द्विरदयूथपतयो नाद्रियेरन्निति ।

दनुवर्त्तमानविघ्नात्यन्ताभाव एव हेतुः । यत्र च मङ्गले सत्यपि समाप्त्यभावः तत्र फलं प्रत्येकं विघ्नध्वंसो भवत्येव । साङ्गाद्वैदिक-कर्म्मणः फलावश्यम्भावनियमात् । समाप्त्यभावश्च विघ्नान्तरात् । मङ्गलानन्तरोत्पन्नविघ्नाद्वा । न चानध्यवसायः । यावद्विघ्नशङ्कं तदाचारात् । गुर्वारम्भे च नियमतो बहुमङ्गलाचरणं बहुविघ्न शङ्कया । न च यत्र विघ्नात्यन्ताभावः तत्र साङ्गादपि तस्मात् विघ्नध्वंसाभावात् तद्बाधकवेदाप्रामाण्यम् । लोकावगतकारणेऽपि विघ्ने सति ध्वंसहेतुत्वस्य वेदेन बोधनात् । न च कारणान्तरा-भावेन कार्य्याभावात् कारणताबोधकस्याप्रामाण्यम् । अति-प्रसङ्गात् ।

ननु (२३) विघ्नध्वंसार्थिप्रवृत्तौ तन्निश्चयो हेतुः प्रायश्चित्तस्थले क्लृप्त इति कथं विघ्नसंशये तन्नाशार्थं प्रवृत्तिरित्यत आह । नचेति ।

एव । न च विघ्नस्यापि मङ्गलाङ्गत्वम । फलवत्त्वविधिश्रूयमाणस्यैवाङ्गत्वात् । तथापि विघ्ने सत्येव साङ्गादपि तस्मात् फलं तथैव विधिबोधनात् । तदिदमाह विघ्ने सतीति । यत्तु प्रायश्चित्तवद्विघ्नवत्त्वेनाधिकारात तदभावेऽनधिकारान्मङ्गलं न साङ्गमिति । तन्न । तर्हि विघ्नसन्देहे तद्वदेव न प्रवर्त्तेत । वैदिकेऽधिकार निश्चयस्यैव प्रवर्त्तकत्वात् ।

(२३) विघ्नध्वंसार्थीति । पापध्वंसार्थीत्यर्थः । अन्यत्रापि यद्विताऽनिष्ट-

तत्र पापसंशये प्रायश्चित्तानुपदेशात् तथैव। इह तु विघ्न-
विषयकसन्देहवतां शिष्टानामाचारानुमितवेदेन तथैव बोधनात्।
शङ्कितानिष्टवारणार्थमपि बहुवित्तव्ययायाससाध्ये प्रवृत्तिदर्शनाच्च
विघ्नसन्देहेऽपि तदाचरणं न विरुद्धमित्यर्थः। तथापि दुरित-
ध्वंसार्थिप्रवृत्तौ दुरितवत्त्वमधिकारिविशेषणमिति कथं प्रवृत्तिः।
वैदिके कर्म्मण्यधिकारनिश्चयादेव प्रवृत्तेः। मैवम्। तत्सन्देहे-
ऽप्यधिकारिविशेषेण समाप्तिकामनाया मनसा निश्चयात्। अत-
एवान्यत्र निश्चिताधिकारिकर्त्तृकत्वेऽपि मङ्गलं सन्दिग्धाधिकारि-
कर्त्तृकमेव।

यद्वा दुरितज्ञानवत्त्वं संशयनिश्चयसाधारणं अधिकारि
विशेषणमिति मतमपास्तम्। (२४) दुरितवत्त्वेनाधिकाराभावात्।
विरोधात्। ननु स्नानस्य भक्ताश्नपनिमित्तकस्याया मिष्टित्वे
नातिदेशागतपूर्व्वदिनकर्त्तव्यस्य देवतावाहनस्य स्नानाग्निपहार

वारणार्थे प्रवृत्तिरिष्टैवेत्याह। शङ्कितेति। मनसेति। तथाच दुरितवत्त्वं
नाधिकार इति भावः। यथा कामनाज्ञानमपि प्रयोजकं तथोक्तं प्रत्यक्षप्रकाशे।
अधिकारीति प्रवृत्तिप्रयोजकमित्यर्थः। तथाचोभयत्र दुरितध्वंसमेवाधिकारः।
प्रथमेऽधिकारसन्देहत्वेन प्रयोजकताऽन्येऽधिकारज्ञानत्वेनेति॥

(२४) अतएवेत्यादिग्रन्थमाह। दुरितवत्त्वेनेति। नन्वेतदेव कथमित्याह।
विरोधादिति। अधिकारस्य फलजनकविशेष्यतया एकत्र जनकत्वप्रतिबन्धक-
विरोधादित्यर्थः। एतच्च मूलोक्तसमाप्तिफलाभिप्रायेण। अतएवोक्तं समाप्तिकाम
नयेति। विघ्नध्वंसफलकत्वे तत्कामनाया एवाधिकारत्वात्। विघ्नध्वंसफलाभि-
प्रायेण तु दोषः। प्रायश्चित्तवद्विघ्नस्यापि तद्ध्वंसजनकत्वात्। एवञ्च वैदिके
अधिकारनिश्चयस्यैव प्रवर्त्तकत्वमिति दूषणमुभयत्र तन्मते बोद्धव्यम्॥

संशयेऽननुष्ठानमुक्तं मतः कथमत्र विघ्नसंशयेन तद्ध्वंसद्वारसंशयात् प्रवृत्तिः। मैवम्। (२५) नैमित्तिके हि निमित्तनिश्चयवानधिकारी। यथा भिन्ने जुहोतीत्यत्र पात्रभेदनिश्चयवानिव। मङ्गलन्तु न विघ्ननिमित्तकम्। अकरणे प्रत्यवायाश्रुतेः। अपि-चेज्याकर्त्तव्यतानिश्चये तदङ्गानुष्ठानम्।

न च स्फ्याश्लेषसंशयात् तन्निश्चयः पूर्व्वदिने स्फ्याश्लेषणे सति इज्याकर्त्तव्यतानिश्चयेऽपि न तदङ्गानुष्ठानम्। पूर्व्वदिनरूपस्याङ्ग-स्याभावादितीज्याया मावाहनबाधो युक्तः। (२६) मङ्गलत्वञ्च प्रति-बन्धकान्यस्य मतः प्रारिप्सितप्रतिबन्धकनिवृत्त्यसाधारणकारण-

(२५) फलसन्देहपर्य्यवसन्नतया द्वारसन्देहे प्रवृत्तिः सम्भवत्येव न तु निमित्त-सन्देहे। दृष्टान्ते च न द्वारसन्देहः किन्तु निमित्तसन्देह इत्याह। नैमित्तिके हीति।

नन्विज्याया नैमित्तिकत्वेऽपि तदङ्गस्यातथात्वात् तदनुष्ठायतामित्यत आह। अपि चेति।

(२६) मङ्गलत्वञ्चेति। प्रतियोगिन्यतिव्याप्तिवारणायान्यस्य मत इति। तदन्यत्वे सतीत्यर्थः। केचित्तु विघ्नध्वंसप्रतिबन्धकदुरदृष्टाभावेऽतिव्याप्तिवारणाय मत इति। स चाभाव इति नोक्तदोषावकाश इत्याहुः।

यत्तु निवृत्तिप्रागभावेऽतिव्याप्तिवारणाय तत्। न च स प्रतियोग्येवेति प्रथम-पदेनैव तन्निरास इति वाच्यम्। प्रतियोगिपूर्व्वं तत्प्रागभावासत्त्वापत्तेः। तस्मात् प्रतियोग्यन्य एव स इति। तन्न। अपसिद्धान्तात्। प्रतियोगिपूर्व्वञ्च प्रतियोगि-प्रागभाव एव तत्प्रागभावव्यवहारहेतुः। एवञ्च प्रतियोगी तत्प्रागभावस्य निवृत्ति-प्रागभावव्यवहारहेतुः। तत्र च प्रथमस्याद्यविशेषणेनैव निरास चरमस्य तन्निवृत्त्य-जनकत्वादेवेति। कारीर्य्यामतिव्याप्तिवारणाय प्रारिप्सितेति। कालादावति-व्याप्तेराह। असाधारणेति। तादृशनिवृत्तिमात्रनिष्ठकार्य्यतानिरूपितकारणता-

ईश्वरमित्यनेनैव जगद्धेतुत्वे लब्धे हेतुमिति पुन-
र्विशेषणोपादानं प्रमाणसूचनाय। कार्य्यं हि हेतुना
विनात्मान मनाप्नुवद्धेतुमत्तया कर्त्तारमाक्षिपति।
ईश्वरपदसन्निधिप्रयुक्तो वा हेतुशब्दो विशिष्ट एव

त्वम्। न चानुगतं रूप मनादाय कथं तद्ग्रह इति वाच्यम्। तेन तेन रूपेण विशिष्यैव तद्ग्रहात्। धात्वादिवत्। (२७) पारिभाषिकमेव वा मङ्गलत्वम्। अभियुक्तानां नदीस्नानादिवन्नियतप्रयोगदर्शनात्। मङ्गलमाचरेदिति न विधिः। किन्तु नमस्कारादिकमाचरेदिति प्रत्येकमेव विधिकल्पनम्। तदुपजीव्य विघ्नध्वंसकामनया वेदविहितत्वेनोपाधिनानुगतो मङ्गलव्यवहार इत्यस्मद्गुरवः।

नन्वीश्वरपदं यदि कार्य्यमात्रकर्त्तरि शक्तं तदा कर्त्तुर्हेतुविशेषत्वाद्धेतुपदं शब्दपुनरुक्तम्। यदि च नित्यज्ञानवत्यैव शक्तं तदाग्निरुष्णः इति वदर्थपुनरुक्तमित्यत आह। ईश्वरमिति। हेतुपदं स्वसम्बन्धितया कार्य्यमुपस्थापयति। तेन चेतरहेतुवत् कर्त्ताप्याक्षिप्यते। कर्त्तुरपि कारणत्वादित्यर्थः। ईश्वरपदेति।

श्यत्वमित्यर्थः। न चैवं प्रतियोगिन्यपमङ्गलादावप्यपदं व्यर्थम्। तत्र तत्र ध्वंस प्रति तेन तेन रूपेण जनकत्वाभ्युपगमेनाव्योक्तत्वात्। यदि प्रारिप्सितप्रतिबन्धकदुरितस्यापि प्रायश्चित्तनाश्यता तदा तदन्यत्वेनापि विशेष्यम्। प्रारिप्सितप्रतिबन्धकविघ्नध्वंसमात्रकामनाकृतदुर्गादानस्य संग्राह्यत्वमेवान्यत्वापमङ्गलत्वापत्तेः॥

(२७) धात्वादिवदिति। यथा धातुत्वं नैकं क्रियावाचितावच्छेदकं किन्तु भूत्वादिकं तथा मङ्गलत्वमपि नैकमित्यर्थः॥

श्रेयःसमधिगमनिमित्ते प्रवर्त्तते । प्रस्तुतशास्त्रहेतुत्वाद्वा हेतुमित्याह । स्मर्य्यते हि । कणादो मुनिः महेश्वरनियोगप्रसादावधिगम्य शास्त्रं प्रणीतवान् । तेन तं हेतुं प्रणम्य मया संग्रहः प्रवक्ष्यत इत्यर्थः । अत ईश्वरप्रणामादनु पश्चात् कणादनामानं मुनिं प्रणम्येत्यनुषज्यते ।

यद्यपि गुरुतम-गुरुतर-गुरुक्रमेण प्रणामः क्रियत इति शिष्टाचारादेव लभ्यते तथापि शिष्यशिक्षाय क्रमो

(२८)पदान्तरमविधेहेतुसामान्यशक्तं तद्विशेषपरमित्यर्थः । नियोगस्त्वमेवं कुर्व्वित्याज्ञा । प्रसादः शास्त्रकर्त्तृत्वनिर्वाहकवरप्रदानम् । प्रवक्ष्यत इत्यत्र कर्त्रपेक्षायां तमध्याहरति । मयेति । यद्यपि प्रवक्ष्यत इत्यस्य संग्रहविषयकशब्दप्रयोगः क्रियत इत्यर्थो न युक्तः संग्रहस्य शब्दात्मकतया तस्यैव करणात् । तथापि संग्रहोच्चारणानुकूलो यत्नः क्रियत इत्यर्थः । अत इत्यनेनेश्वरपरामर्शभ्रमं निवारयति । ईश्वरेति ।

यद्यपीति । (२९) अत्र नमस्कारः फलदायीति पदमध्याहरन्ति तेन रूपान्तरेणापि क्वचिन्नमस्कारे न व्यभिचारः ।

(२८) पदान्तरेति । गोबलीवर्द्दन्यायादिति भावः ।

(२९) अत्रेति । नमस्कार इति पदानन्तरं फलदायीति पदमध्याहरन्तीत्यर्थः । तथाचोक्तक्रमेण क्रियत इति साध्ये उद्देश्यफलदायित्वे सति कर्मक्रिय-

निबद्धोऽन्विति । तथाच मुनिप्रणीतेः पश्चाद्भावे दर्शिते सन्निधिसिद्धमवधित्वं ईश्वरप्रणामस्येत्यत इति मन्द-प्रयोजनमित्यपि न वाच्यम् । श्रुतिप्राप्तेऽर्थे प्रकरणादीनामनवकाशात् । अथवा यतः शुश्रूषवः श्रेयोऽर्थिनः श्रवणादिपटवोऽनसूयकाश्चान्तेवासिन उपसंदुरतो वच्यत इत्यनेन सम्बध्यते । अन्यथारण्यरुदितं स्यादित्यपि शिष्यशिक्षार्थं । एवं हि शिक्षिते शिष्या अपि तथा कुर्य्युः । तथाचानवच्छिन्नसम्प्रदायं वीर्य्य-

सन्निधीयते । अत्र प्रकरणोपस्थिते योग्यमाकाङ्क्षिते तेनैवान्वयस्य व्युत्पन्नत्वादित्यर्थः । श्रुतिप्राप्त इति । प्रकरणात् तदुपस्थितिरन्य-समभिव्याहारपरामर्शाधीना विलम्बिता स्यात् । शब्दात्तु सा शीघ्रम् । तन्नैरपेक्ष्यादित्यर्थः ।

ननु श्रुतिरप्यतः पदं सर्व्वनामरूपं तस्यावश्यं प्रकरणोप-जीवकत्वं अन्यथा सर्व्वनामपदेन तद्विशेषालाभापत्तेः । अतः प्रकरणस्यैवोपजीव्यत्वात् तदेवास्तु किं श्रुत्या । न च प्रकरणादसं-गत्यावधिरुपस्थितो नावधित्वेनेति तदवगमार्थं श्रुतिरादरणीयेति

साधगुरुतमादिनमस्कारत्वं हेतुः । निर्विसर्गपाठपक्षे नमस्कारजन्यादृष्टफल-दायीत्यर्थः । अध्याहरणीयस्वरससूचनम् । तर्ह्यास्तु शिष्टाचारादित्यनेन शिष्टक्रियमाणगुरुतमादिनमस्कारत्वं हेतुरुक्तः । शिष्टत्वस्याभानत्वम् । व्युत्क्रम-नमस्कारस्य निष्फलत्वेन अमर्निबध्यमानत्वमित्यत्र व्यभिचारवारणाय व्याख्यातो अयं इति । क्रमान्तरेणेति । व्युत्क्रमेणेत्यर्थः ।

वत्तरञ्च शास्त्रं स्यादिति। येन विद्येवाह। "असूयकायानृजवे जड़ाय न मां ब्रूया अवीर्य्यवती तथा स्यामिति"। एतेन सौत्रमप्यतः पदं व्याख्यातं स्यात्।

वाच्यम्। अनोरवधिव्याप्योपस्थापकत्वेन तत्परामर्शादवधित्वस्य लाभात्।

किञ्च। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षादिति जैमिनीयसूत्रस्य नायं विषयः। तथा हि व्रीहीनवहन्तीत्यादौ श्रुतेर्द्वितीयायाः साध्यत्वस्य प्रकरणात् यज्ञकरणगतोपकारकत्वस्य च युगपदुपस्थितौ साध्यत्वस्य श्रूयमाणत्वात् तथैवान्वयो नान्यथेत्यादिस्तस्य विषयः। इह त्वतःपदाधिक्षेपदशायां न युगपदुपस्थिति नवा द्वितीयान्तोपस्थितस्य प्रकरणात् प्रकारान्तरेणोपस्थितिः। न। अनवबोधात्। तथाहि शाब्दो ह्यन्वयः सर्व्वत्र शब्दोपस्थितेनैवार्थेन न प्रकारान्तरेणोप-

श्रुतिरपीति। शब्दोऽपीत्यर्थः। अनोरिति। अनुशब्दस्येत्यर्थः। नायमिति। तथाचात्र श्रुत्यपेक्षया परस्य प्रकरणस्य न दौर्ब्बल्यं किन्तु बलवत्त्वमेवेति भावः। तथा हीति। भिन्नाकारेण युगपदुपस्थितौ शब्दोपस्थितप्रकारान्वयाभ्यर्हित इत्यादि तत्तात्पर्य्यमिति भावः। अतवातः पदं व्यर्थमिति पूर्व्वपक्षदशायां न युगपदुपस्थितिर्न वा भिन्नप्रकारेणेति नायं विषय इत्याह। इहत्विति। अन्वये अन्वयबोधे। अन्वयाजनकत्वात अन्वयबोधाजनकत्वात्।

ननु तथापि शब्दतोऽतः पदमनुपादेयमनाद्यध्याहारे तथैव व्युत्पत्तेः। ल्यप लोप पञ्चम्यादौ तथादर्शनादित्याशयेनाह। पूर्व्वेति। मीमांसासूत्रस्यत्वभ्रम वारयति। अथात इति॥

पदार्थधर्म्मसंग्रह इति। पदार्था द्रव्यादय स्तेषां धर्म्मा स्त एव परस्परं विशेषणीभूता स्त अनेन संगृह्यन्ते शास्त्रे नानास्थानेषु वितता एकत्र सङ्कलय्य कथ्यन्त इति संग्रहः। स प्रकृष्टो वक्ष्यते। प्रकरणशुद्धः संग्रह-

स्थितेन। शास्त्रे ह्याकाङ्क्षा शब्देनैव परिपूर्य्यत इति न्यायात्। तथाच श्रुतिप्राप्ते शब्दकार्य्येऽन्वये प्रकरणादीनामुपस्थापकानाम-नवकाशादन्वयज्ञानाजनकत्वादित्यर्थः। पूर्व्वापरविरोधेनार्थवत्त्वा-दिकं योज्यम्। सौत्रमिति "अथातो धर्म्मं व्याख्यास्यामः" इति कणादसूत्रस्थम्।

ननु द्रव्यादीनां धर्म्मा यदि तदभिन्नास्तर्हि (२०) न धर्म्मधर्म्मि-भावः। भिन्नाश्चेत् सप्तमपदार्थापत्तिरित्यत आह। तएवेति। तदुपपादयति परस्परमिति। द्रव्यलक्षणं गुण स्तल्लक्षणं गुणत्वं जातिरित्यादिक्रमेणान्योन्यं विशेषणविशेष्यभाव इति नात्रदोष इत्यर्थः।

(२०) तर्हीति। भेदत्वाभावेन्यधर्म्मे धर्म्मधर्म्मिभावस्य भेदगर्भत्वनियमादिति भावः। भिन्नाश्चेदिति। अभावरूपा धर्म्मा यदि द्रव्यादिभिन्नाः स्युरभावा स्यु-रित्यापादनम्। एवञ्च सप्तमपदार्थापत्तिरित्यस्य सप्तमपदार्थत्वापत्तिरित्यर्थो बोध्यः। एतेन यथाश्रुतेनापत्तिः। अभावमादायसप्तपदार्थत्वाभ्युपगमात्। अथ सप्तम-भावापत्तिरित्यर्थः तदापि सिद्धिरित्यादि निरस्तम्। परस्परमितीति। घटमध्य-कस्यापि किञ्चिद्विशेषणमित्यर्थो नत्वन्योन्य विशेषणविशेष्यभावः। तल्लक्षण-त्वमित्यस्याप्रसमन्वयविरोधात्। केचित्तु गुणत्वमित्यस्य द्रव्यघटितगुणलक्षणान्तरं तात्पर्य्यमित्यन्योन्यमेव विशेषणविशेष्यभाव इत्याहुः।

पदेन दर्शितत्वात् । वैशद्यं लघुता कृत्स्नता च प्रकर्षः प्रशब्देन द्योत्यते । सूत्रे वैशद्याभावात् भाष्यस्यातिविस्तरत्वात्प्रकरणादीनाञ्चैकदेशत्वात् । एतेनाभिधेयं दर्शितं भवति । न च तत्प्रतीतावपि प्रेक्षावान्

ननु षष्ठीसमासे धर्म्मोपसर्जनत्वात् पदार्थेन संग्रहान्वयानुपपत्तिरिति विशेषणसमास एव न्याय्यः । सैवं मिथो व्यभिचाराभावेन विशेषणसमासानुपपत्तेः । (२१) धर्म्मपदस्य नित्यसापेक्षत्वात् पदार्थमादायैव संग्रहान्वयात् संग्रहस्य विस्तरापेक्षत्वात्तमाह शास्त्र इति । प्रशब्दद्योत्यमाह प्रकृष्ट इति । प्रकरणं व्याख्येयग्रन्थः । शुद्धि रितरग्रन्थापेक्षया उत्कर्षः । एकदेशो द्रव्यादिपदार्थमात्रम् ।

मिथो व्यभिचाराभावेनेति । यद्यपि चूतवृक्ष इत्यादिदर्शनान्नैवं तथापि प्रयोगदर्शनात्तत्र तथा । प्रकृते तु न तथेत्याहुः ॥

(२१) धर्म्मपदस्येति । न चाभेदे षष्ठ्यनुपपत्तिर्भेदे सप्तमपदार्थापत्तेर्दोष इति वाच्यम् । तत्तत्पदार्थविशेषभेदेन पदार्थमात्राच्चाभेदेनोभयसम्भवादिति भावः । प्रशब्दद्योत्यमाहेति । यद्यपि धात्वर्थगतातिशयद्योतकत्वमेवोपसर्गाणां प्रकृते च न संग्रहो धात्वर्थस्तथापि उच्चारणकरणातिशयस्य धात्वर्थगतस्य द्योतनात् । कार्य्येऽपि सम्यक्त्वे उत्कर्षप्राप्तिरिति कृत्वा तथोक्तम् ।

ननु समस्तरूपप्रकरणस्य नात्र प्रस्ताव इत्यत आह । प्रकरणमिति । व्याख्येयग्रन्थ इति । यद्यपि भाष्यस्य न व्याख्येयत्वमस्ति तथापि वैशेषिकसूत्रं तथेति केचित् । वस्तुतस्तु व्याख्येयो भाष्यरूपग्रन्थ एव प्रकरणमिति । इतरेति । एकत्वोपनिबन्ध इत्यर्थः । एकदेशोऽवयवः । प्रकृते असम्भवीत्यत आह । द्रव्यादीति । संग्रहेति । मोक्षसंग्रहयोरभेदान्वयानुपपत्तेरित्यर्थः । तत्त्वेति । सत्योदयहेतुत्वमित्यर्थः ॥

प्रयोजनं विना प्रवर्त्तत इति तमाह महोदय इति। महानुदय उद्बोधस्तत्त्वज्ञानमिति यावत्। सोऽस्माद्भवतीति महोदयः संग्रहः।

ततः किं न ह्ययं पुरुषार्थः। के ते पदार्थाः के च तेषां धर्म्मा इत्यत आह द्रव्येति। के पदार्था इत्य-

एतेनेति। ग्रन्थप्रतिपाद्याज्ञाने तत्र प्रेक्षावतामप्रवृत्तेरित्यर्थः। न चेति। संग्रहस्य गौणमुख्यप्रयोजनत्वाभावादित्यर्थः। केन-चिन्महोदयपदेन मोक्ष उक्तः। तत्र च संग्रहस्य सामानाधि-करण्यानुपपत्तेर्महोदयहेतुत्वान्महोदयः संग्रहो वाच्यः। तच्च साक्षाद्वा परम्परया वा। नाद्यो मानाभावात्। नान्त्यः (२२) साक्षात्साध्यस्यैव प्रयोजनस्य लाभात् लक्षणापत्तेश्चेत्यन्यथा व्याचष्टे। महानिति। सर्व्वे गत्यर्थाः ज्ञानार्था इत्युदयपदस्य ज्ञानाभिधायक-त्वात्। तस्य चोत्कृष्टत्वं तत्त्वविषयत्वमित्यर्थः। संग्रहसामानाधि-करण्यानुरोधात् पञ्चमीबहुव्रीहिमाह। सोऽस्मादिति।

उत्तरग्रन्थोपयोगार्थमाह तत इति। तत्त्वज्ञानस्य निरु-पधीच्छाविषयत्वाभावादित्यर्थः। प्रश्नानुरोधाद्विभज्य योज-

(२२) साक्षात्साध्यस्येति। तत्त्वज्ञानरूपस्येत्यर्थः। यद्यपि तदपि न संग्रहस्य साक्षात्साध्यं तथापि मोक्षापेक्षया तथात्वं बोध्यम्। लक्षणापत्तेश्चेति। यद्यपि बहुव्रीहिपक्षेऽपि लक्षणैव इत्यविशेषस्तथापि समासलक्षणाया निरूढत्वेन शक्तितुल्यत्वादिति भावः। केचित्तु समासलक्षणाजनकलक्षणयोस्तुल्यत्वेऽपि महोदयपदस्य मोक्षलक्षणापत्तेश्चेत्यर्थ इत्याहुः। मतपक्षे तथा लक्षणा नास्तीति दर्शयन्नाह। सर्व्व इति॥

पेक्षयां पदार्था द्रव्यादयः। के धर्म्मा इत्यपेक्षायां साधर्म्म्यरूपा वैधर्म्म्यरूपा अनुवृत्तव्यावृत्तरूपा इत्यर्थः। तेषामुद्बोधः कथं पुरुषार्थ इत्यत्र तत्त्वज्ञानं निःश्रेयस हेतुरिति। तत्त्वमनारोपितं रूपं तच्च साधर्म्म्यवैधर्म्म्याभ्यामेव विविच्यते। साक्षादपि हि दृश्यमाना अत्यन्तासङ्कीर्णाः स्थाणवादयो वक्रकोटरादिभिः पुरुषादिभ्यो

यति। अत्रेति। ननु तस्य भाव स्तत्त्वमुच्यते न चात्र प्रकृतं तच्छब्दार्थः किञ्चिदित्यत आह। तत्त्वमिति। अवयवार्थमनपेक्ष्यैव तत्त्वपदमनारोपिते रूपे रूढ़मित्यर्थः। (२३) नन्वारोपविषयत्वमप्रसिद्धं सर्व्वस्यैवारोपविषयत्वात्। नचाभावादौ केवलमविकल्पकावेद्ये विशेषदर्शननियमान्नारोपविषयत्वं। नीलन्तम इत्यत्राभावेऽपि नीलारोपात्। नचाभावत्वेनानुपस्थिति दशायां स इति वाच्यं। नीलारोपकाले हि तमो यद्यभावत्वेन

(२३) नन्वनारोपित रूपं आरोपाविषयत्वमेव तत्त्वं पदार्थानां ग्राह्यं तच्चाप्रसिद्धमित्याह। नन्वारोपेति। यद्यप्येवमपि अभावत्वेनानुपस्थितिदशायां आरोपाविषयत्वमेव। तथाप्यभावत्वेनोपस्थितिदशायामारोपविषयत्वं नास्तीति शङ्कामात्रं दूषयति। नीलारोपेति। तत्र सत तदारोपानुपपत्तिरित्यर्थः। कथं नीलं तम इति। तथा शङ्के पीतारोपवद्दोषप्राबल्यादभावत्वेनोपस्थिति दशायामपि नीलारोपोऽभ्युपेय। एवञ्च तदापि तत्रारोपविषयत्वमेवत्यर्थ। इदं नीलमिति। न चेष्टापत्तिः। नील तम इति सर्व्वानुभवादिति भाव। तद्विषयत्वमिति। यद्यप्येवं प्रमाविषयत्वं तत्त्वमिति पर्य्यवसितं तथाच घटत्वादे स्तथात्वं न स्यात्। न चेष्टापत्तिः। यद्‌ यत्रास्तीत्यादिना तस्य तत्त्वताभ्युप

विविच्यन्ते नत्वन्यथा किं पुनरतीन्द्रिया मिथो विमिश्रीभूताः कालाकाशादयः शरीरात्मादयो वेति । एतेन पदार्था एव प्रधानतयोद्दिष्टा वेदितव्याः ॥

भासेत तदारोपानुपपत्तिः विशेषदर्शनात् । न चेत् कथं नीलं तम इति धीः । आलोकाभावस्य तमस्त्वात् । इदन्त्वेन चाभावभाने इदं नीलमिति बुद्ध्यापत्तेः । अत्राहुः । नञः पर्य्युदासवृत्त्यानारोपः प्रमा । तद्विषयत्वं तत्त्वं । तत्त्वातत्त्वविभागश्च यद्यत्रास्ति तत्र तत् तत्त्वं । यद् यत्र नास्ति तत्र तदतत्त्वमिति विशिष्यैव निर्वक्तव्यः । सामान्यतस्तत्त्वं नास्त्येव । (३४) यद्वा स्वाश्रयप्रतियोगिकान्योन्याभावासमानाधिकरणधर्म्मवत्त्वं तत्त्वं

गमात् । तथापि तत्त्वपदेन धर्म्माभिधानप्रमाविषयधर्म्मो घटत्वादेरेव तत्त्वमिति भावः । नन्वेवं घटत्वस्य प्रमाविषयधर्म्मत्वात् पटतत्त्वं नापि स्यादित्यत आह । तत्त्वातत्त्वेति । यदवच्छेदेन यत्र यदस्ति तदवच्छेदेन तत्र तत्तत्त्वम् । यदवच्छेदेन यत्र यन्नास्ति तदवच्छेदेन तत्र तदतत्त्वमित्यर्थः ।

(३४) ननूक्तलक्षणं प्रमेयत्वादावतिव्याप्तम् । न च तल्लक्ष्यमेवेति वाच्यम् । साधर्म्म्यवैधर्म्म्याभ्यामेव विविच्यन्त इति ग्रन्थस्वरसेन साधर्म्म्यवैधर्म्म्यमात्र विवेचनीयस्य इतरभेदापयिकस्य द्रव्यत्वादेरेव तत्त्वस्यात्र लक्ष्यत्वादित्यस्वरसादाह यद्वेति । स्वाश्रयप्रतियोगिकत्वं स्वावच्छिन्नप्रतियोगिकत्वमतो नाव्याप्तिः । अन्योन्याभावश्चान्योन्याभावत्वप्रकारकविषय इति नाभावादितत्त्वाव्याप्तिरिति । तच्चिन्त्यम् । तदुपन्यस्य विशेषदर्शनादिज्ञायत इत्यर्थतयानुपदं ग्रन्थकृतैव व्याख्यातत्वात् । विशेषदर्शनस्य च प्रमेयत्वादावपि सत्त्वेन लक्ष्यत्वाविरोधात् । केचित्तु प्रमेयत्वादेरपि लक्ष्यत्वमेव । स्वाश्रयस्य च यावत्त्वं न विवक्षितम् । येन तत्राव्याप्तिः स्यात् । किन्तु यत्किञ्चित्त्वमेव ।

अभावस्तु स्वरूपवानपि पृथक् नोद्दिष्टः प्रतियोगिनिरूपणाधीननिरूपणत्वात् । न तु तुच्छत्वात् । उत्-

---

निर्वाच्यं । तत्त्वज्ञानमाधर्म्म्याद्युपयोगार्थमाह । तच्चेति । यस्य यत् तत्त्वं तत्तद्विशेषदर्शनान्निर्णीयते इत्यर्थः । अत्र लौकिकनिदर्शनेनैतच्छास्त्रसाध्यशरीरात्मविवेकेऽपि साधर्म्म्याद्युपयोगं दर्शयति । साक्षादपीति । अतीन्द्रिया इति कालाकाशादय इत्यस्यैव विशेषणं । मिथो मिश्रीभूता इति भिन्नत्वेन साक्षात्काराविषया इत्यर्थः । अभेदेनैव भासमानाः शरीरात्मादय इति वार्थः । तयोर्भेदज्ञानार्थैवैतच्छास्त्रप्रवृत्तेः । ननु द्रव्यादीनां तत्त्वविशेषणत्वात् तद्विशेष्यक तदितरभेदानुमानमसङ्गत मित्यत आह । एतेनेति । आत्मादिधर्म्मितत्त्वज्ञानस्य मोक्षहेतुत्वेन श्रुत्या बोधनात् द्रव्यादय एव तत्त्वतो ज्ञेया इत्यर्थः ॥

ननु निःश्रेयसोपयोग्यभावः किमिति नोद्दिष्ट इत्यत आह । अभावस्त्विति । ननु प्रतियोगिनिरूप्यस्यानभिधाने संयोगादेः

---

नन्वेवं यत्किञ्चित्स्वाश्रयान्योन्याभाव समानाधिकरणतया प्रमेयत्वादावव्याप्तिरेवेति चेत् । न । असामानाधिकरण्यं हि तदनधिकरणाधिकरणत्वमत्र विवक्षितम् । तच्च तत्राप्यस्ति । घटान्योन्याभावानधिकरणे घटे तस्य वृत्तेः । न चैवं प्रमेयत्वादिकं घटस्यापि तत्त्वं स्यादिति वाच्यम । इष्टापत्तेः । एवञ्च यस्याश्रयान्योन्याभावानधिकरणाधिकरणत्वं यत्र यस्य तत्त्वमिति पर्य्यवसितम् । यद्यपि यदधिकरणत्वं यत्र यस्य तत्र तत्तत्त्वमित्येवास्तु । तथा च पूर्व्वो भेदोऽपि । तथापि यथोक्तविशेषणविशेष्यभावेन वैयर्थ्यमुपाधिभेदाच्च भेद इत्याहुः । समानाधिकरणपदेन विनियतसमानाधिकरणत्वविवक्षया व्याप्यत्वं विवक्षितम् ।

पत्तिविनाशचिन्तायां प्रागभावध्वंसाभावयो वैधर्म्य चेतरेतराभावात्यन्ताभावयोस्तत्र तत्र निदर्शिष्यमाणत्वात्। तेन द्रव्यादीनां साधर्म्यवैधर्म्याभ्यां तत्त्वं प्रतिपादयन् संग्रहो निःश्रेयसं साधयति यतोऽतः प्रेक्षावतामुपादेय इति तात्पर्य्यम् ॥

—

कथमुद्देशः। अथ प्रतियोगी विरोधी। संयोगादिस्तु स्वसम्बन्धिनिरूप्यः तथापि यदेवं तन्न प्रदर्श्यत इति द्रष्टव्यम्। अन्यथा द्रव्यत्वमेवानुद्देशे हेतुरित्यपि सुवचम्। न च प्रतियोगिनिरूप्यत्वं दर्शयितुं पृथक् नोद्दिष्ट इति युक्तम्। अनुद्देशस्य तत्रासामर्थ्यात्। अथ द्रव्यादिषट्कोद्देशेनेतराभावोऽप्युद्दिष्टः (३५) द्रव्यं हि गुणान्योन्याभाव इति चेत्। न। न हि द्रव्यादिनिष्ठः स इति तत्कथनेनैवाभावकथनम्। गुणानामप्यनुद्देशप्रसङ्गात्। अतः अभावः किमिति नोद्दिष्ट इति प्रश्ने पदार्थपदेनैवोद्दिष्ट इत्युत्तरयति

तथा चासामानाधिकरण्येन व्याप्यत्वमुक्तम्। एवञ्च यत्किञ्चित्तत्त्वाश्रयान्योन्याभावव्याप्यधर्म्मस्तत्त्वमित्यपि प्राहुः।

(३५) द्रव्यं हीति। गुणादिकं गुणसंसर्गाभाववदित्यपि बोध्यम्। तेन संसर्गाभावस्यापि लाभात् अन्योन्याभावस्याभावघटितत्वात् सोऽपि प्राप्त इत्यप्याहुः। प्रमित इति। यद्यपि प्रतियोगिप्रमाधीनप्रमाविषयत्वादित्यत्र प्रमाविषयत्वमात्रस्य गमकत्वेऽधिकं व्यर्थम्। प्रमितत्वे साध्ये साध्याविशिष्टश्च। तथापि प्रामाणिकत्वे साध्ये प्रमाविषयत्वं हेतुः। यदा वैशिष्ट्यांशेन भानं तदा ज्ञानविषयत्वमेव हेतुः। प्रतियोगीत्यादिकन्तु तर्कसूचनायोक्तम्। न तु हेत्वन्तर्गत इति। आद्य इति। भावाभावयोर्विभागं विना भावानामभावान्तरविभागानु-

सौगतमलीकत्वान्नोद्दिष्ट इति प्रत्यवस्थितं प्रत्याह। स्वरूपवान् प्रामाणिकः। अत्र हेतुः प्रतियोगीति। प्रतियोगिनिरूपणं तत्प्रमा। तदधीनं निरूपणं प्रमा यस्य तत्त्वात्प्रमित इति सौगते निरस्ते विशिष्यानुद्देशे हेतुमाह। उत्पत्तीति। अभ्युपगमसिद्धान्तसिद्धत्वादित्यर्थः। निःश्रेयसोपयोगिपदार्थे प्रस्तुते अभावस्यापि तत्त्वात्। सामान्यतो द्विविधः पदार्थो भावोऽभावश्चेत्यर्थः। पदार्थविभागः शास्त्रस्य भावविभाग इति भावः।

यद्वा प्रतियोगितन्त्वं न्यायशास्त्रं तन्निरूपणाधीननिरूपणत्वात्। दृष्टश्च प्रतितन्त्रोपदिष्टस्यानुद्देशो यथा न्यायशास्त्रे मनस इन्द्रियत्वस्य। (१६) यद्वा पृथङ् नोद्दिष्टः। द्रव्यादिपदेनैव तद्वाव्रुत्तिरूपवैशिष्ट्याभिधायिनोद्दिष्टत्वादित्यर्थः। द्रव्यादितत्त्वज्ञानस्य गौणप्रयोजनत्वमाह। तेनेति। तत्त्वप्रतिपादनमत्र नात्मादीनामितरभेदानुमितिजनकत्वम्। शब्दात्मकस्य संग्रहस्यानुमितिजनकत्वे मानाभावात्। जातिसङ्करप्रसङ्गाच्च। किन्त्वात्मविवेके प्रमाणोपदर्शनमेव। एवञ्च परमपुरुषार्थसाधनसाधनताज्ञानादेव शास्त्रे प्रवृत्तिरिति विपश्चितं न्यायप्रथमाध्याय प्रकाशेऽस्माभिः॥

पपत्तिरिति भावः। यद्यपि निःश्रेयसोपयोगित्वाविशेषाद्भावविभागवद्विभागेऽपि शास्त्र एव युज्यते तथापि स्वतन्त्रेच्छस्य नियोगाद्यनुपपत्तिरिति भावः।

(१६) नन्वयं नोद्दिष्ट इत्येवोच्येत न तु पृथगिति विशेषयेदित्याशयादाह। यद्वा पृथगिति। अतद्व्यावृत्तिवैशिष्ट्यमित्याचार्य्यमतानुसारेणेदम्। यद्यप्येवमपि प्रागभावादीनामप्राप्तिरेव। तथापि पूर्व्वोक्तो तात्पर्य्यम्। जातिसङ्करेति। यद्यपि वैशेषिकमते शाब्दत्वं न जातिः तथापि न्यायनयमभ्युपेत्याक्रम्।

निःश्रेयसं पुन र्दुःखनिवृत्तिरात्यन्तिकी। अत्र च वादिना मविवाद एव। न ह्यपवृक्तस्य दुःखं प्रत्यापद्यत इति कश्चिदभ्युपैति। केवलमात्मापि दुःखहेतुत्वान्निवर्त्तयितव्यः शरीरादिवदिति ये वदन्ति तेषां यद्यसौ

तथापि नाविविक्तस्य निःश्रेयसस्य पुरुषार्थत्वमिति तद्विविनक्ति। निःश्रेयसमिति। दुःखनिवृत्तिमात्रं संसारितावस्थायामप्यस्तीति अत उक्तमात्यन्तिकीति।

(१७) ननु किमात्यन्तिकत्वं न तावद्दुःखासमानकालीनत्वम्। इदानीममुक्तत्वापत्तेः। नापि सामानाधिकरण्यविशेषितमिदमेव सुषुप्तस्यापि मुक्तत्वापत्तेः। नापि द्वेषाजनकदुःखप्रतियोगि-

विपश्चितामिति। कारणतत्कारणसाधारणस्यैव प्रवर्त्तकस्य तत्र नियुक्तत्वादिति भावः॥

(१७) नन्वात्यन्तिकस्य निवृत्तिविशेषणत्वेऽत्यन्ताभावः फलति। स च न मुक्तिरसाध्यत्वादित्याशयेन पृच्छति। नन्विति। सुषुप्तस्यापीति। दुःखासमानकालीनत्वं दुःखसमानकालीनात्यन्ताभावत्वं यदि तदा सुषुप्तिकालावच्छेदेन तदत्यन्ताभावसत्त्वादतिव्याप्तिर्बोध्या। अन्यथापि समानाधिकरणदुःखसमानकालीनत्वादिति व्याख्यमत्रैव इति। द्वेषाजनकेति। स चैवं मूले दुःखपदं व्यर्थम। ननु ध्वंसमात्रे तात्पर्य्यात् द्वेषाजनकत्वं यदि तदनुपधानं तदातिव्याप्तिरस्य तदयोग्यत्वं तदासिद्धिरित्यतः दादिसाधारणद्वेषाजनकत्वं वाच्यमेवं मत्वाह। योगिनामपीति। अन्यथा रागद्वेषानुत्पत्ताविष्टानिष्टसाधनताज्ञानाभावे प्रवृत्त्याद्यनुपपत्तेः। किन्त्वदृष्टादिवशोत्कटरागद्वेषाविर्भावमसौऽहितं च भुङ्क्ते इत्यस्याशय इति बोधयन्ति॥

नास्ति किं निवर्त्तयितव्यम् । अत्यन्तासतो नित्य निवृत्तत्वात् । अथास्ति तथापि किं निवर्त्तनीयं नित्यत्वेन तन्निवृत्तेरशक्यत्वात् ।

कत्वं योगिनोऽप्येवं भावात् । परममुक्तेश्चात्र लक्ष्यमाणत्वात् । यद्वक्ष्यति । नह्यपवृक्तात्स्य दुःखं प्रत्याप्स्यत इतीति ।

न च (३८) समानाधिकरणविशेषगुणासमानकालीनात्मविशेषगुणध्वंसो मुक्तिः । भोगतत्साधनेतरत्वेन तस्यादृष्टाजन्यत्वादितिवाच्यम् । ज्ञानस्यापि दुःखतया वर्त्तमानाप्यचिरमनुभूयत इति ग्रन्थविरोधात् । नापि संस्काराजनकभोगध्वंसः चरमभोगस्य संस्काराजनकत्वे मानाभावात् । तस्य संस्कारात् कालाद्वा विनाश इति वार्त्तिकविरोधाच्च । नापि ज्ञानाजनकसंस्कारध्वंसः रोगादि नापि तन्नाशसम्भवात् ।

(३८) समानाधिकरणेति । इदानीन्तनमुक्तात्व्याप्तिवारणाय समानाधिकरणपदम् । आत्मैकत्वादिकमादायासम्भववारणायात्मविशेष्यपदम् । घटरूपादिध्वंसातिव्याप्तिवारणायात्मपदम् । चरमविशेष्यपदञ्च मुक्तात्ममनःसंयोगध्वंसेऽतिव्याप्तिवारणाय । न च सोऽपि ध्वंसो मुक्तिरेवेति वाच्यम् । मनसो मुक्तत्वापत्तेरिति भावः । ज्ञानस्यापीति । यद्यपि ज्ञानस्यापि दुःखतयेति न वार्त्तिकग्रन्थान्तर्गतमनः तदनन्तभावनेव ग्रन्थविरोधसम्भवात तद्वारणं तथापि विशेषगुणत्वादिना दुःखरूपविशेषगुणासमानकालीनत्वं विवक्षितमिति यदि कश्चिद् ब्रूयात् । तदापि चरमज्ञानस्यैकविंशतिप्रभेदभिन्नदुःखान्तर्गततया दोषतादवस्थ्यमेवेति प्रदर्शनाय तदुक्तमिति ध्येयम् । यद्यपि मुख्यदुःखासमानकालीनत्वविवक्षया नोक्त दोषस्तथापि तादृशविशेषगुणध्वंसत्वेन स्वत पुरुषार्थत्वमिति दूषणं द्रष्टव्यम् ।

ननु संस्कारे स्मृतिः प्रमाणं तदभावात् संस्काराभावोऽनुमेय इत्यत आह ।

अथ दुःखेनात्यन्तं विमुक्तश्चरतीति श्रुतेः तदत्यन्तविमोक्षो-ऽपवर्ग इति सूत्राच्च दुःखात्यन्ताभावो मोक्षः। यद्यपि पर-दुःखात्यन्ताभावः स्वतःसिद्ध एव स्वदुःखात्यन्ताभावः स्वात्मन्य-सम्भवी घटादावतिप्रसक्तः असाध्यश्च। तथापि दुःखसाधनध्वंस एव स्ववृत्तिदुःखात्यन्ताभावसम्बन्धः। न चैवमावश्यकत्वात् स एव मोक्षः। तस्य स्वतोऽपुरुषार्थत्वात् दुःखाभावमुद्दिश्य तत्र प्रवृत्तेरिति। तन्न। सत्यत्यन्ताभावे न सम्बन्धो नानागतस्य स्व-वृत्तिदुःखस्य। मुक्तस्यानागतदुःखाभावात् अत्यन्ताभावसम्बन्ध-विरोधाच्च। नाप्युत्पन्नस्य तस्य। तद्वृत्तिसत्वात्यन्ताभावविरोधात्। अतीतदुःखात्यन्ताभावस्यानुद्देश्यत्वात्। नापि परकीय दुःखस्या-त्यन्ताभावेन सम्बन्धः तस्य स्वतः सिद्धत्वात्। ३८ तस्मात् समान

तस्येति। तथा च चरमभोगस्यावश्यं संस्कारजनकत्वमस्त्वपर्यायमिति भावः। वस्तुतः संस्काराजनकत्वं यदि तदनुपाकृतत्वं तदातिव्याप्तिः अथ तद्योग्यत्वं तदासम्भवो ऽनेन च रूपेण स्वतः पुरुषार्थत्वमिति भावः। ज्ञानाजनकत्वं यदि तद्योग्यत्वं तदासम्भव इति तदनुपधानमेव वाच्यमिति तद्दूषयति। रोग इति। दुःख-साधनेति। न च संसारिदशायां यत्किञ्चिद्दुःखसाधनध्वंससम्भवादतिव्याप्ति-रिति वाच्यं समानाधिकरणदुःखसाधनप्रागभावासहवृत्तिदुःखसाधनध्वंसप्रत्या-सत्तिकदुःखात्यन्ताभावस्य मोक्षत्वात्। घटादौ च प्रत्यासत्त्यभावान्नातिप्रसक्तिः॥

(३८ तस्मात् समानेति। तथा च स्वसमानकालीन स्वसमानाधिकरण दुःख-प्रागभावसमानदेशो दुःखध्वंसो घटादौना प्रसिद्धस्तद्भिन्नदुःखध्वंसो मोक्ष इति पर्यवस्यति तेन नाप्रसिद्धिः।

ननु समानकालीनपदस्यासम्भववारकत्वे सार्थकत्वेऽपि समानाधिकरणपदं व्यर्थमिति चेन्न। देशपदस्याधिकरणसामान्यपरतया इदानीन्तनमुक्तव्याप्ति

कालीन समानाधिकरण दुःखप्रागभावासमानदेशत्वमेव दुःखध्वंसस्यात्यन्तिकत्वम् । आद्यविशेषणद्वयनिवेशात् नेदानीन्तनमुक्त्यतिव्याप्त्यसम्भवौ । अत्र चेति । यद्यप्यात्यन्तिकदुःखनिवृत्तेर्मुक्तित्वे विवाद एव तथापि मुक्तिदशायां ईदृशदुःखनिवृत्तिरस्तीत्यत्र न विवाद इत्यर्थः । एतदेव स्पष्टयति । नहीति । शरीरादीनामुच्छेद्यत्वे दुःखहेतुत्वमेव तन्त्रं तच्चात्मन्यपीति तस्याप्युच्छेदो मोक्ष इति

---

वारकत्वात् । शुकादिदुःखध्वंसस्य समानकालीन दुःखप्रागभावेन समानकालेऽधिकरणे समानाधिकरणत्वात न च समानाधिकरणपददानेऽप्येष दोषः । आत्मरूपाधिकरणस्यात्र विवक्षितत्वात् ।

न च देशपदमेव तत्परमस्तु तथा च व्यर्थविशेषणत्वमेवेतिवाच्यम । स्वतन्त्रेच्छाया नियोगाद्यनुपपत्ते यथोक्तव्याख्याने व्यर्थत्वाद्यभावात । न चैवमव्याप्तिवारकत्वे आद्यविशेषणेत्यस्यासमन्वयविरोध इति वाच्यम । व्याप्तिमतिक्रान्तातिव्याप्ति रित्यनेनाव्याप्त्यभिधाने तात्पर्यात् । लक्ष्ये लक्षणातिव्याप्तेर्दुर्घटत्वात् अव्याप्तिरित्येव पाठः । अतिव्याप्तिपाठस्तु क्वाचित्कः प्रामादिक इत्यपि वदन्ति नवीनान्त्यदुःखध्वंसेऽतिव्याप्तिः । आद्यदुःखपदस्यैकप्रभेददुःखपरतया चरमभोगरूपदुःखप्रागभावसमानदेशत्वात अतएव प्रागभावपदमप्यर्पवत । भोगरूपसमानदेशतया चरमदुःखध्वंसस्यासम्भववारकत्वात ।

यदन्तु । लक्षणद्वये तात्पर्य्यम । एकत्र देशपदं कालरूपाधिकरणपरं अपरत्रात्मरूपाधिकरणपरम । तथा च समानाधिकरणदुःखप्रागभावासमानकालीदुःखध्वंसइत्येकम । समानकालीन दुःखप्रागभावासमानाधिकरणो दुःखध्वंस इत्यपरम अत्र चरममुक्तौ सम्भवेनासम्भवाभावादिदानीन्तनमुक्त्यव्याप्तिवारणाय प्रथमलक्षणे समानाधिकरणपदम । असम्भववारणाय द्वितीयलक्षणे समानकालीनपदम । तदिदमुक्तमाद्यविशेषणेति । नत्वेकत्रैव लक्षणे विशेषणद्वये नोभयदोषवारणमिति तदर्थ इति भ्रमः ।

केचित्तु स्वसमानकालीन समानाधिकरणश्च तौ तथा । तथाभूतो यं

सौगतमत मुत्थाप्य निराकरोति। केवलमिति। यद्यसाविति। शरीरादिभिन्ने यद्यात्मत्वं न वर्त्तेत इत्यर्थः। यथास्तीति। शरीरादिभिन्ने यद्यात्मत्वं वर्त्तेत इत्यर्थः। नित्यत्वेनेति। वीतरागजन्मादर्शनादिति न्यायेनानादित्वसिद्धौ अनादिभावस्य नित्यत्वं धर्मिग्राहकमानसिद्धमित्यर्थः।

दुःखप्रागभावौ ताभ्यामसमानदेशत्वमित्यर्थः। तेन तदुभयसमानदेशत्वाभावस्य विशिष्टाभावतया न व्यर्थविशेषणत्वम्। यथा घटवत्यपि घटपटोभयाभाव इति। अत एव नाप्रसिद्धिरपि प्रत्येकं प्रसिद्धेः। यथा व्याख्यातेनोपपत्तेश्चान्योन्याभावगर्भत्वमादाय प्रसिद्ध्युपपादनम्। व्यर्थविशेषणताभयेन तथा व्याख्यानादरस्यावश्यकत्वादिति वदन्ति। तच्चिन्त्यम्। चरमसुखौ समानकालीनदुःख प्रागभावाप्रसिद्ध्या प्रत्येकमपि प्रसिद्ध्यसम्भवात्। यदि च तदुभयसमानदेशो दुःखध्वंसो ऽस्मदादीनां प्रसिद्धस्तद्भिन्नदुःखध्वंसो मोक्ष इत्यभिमतं तदा किं इत्यादिना क्लिष्टव्याख्यानेन। न च व्यर्थविशेषणताभयेन तथा व्याख्यानादर आवश्यक इति वाच्यम्। कल्पभेदपरयानुसरणेऽप्यन्योन्याभावगर्भतया प्रसिद्धेर्विशिष्टाभावतया व्यर्थविशेषणत्वाभावाच्च तस्यावश्यकत्वम्।

ननु सुखान्तमुक्तावव्याप्तिः। ते नराः सुखमेधन्त इति श्रुते मरणस्य दुःखाव्याप्तत्वसम्भवात्। न च तत्सुखपूर्वकालीनदुःखध्वंस एव मुक्तिः। तत्राप्यन्त्यलक्षणाव्याप्तेः। तत्सुखस्थानस्यापि दुःखतया तत्प्रागभावसमानदेशत्वात् मुक्तस्य सुखोत्पत्त्यसम्भवाच्चेति चेन्न। ते नरा इत्यादि श्रुतेरन्यापेक्षया मरणेऽल्पदुःखभाज इत्यत्र तात्पर्यात्। न चानुपपत्तिं विना न मुख्यार्थत्याग इति वाच्यम्। दुःखविशेषहेतुत्वयवादिपीडनमन्तरेण दुःखोत्पादस्यावश्यकत्वात्।

ननु मरणे दुःखं मे माभूदिति कामनया प्रयागस्नातो यस्तत्र का गतिरिति चेन्न। तत्र कामनैव बाधिता। अन्यथा यत्र स्वर्गे मम दुःखं भवत्विति कामनया स्नात स्तत्र का गतिः। न च दुःखे कामनैव नेति वाच्यम्। इष्टसाधनताज्ञानेन तत्सम्भवात्। न च यत्र योगिनां सकलदुःखमुपभुज्य सुखं भुक्तं तन्मुक्तावव्याप्ति

अथ ज्ञानस्वभाव एवासौ निवर्त्तनीय इति मतं अनुमतमेतत् । दग्धेन्धनानलवदुपशमो मोक्ष इति वक्ष्यमाणत्वात् । तस्मादतिरिक्ते आत्मनि प्रमाणं वक्तव्यमित्यवशिष्यते । तद्वक्ष्यामः । सांख्यानामपि दुःखनिवृत्तिरपवर्ग इत्यत्र न विप्रतिपत्तिः । प्रकृत्या-श्रयं दुःखं न पुरुषाश्रयमिति विवादः । तन्मतमग्रे निराकरिष्यामः । यत्वनुपप्लवा चित्तसन्ततिः सन्तापा-

ननु प्रवृत्तिविज्ञानसन्तानान्तःपातिकादाचित्कोऽहंप्रत्यय एवात्मा स चोच्छेद्य एवेत्याह । अथेति । यदि भावस्योच्छेदो मोक्ष इत्युच्यते (४०) तदेष्टापत्तिरस्माभिरपि तत्त्वज्ञानं मिथ्याज्ञानं विनाश्य नश्यतीत्यभ्युपगमादित्याह । दग्धेति ।

नन्वेवं ज्ञानरूपस्यात्मनो मोक्षे नाश इत्यस्मत्समीहितं सिद्ध-मित्यत आह । तस्मादिति । प्रकृत्याश्रयमिति । यद्यपि भावा-दृष्टसम्पन्नतया सहत एव दुःखमपीष्यते सांख्यै स्तथापि तन्मते कार्य्यकारणयोरभेदात् प्रकृत्याश्रयं दुःखमुक्तम् । एतस्य विवादस्य

रिति वाच्यम् । तत्रापि शरीरत्यागसमयेऽवश्यं दुःखोत्पत्तेः । न च भोजकादृष्टं विना कथं दुःखोत्पत्तिरिति वाच्यम् । अदृष्टान्तरस्य भोगेन क्षीणत्वेऽप्यवश्यो-त्पत्स्यमानमरणदुःखभोजकादृष्टस्य सत्त्वात् । न चैवमीश्वरस्यापि शरीरत्यागकाले दुःखापत्तिरिति वाच्यम् । अदृष्टादिकारणबाधेन बाधादिति दिक् ॥

(४०) व्याघातादिभयादाह । शरीरादिति । तदेष्टापत्तिरिति । अशेष-विशेषगुणोच्छित्तिर्मुक्तिरिति मतेनेदम् ॥

वर्गमाहुः तेऽप्युपप्लवस्य दुःखमयत्वात् तन्निवृत्तिमेवे-
च्छन्ति। न च चित्तसन्ततेरनन्तत्वं प्रामाणिकं निमि-
त्तस्य शरीरादेरपाये नैमित्तिकस्य चित्तस्योत्पादयितु-
मशक्यत्वात्। उपप्लवावस्थायां तन्निमित्तमिति चेन्न।
अनुपप्लवस्यापि तत्साध्यत्वात्।

न हि शरीरनिरपेक्षा तत्सिद्धिः सम्भवति। योगा-
भ्याससाध्यत्वात् तस्य। अन्यथान्योन्याश्रयप्रसङ्गात्।

मोक्षाविषयत्वेऽपि यस्य दुःखनिवृत्तिस्तस्य मोक्ष इति प्रकृतेरेव
मोक्षो नात्मन इति मोक्षविषयत्वमस्यास्त्येवेति भावः। प्रवृत्ति-
विज्ञानोपादानमालयविज्ञानसन्तानः पूर्व्वपूर्व्वतज्जातीयज्ञानोपा
देयः स एवैको मोक्षेऽनुवर्त्तत इति मतमुत्थाप्य निराकरोति।
ये त्विति। उपप्लवः संसारः। उपप्लवेति। अनुपप्लवावस्थायाञ्च
शरीरं विनापि पूर्व्वपूर्व्वालयविज्ञानेनैव उत्तरं तदुत्पाद्यत इत्यर्थः।
अनुपप्लवस्यापीति। उपप्लवध्वंसो वानुपप्लवः। अविद्यमान
उपप्लवो यत्रेति चित्तविशेषो वोभयत्रापि शरीरं कारणमित्यर्थः।

योगेति। योगस्य शरीरजन्यश्रवणादिसाध्य इत्यर्थः। अन्य-
थेति। न चोपप्लवावस्थावर्त्तिशरीरमनुपप्लवं साधयतीति नान्यो-
न्याश्रय इति वाच्यम्। चित्तोत्पादं प्रति (४१) सामान्यत

(४१) सामान्यत इति। लाघवेन अन्यज्ञानत्वावच्छिन्ने शरीरं हेतुः न तु
संसारकालीनजन्यज्ञानत्वावच्छिन्ने गौरवादिति भावः।

शरीरादिनिवृत्तावनुपप्लवश्चित्तस्य। अनुपप्लवे च तस्मिन् शरीरादिनिवृत्तिरिति। अथ शरीरादिकमपि चित्तविलसितमात्रं न तु वास्तवमित्यभिप्रायः तत्र वच्यते। वेदान्तिनामप्यविद्यायां निवृत्तायां केवलमात्मैवापवर्गे

एव शरीरस्य हेतुत्वेनानुपप्लवावस्थायामपि तदभावे चित्तसन्ततेरेवानुत्पादात्। अथेति। विज्ञानमेव पारमार्थिकं ग्राह्यांशस्यालीकत्वमिति पक्षे ज्ञानभिन्नं शरीरं वस्तु नास्त्येव कस्य च तत्कारणतेत्यर्थः। वेदान्तिनामिति। वस्तुतो ब्रह्माद्वैतमाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मकः केवल आत्मापवर्गे वर्त्तते इत्येकदण्डिमतमयुक्तम्। स्वप्रकाशसुखात्मकस्य ब्रह्मणो नित्यतया मुक्तसंसारिणोरविशेषापातात्। पुरुषप्रयत्नं विनापि तत्सत्त्वेन तस्यापुरुषार्थत्वाच्च। अविद्यानिवृत्तिमात्रस्य प्रयत्नसाध्यत्वेऽपि अपुरुषार्थत्वात्। न पुत्र इति। एषा श्रुतिः पुत्रस्यात्मसम्बन्धेन प्रियत्वं बोधयत्यात्मनः स्वाभाविकं प्रियत्वं बोधयति। यदन्वये यत्प्रतीयते यद्विरहे तु न प्रतीयते तत्तस्य स्वाभाविकमिति लोकसिद्धव्युत्पत्तेः। आनन्दं ब्रह्मणो रूपमित्येकवाक्यत्वाच्चात्मनः प्रियात्मकानन्दरूपत्वप्रतीतेश्च। न चात्मनं इति तादर्थ्यचतुर्थ्यनुपपत्तिः। यूपाय दार्व्वित्यत्र दारुस्वरूपयूपार्थत्व-

न च दारुयूपयोरभेदादस्तु तथा। आत्मपुत्रयोस्तु भेद इति कथमेवमिति वाच्यम्। अद्वैतवादिना परेण तथाभ्युपगमात्। अन्यथा दारुयूपयोरप्यवस्थावयविभेदेनातथात्वापत्तेः।

वर्त्तते इति मते न नो विवादः। न पुत्रः पुत्राय प्रियो भवति आत्मने वै पुत्रः प्रियो भवति इत्यादि श्रौतोपपत्तिबलात् सर्वस्यात्मौपाधिकं प्रियत्वं स्वभावतश्चात्मैव प्रिय इति पुनरवशिष्यते तत्र वक्ष्यते।

तीतातिता स्त्वकार्य्यमपीश्वरज्ञानं शरीरमन्तरेणा-

वदुपपत्तेरित्यर्थः। चिदंशेन स्वानन्दमयपरमात्मनि जीवात्मलयो मुक्तिः। लयश्च लिङ्गशरीरापगमः। लिङ्गशरीरञ्चैकादशेन्द्रियाणि महाभूतानि पञ्च च सूक्ष्ममात्रया सम्भूयावस्थितानि जीवात्मनि सुखदुःखावच्छेदकानीत्याहुः। तन्न। शरीरध्वंसस्य स्वतोऽपुरुषार्थत्वात्। न चौपाधिशरीरनाशे औपाधिकजीवनाशो लयः। स्वनाशस्यापुरुषार्थत्वात्। ब्रह्मणो नित्यत्वेन तदभिन्नस्य नाशानुपपत्तेश्च। भेदाभेदस्य विरोधेनासम्भवात्।

दुःखसाधनशरीरनाशे (४२) नित्यसुखाभिव्यक्तिर्मुक्तिरिति भाट्टमतं निराकरोति। तीतातितास्त्विति। ईश्वरं शरीरं विना नित्यमपि न ज्ञानमित्यङ्गीकृत्य मुक्तस्य भोगायतनं विना भोग इत्यभ्युपगमाच्च त्रपा। कारणं विना कार्य्यमिति विरोधः।

(४२) नित्येति। नित्यं यत् सुखं तस्याभिव्यक्तिरित्यर्थः। ज्ञानमात्रे अन्यज्ञानमात्रे।

ननु नित्यसुखाभिव्यक्तेः प्रामाणिकत्वे बाधादेव न सामान्यतः शरीरहेतुता किन्तु तदर्थं शरीरप्रागभावासहवृत्ति शरीरध्वंसादि हेतुः कल्प्यत इत्यत आह। तथा तत्वेति। तथा नित्ये सुखे मानमित्यर्थः। यद्यपि भट्टमते ज्ञानं न प्रत्यक्षं तथापि

निष्क्रान्तः कार्य्यमेव सुखज्ञान मपवर्गोऽस्तीति वदन्त स्तपा विरोधो भयमिति त्रयमपि त्यक्तवन्तश्च । एतेन पारतन्त्र्यं बन्धः स्वातन्त्र्यञ्च मुक्तिरित्यप्यपास्तम् । न हि पारतन्त्र्यं स्वरूपतो हेय मपितु दुःखहेतुतया

शरीरं विनापि ज्ञानसत्त्वेनानभिमतेश्वरसिद्धिप्रसक्त्या भयमित्यर्थः । वस्तुतोऽभिव्यक्ति र्न नित्या । मुक्तसंसारिणोरविशेषापातात् । नोत्पाद्या तद्धेतुशरीराद्यभावात् । सामान्यत एव ज्ञानमात्रे तस्य कारणत्वात् । न वा तत्र मानम् । न च नित्यं विज्ञान-मानन्दं ब्रह्मेति श्रुति र्मानं । उत्पत्तिविनाशवतो र्ज्ञानसुखयो रहं जाने अहं सुखीति स्वभिन्नत्वेनानुभूयमानयो र्ब्रह्माभेदसाधने प्रत्यक्षबाधात् । आनन्दं ब्रह्मेति श्रुत्या मत्वर्थीयात् प्रत्ययात् तत्त्वेनानन्दवत्त्वं ब्रह्मणो बोध्यते । नाभेदः । अन्यथाऽजहल्लिङ्गा-नन्दशब्दस्य नपुंसकलिङ्गत्वानुपपत्तिः । न च लिङ्गव्यत्ययो यथोक्तेनैवोपपत्तौ मानाभावादितिभावः । ऐश्वर्य्यमिति । अणि-माद्यष्टसिद्धिरित्यर्थः । प्राभाकरा स्त्वात्यन्तिकदुःखप्रागभावो

स्वमतावष्टम्भेनेदमुक्तम् । तर्हि श्रुतेः का गतिरित्यत आह । आनन्दमिति । आत्यन्तिकेति । आत्यन्तिकत्वमविनाशित्वमित्याहुः । तच्चिन्त्यम् । तादृशदुःख प्रागभावस्य संसारितादशायामपि सत्त्वेनातिव्याप्त्यापत्तेः । तस्मात् समानाधि-करणयावद्दुःखध्वंससमानकालीनत्वं अन्ययावद्दुःखसाधनध्वंससमानकालीन-त्वञ्चात्यन्तिकत्वमित्याहुः । यद्यपि परैरतिरिक्ताभावो नाभ्युपेयते तथापि तद्दे-कदेशिमतेनेदम् । उत्तरावधीति । अनाद्युत्तराविधिविधुरसंसर्गाभावत्वेनेत्यर्थः ।

स्वातन्त्र्यमपि। यदि दुःख-तत्साधननिवृत्तिस्तदा मित्यु च्यते। ऐश्वर्य्यं चेत्कार्य्यतया तदपि साधनपरतन्त्रं क्षयि चेति दुःखाकरत्वाद्धेयमेवेति। तस्मादनिष्टनिवृत्ति रात्यन्तिकी निःश्रेयसमिति।

नन्वपुरुषार्थोऽयं सुखस्यापि हानेरितिचेत्। न। बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेय-

मात्त्वात्। न च तस्यानादित्वादपुरुषार्थत्वम्। कृत्यधीनतत्त्व ज्ञानादधर्म्मनाशे सत्यग्रिमकाले दुःखप्रागभावस्वरूपमस्ति। तद्विरहे सत्यधर्म्मेण दुःखजननात्तत्स्वरूपमिति घटवत्कृति-साध्यत्वादित्याहुः। तन्न। प्रागभावस्य प्रतियोगिजनकत्वेन मुक्तस्यापि दुःखोत्पादापत्तेः। अधर्म्मादिसहकार्य्यभावान्न तथेति चेत्। तर्ह्युत्तरावधिविधुरत्वेन तस्यात्यन्ताभावत्वापत्तिः। किञ्चा मुक्तेः प्रागभावस्य प्रतियोगी न तावत्समानाधिकरणं भाविदुःखं तस्याभावात्। नापि व्यधिकरणं तत्। अन्यवृत्तिदुःखस्या न्यत्रात्यन्ताभावेन प्रागभावाभावात्। तस्य प्रतियोगिसमान-देशत्वनियमात्। नापि दुःखमात्रम। स्वपरावृत्ते दुःखमात्र-स्याप्रामाणिकत्वात्। तस्यात्यन्तासतो नित्यनिवृत्तत्वेन तन्नि वृत्तये प्रेक्षावत्प्रवृत्त्यनुपपत्तेः।

सुखस्यापीति। तुल्यायव्ययत्वाद्दुःखाभावोऽपि न पुरुषार्थ इत्यर्थः। बहुतरेति। ननु तथाप्यावश्यकत्वेन दुःखस्यैव हेयत्वं सुखस्य निरुपधीच्छाविषयत्वात्। अन्यथा दुःखाननुविद्धतया तस्य

त्वात् । मधुविषसंपृक्तान्नभोजनजन्यसुखवत् । तथापि दुःखोच्छित्तिरपुरुषार्थः । अनागतस्य निवर्त्तयितु

---

काम्यत्वे स्वतः पुरुषार्थत्वविरोधः । मैवम् । सुखमनुद्दिश्यापि दुःखभीरूणां दुःखहानार्थं प्रवृत्तिदर्शनेन दुःखाभावस्यैव स्वतः पुरुषार्थत्वात् । न हि दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवर्त्तते वैपरीत्यस्यापि सुवचनत्वेन सुखस्याप्यपुरुषार्थत्वापत्तेः । अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिनः प्रवृत्तिप्रतिबन्धकम् । दुःखभीरूणां सुखलिप्सूनां मोक्षेऽधिकारादिति भावः । तथापीति । अपुरुषार्थत्वं कृत्यसाध्यत्वम् । हेतूच्छेद इति ।

ननु तथापि दुःखध्वंसस्यापुरुषार्थत्वमेव । (४२) हेतुरपि किमुत्पादितदुःखोऽथोत्पाद्यमानदुःखो यद्वोत्पत्स्यमानदुःखः । आद्यो निष्फलः प्रयासः । अन्त्ये तु यदि तत्र मानमस्ति तच्छेक्यत्वम् । अथ तन्नास्ति स दोषस्तदवस्थ एव । न च जीवन्मुक्तिकालीनानेकशरीरोपभोग्यसुखार्थं प्रयत्नस्तस्य पुरुषप्रयत्नं विनानुत्पत्तेरिति वाच्यम् । दुःखानुषङ्गितया सुखमपि हेयपक्षे निक्षिपतो मोक्षेऽधिकारात् । मैवम् । दुःखान्तरध्वंसस्यायत्नसिद्धत्वेऽपि चरमदुःखध्वंसस्य मिथ्याज्ञानोच्छेदद्वारा पुरु-

(४२) तर्हि हेतूच्छेद एव पुरुषार्थोऽस्त्विति मत आह । हेतुरपीति । यदि तत्रेति । यदि तस्योत्पत्स्यमानदुःखत्वे प्रमाणमस्ति तदा तेनावश्यं दुःखमुत्पादनीयमिति तन्निवर्त्तनमशक्यमित्यर्थः । स दोष इति । निष्फलः प्रयास इत्यर्थः ।

मशक्यत्वात्। वर्त्तमानस्य च पुरुषप्रयत्नमन्तरेणैव विरोधिगुणान्तरोपनिपातनिवर्त्तनीयत्वात्। अतीतस्यातीतत्वादेवेति चेन्न। हेतूच्छेदे पुरुषव्यापारात् प्रायश्चित्तवत्।

पार्थत्वात्। न च चरमदुःखे उत्पन्ने तद्ध्वंसः तज्ज्ञानादेव स्यात्। तदनुत्पादे च तत्त्वज्ञानादपि न स्यादिति वाच्यम्। प्रतियोगिवत् तत्त्वज्ञानस्यापि तद्धेतुत्वात्। तेन विना तदनुत्पत्तेः। अतएव यस्य तत्त्वज्ञानमुत्पन्नं तस्य स ध्वंसः उत्पन्नो नास्मदादीनाम्। अथ तद्दुःखं नोत्पन्नमस्ति स्वकारणाभावात् तेन स ध्वंसो नास्मदादीनामिति चेत्। न। तस्यान्वयव्यतिरेकानुविधायिनः तत्त्वज्ञानाद् भिन्नस्याभावात्। यद्येवं दुःखध्वंसार्थं तद्दुःखमुपादेयं स्यात् तदनुत्पादे तद्ध्वंसस्यानुत्पादनात्। तथापि पुरुषार्थहेतुत्वेन दुःखतत्साधनयोरप्युपादानदर्शनाद् विरोधः। तस्य च दुःखध्वंसस्यायत्नसिद्धदुःखान्तरध्वंसवद्दुःखध्वंसत्वेनापुरुषार्थत्वेऽपि उक्तरूपदुःखध्वंसत्वेनोद्देश्यत्वात्। तस्य च यथोत्पत्तिस्तदाह। हेतूच्छेद इति।

केचित्तु यथाश्रुतग्रन्थानुरोधात् दुःखप्रागभावासहवृत्तिदुःखसाधनध्वंसो मोक्षः। तथाच यथा दुःखसाधनस्य विद्यमानस्य

दुःखानुत्पादकत्वेन तन्निवृत्तेरनुद्देश्यत्वादिति भावः। उक्तरूपेति। समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसत्वेनेत्यर्थः। नन्वेवं मूलस्य का गतिरित्यत आह। तस्य च यथेति। यथाश्रुतेति। हेतूच्छेद इति मूलेत्यर्थः।

दुरितस्योच्छेदाय प्रायश्चित्ते प्रवृत्तिः एवं दुःखसन्ततिनिदानस्य विद्यमानस्य मिथ्याज्ञानस्योच्छेदविशेषायापवर्गार्थिनः तद्विरोधितत्त्वज्ञाननिदाने श्रवणादौ प्रवृत्तिरित्यर्थः । प्रायश्चित्तनाश्यपापजन्यदुःखानुत्पत्त्या तद्ध्वंसासम्भवात् ।

न च (४४) सुखदुःखनिवृत्तिभ्यामेव प्रवर्त्तत इति वार्त्तिकविरोधः । दुःखनिवृत्तिः पुरुषार्थ इत्यत्र दुःखत्वनिरूपित प्रतियोगिको ध्वंसः साध्य इत्यर्थात् । एतच्च दुःखध्वंसे तद्धेतुध्वंसे च साधारणमिति दुःखहेतुतां दुरितादे रननुसन्धाय दुःखसाधनोच्छेदके प्रायश्चित्तादावप्रवृत्तेः । तथाच दुःखप्रागभावासहवृत्ति दुःखसाधनध्वंसो मोक्षः । लोके हि कण्टकनाशस्य वेदे प्रायश्चित्तेन पापनाशस्यानन्यगतिकतया दुःखसाधनध्वंसत्वेन पुरुषार्थत्वादित्याहुः । तन्न । दुःखं मे माभूदित्युद्दिश्य प्रायश्चित्तादौ प्रवृत्ते र्दुःखानुत्पादनस्यैव प्रयोजनत्वात् । न च प्रागभावस्यासाध्यत्वम् ।

(४४) सुख दुःख निवृत्तिरिति । तथाच सुखदुःखाभावयोरेव स्वत पुरुषार्थत्वम । नतु दुःखसाधनध्वंसस्येति भावः । दुःखनिरूपितेति । यद्यपि दुःखनिवृत्तौ दुःखमेव प्रतियोगि नतु तन्निरूपितः प्रतियोगी तथापि दुःखत्वनिरूपितेत्यर्थः । अतएव क्वचित तथैव पाठ इति । दुःखसाधनध्वंसत्वेनैव पुरुषार्थत्वमितिभावः । दुःख प्रागभावेति । समानाधिकरणेति बोध्यम् ।

एतन्मते चरमदुःखसमकालेऽपि मुक्तत्वे न दोषः । दुःखं मे माभूदिति । तथा दुःखानुत्पाद एव स्वतः पुरुषार्थो नतु दुःखसाधनध्वंस । अन्यथा तस्यैव मुख्यत उद्देश्यता स्यादिति भावः । किन्तु पापान्तरमिति ।

नन्वेवं कृतप्रायश्चित्तस्य काशीमृतस्य कथं मुक्तिः । नच तत्रापि पुन पापान्तरोत्पत्तिरिति वाच्यम् । काशीमरणेनोत्पन्नतत्त्वज्ञानस्य तस्य दोषाभावेन तदुत्पत्तेर-

दुःखकारणविघटनद्वारा तस्यापि कृतिसाध्यत्वात्। कृत्यधीनाग्रिमकालसम्बन्धस्यैव तत्त्वात्। प्रायश्चित्तवदिति। ननु प्रायश्चित्तनाश्यपापजन्यदुःखप्रागभावो यद्यस्ति तदा दुःखमावश्यकम्। तस्य प्रतियोगिजनकत्वनियमात्। नास्ति चेत् तदभावादेव दुःखानुत्पादादुभयथापि प्रायश्चित्तमफलम्। तस्माद्दुःखसाधनध्वंसमुखेन दुःखप्रागभावस्यापि प्रायश्चित्तसाध्यतेति तत्र कृतिसाध्यत्वपर्य्यवसानात् दुःखसाधनध्वंस एव पुरुषार्थो

भवत्विति चेत्। अत्र वदन्ति। तत्र दुःखप्रागभावो नास्त्येव। नहि तत्सत्त्वावश्यम्भावे मानमस्ति किन्तु यत्र तत्सत्त्वं तत्र तथाभावेन प्रायश्चित्तहेतुत्वम्। तथाच तत्सद्भावसन्देहादेव प्रायश्चित्ते प्रवृत्त्युपपत्तौ यत्र प्रागभावाभावः तत्र प्रायश्चित्तस्याकिञ्चित्करत्वेऽपि न कापि क्षतिः। न च निष्फलत्वे तद्बोधकवेदाप्रामाण्यमिति वाच्यम्। सति दुःखप्रागभावे तस्य तथा जनकत्वमिति वेदतात्पर्य्यात्।

सति दोषे निषिद्धकर्म्मणः पापजनकत्ववत् सति विघ्ने मङ्गलस्य विघ्नध्वंसजनकत्ववच्च। नच दुःखप्रागभावसंशये कथं प्रवृत्तिरिति वाच्यम्। फलसंशयस्याप्रतिबन्धकत्वादिति। तच्चिन्त्यम्। पापादिजनने दोषादेः सहकारित्वमिति तदभावे निषिद्धकर्म्मादेः साफल्याभावात्। निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। इष्टन्तु साङ्गस्य प्रायश्चित्तस्य निष्फलत्वे तद्बोधकवेदाप्रामाण्यं स्यादेव। नहि दुःखप्रागभावरूपे फले दुःखप्रागभावस्यापि सहकारित्वं येन प्रायश्चित्तस्य साङ्गत्वं न स्यादिति। वयन्तु ब्रूमः। अत्र दुःखप्रागभावो नास्त्येव। काशीमरणस्येव तत्र मानत्वात्। प्रवृत्तिश्च तद्भ्रमात् सन्देहाद्वा। नचैवं तद्बोधकवेदाप्रामाण्यमिति वाच्यम्। यत्कामकर्त्तव्यतया हि वेदेन यद्बोध्यते साङ्गस्य तस्यावश्यं तत्फलजनकत्वमिति नियमः। तदिह पापध्वंसकामकर्त्तव्यतया प्रायश्चित्तस्य वेदेन बोधनात् तदनुत्पादे परं तद्बोधकवेदाप्रामाण्यम्। नचात्र तदस्ति तत्रापि प्रायश्चित्तेन पापस्य नाशितत्वात्। नहि दुःखप्रागभावमपेक्ष्य प्रायश्चित्तेन तद्ध्वंसो जन्यते। येन तदभावे तस्य तज्जनकत्वं न स्यात्। अतएव प्रायश्चित्ते पाप

ननु दुःखानुत्पादार्थितया । अत्राहुः । तत्र दुःखप्रागभावोऽस्त्येव तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वात् । सच पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि नव निष्फलम् । तेन प्रागभावेन दुःखमवश्यं जननीयमिति चेत् । सत्यं । किन्तु पापान्तरमासाद्य । नचैवं प्रायश्चित्तमफलम् । दुःखानुत्पादेन तस्य सफलत्वात् । अनेकपापेन दुःखं मे माभूदिति विद्यमानपापनाशार्थं प्रायश्चित्ते प्रवृत्तेः ।

---

ध्वंसकामनैवाधिकारः । ननु दुःखानुत्पादकामना तस्यास्तत्फलत्वात् । नचैवं दुःखानुत्पादस्यैव प्रयोजनादित्याद्यग्रिमग्रन्थविरोधः । प्रायश्चित्तादिस्थले दुःखसाधनध्वंस एव स्वतः पुरुषार्थ इति स एव मोक्ष इति पूर्व्वपक्षे तत्र दुःखानुत्पाद एव स्वतः पुरुषार्थं । तथाच तत्साधनतया पापध्वंसस्तत्र गौणमेव प्रयोजनं ननु स्वतः प्रयोजनमिति स न मोक्ष इति हि तदर्थः । तदिदमुक्तं तस्यैव दुःखानुत्पादरूपत्वेन पुरुषार्थत्वादिति । तथाच प्रायश्चित्तस्य पापध्वंसः फलम् । तत्फलञ्च स्वतः पुरुषार्थो दुःखानुत्पादः । न च परमपुरुषार्थानिष्पत्तौ वेदबोधितफलं जनयतोऽपि निष्फलत्वं तथापि विघ्नध्वंसं समाप्तिं वा जनितवतोऽपि मङ्गलस्य तत्साध्यस्वतःपुरुषार्थसुखाद्यनुत्पत्तौ निष्फलत्वापत्तेः । तस्मात प्रागभावासत्त्वेऽपि तन्निष्फलमिति न तद्बोधकवेदाप्रामाण्यमिति । यत्तु दुःखप्रागभावोऽस्त्येव तथाच तस्य न निष्फलत्वम् । प्रागभावस्य चानन्यगत्या नियतदेशत्वकल्पनादात्मान्तरे पापान्तरमासाद्य तेन दुःखोत्पादनम् । न चैवं दुःखप्रागभावसत्त्वे काशीमृतस्य कथं मुक्तिरिति वाच्यम् । स्वसमवेतदुःखजनकप्रागभावस्यैव मुक्तिविरोधित्वादिति । तन्न । प्रागभावस्य प्रतियोग्यसमानदेशत्वं प्रायश्चित्तप्रवृत्त्यन्यथानुपपत्त्या कल्पनीयम् ।

मानान्तराद्वा । नाद्यः । उक्तगत्या तदन्यथोपपत्तेः । नान्त्यः । तदसिद्धेः । अतएव प्रागभावध्वंसयोः प्रतियोगिसमानदेशत्वमिति सिद्धान्त इति । अफलमिति स्वतः पुरुषार्थं प्रयोजकमित्यर्थः ।

तथाहि मिथ्याज्ञानं सवासन मिह संसारमूलकारणम्। तच्च तत्वज्ञानेन विरोधिना निवर्त्त्यते तन्निवृत्तौ रागाद्यपाये प्रवृत्तेरपायात् जन्माद्यपायः। तथाच दुःखसन्तानोच्छेदः। तच्च तत्त्वज्ञानं पुरुषप्रयत्नसाध्यमिति। किं पुनरत्र प्रमाणम्।

सवासनमिति। वासना तज्जन्यसंस्कारः। तच्चेति। सवासनं मिथ्याज्ञानम्। यद्यपि ज्ञानस्य स्वजन्यस्यैव (४५) संस्कार नाशकत्वाद्वासना तत्त्वज्ञानेन नाश्या तथापि तत्त्वज्ञाने सति भ्रमरूपायाः स्मृतेरभावात् तदैव भ्रमजन्यसंस्कारनाशकमित्यपियम्। नच दुःखवन्मिथ्याज्ञानेऽप्यनागतादिविकल्पः। आत्मतत्त्वसाक्षात्कारपूर्व्वकानेनैव वासनाया एव निवर्त्त्यत्वात्। तन्निवृत्तौ मिथ्याज्ञानाद्यनुत्पत्तिक्रमेण मोक्ष इत्यर्थः।

(४५) संस्कारनाशकत्वादिति। जनजन्यकालान्तरभाविफलानुकूलव्यापार नाशकत्वादित्यर्थो न तु भावनानाशकत्वादिति विवक्षितम्। भावनाया स्मृतिनाश्यत्वात्। अन्यथा स्मृतेर्भावनाजनकत्वे स्मृत्यन्तरानुत्पत्त्यापत्तेः। भावनाजनकत्वे वाभ्यासेन स्मृतिदार्ढ्यानुपपत्तेरिति वदन्ति। स्मृतेरभावादिति। क्वचिदभावादिति पाठो नास्ति। तत्र स्मृतेः प्रसङ्गादिति शेषः। यद्वा तत्त्वज्ञाने सतीत्यकारप्रश्लेष इति। वासनाया एवेति।

ननु वासनापि मिथ्याज्ञानमुत्पाद्य प्रवृत्तिद्वारा मुक्तिविरोधिनी न स्वतः। तथाच मिथ्याज्ञानप्रागभावाभावे तदसम्भवात् तत्सत्त्वेऽपि न क्षतिरिति तन्निवृत्त्यर्थं किं तत्त्वज्ञानेन। न च तत्सत्त्वेऽशेषविशेषगुणोच्छेदलक्षणो न मोक्ष इति वाच्यम्। चरमसंस्कारवत्तस्या अपि कालादिनाशसम्भवादिति चेत्। मैवम्।

दुःखसन्ततिरत्यन्तमुच्छिद्यते सन्ततित्वात् । प्रदीपसन्ततिवदित्याचार्य्याः । पार्थिवपरमाणुगतरूपादिसन्तानेनानैकान्तिकमिदमिति चेन्न । सर्व्वात्मगतदुःखसन्ततिपक्षीकरणे फलतस्तस्यापि पक्षेऽन्तर्भावात् ।

दुःखसन्ततिरिति । ननु का सन्ततिः । न तावत् पूर्व्वापरीभावापन्ना कार्य्यपरम्परा सैव सजातीयत्वविशेषिता वा । (४६) इदानीमपि दुःखधारादर्शनात् । नाप्यनेकमेकजातीयं वस्तु । कया हि जात्यैकजात्यम् । सत्तया वा गुणत्वेन वा । आद्ये सनसोऽप्येवं भावापत्तिः । अन्त्ययोः साधनविकलो दृष्टान्तः । अथ दुःखस्य सन्ततिर्यैव स आत्मा । तेनायमात्मा एतद्दुःखप्रागभावसमानकालीनैतद्दुःखान्यदुःखध्वंसवान् दुःखसन्ततित्वात् । बहु

अन्वयव्यतिरेकाभ्यां चरमदुःखं तद्ध्वंसञ्च प्रति तत्त्वज्ञानस्य हेतुत्वमित्याकर एव प्रागुक्तत्वात् । तत्त्वज्ञानं विना कायव्यूहाद्यनुत्पत्त्या वनन्तकर्म्मक्षयानुपपत्तेश्च । तत्त्वज्ञानस्यावश्यकत्वे पूर्व्वोत्पन्नमिथ्याज्ञानवासनापि तेनैव निवर्त्त्यते । तत्त्वज्ञाने सतीत्यादिनानुपदं तयोर्विरोधस्य व्यवस्थापितत्वादिति भावः ॥

(४६) इदानीमपीति । नन्वस्यामपि पक्षसमत्वादनेन प्रकृतानुमाने किं दूषणमिति चेत् । न । उच्छिद्यत इति वर्त्तमानत्वाभिप्रायेण बाधे तात्पर्य्यादित्येके । अन्ये तु दुःखप्रागभावासमानकालीनदुःखध्वंसप्रतियोगित्वमत्र साध्यार्थः । तथाचेदानीन्तनदुःखधारासु व्यभिचार इत्याहुः । इदानीमपि दुःखधारादर्शनादत्यन्तमुच्छिद्यत इति बाधितम् । इयता कालेन यतो नाभूदित्यपि वदन्ति । तेनायमात्मेति । यद्यप्येवं सर्व्वमुक्तिर्नायाति तथाप्येवमेव प्रत्येकं साध्यमिति तात्पर्य्यमिति भावः । व्यधिकरणदुःखप्रागभावकालीनत्वादेव दुःखस्य बाध इत्युक्तं

व्रीहिसमासेनानित्यज्ञानाश्रयत्वात्। प्रदीपसन्ततिवत्। प्रदीपो ज्ञानं तस्य सन्तति र्यत्र स एतदन्य आत्मा तद्वदित्यर्थः। तन्न। अन्यात्मत्वस्योपाधित्वात् व्यधिकरणबहुव्रीह्यापत्तेः। सन्ततित्वादित्यत्र लक्षणापत्तेश्च। साध्यमप्यात्यन्तिकत्वमुच्छेदस्य किमकादाचित्कत्वम् यद्वा ध्वंसाप्रतियोगित्वम्। आद्ये बाधः।

प्रथमैतत्पदम्। एतदीयसंयोगादिप्रागभावकालीनत्वाद्बाध इत्यत उक्तं आद्यदुःखपदं। एतद्दुःखस्यैतद्दुःखकालीनान्यत्वाभावाद्बाध इत्यत उक्तं प्रागभावेति।

ननु दृष्टान्तासिद्धिरन्यात्मदुःखस्यैतद्दुःखप्रागभावसमानकालीनत्वादित्यत उक्तं द्वितीयैतत्पदम्। एतद्दुःखमेतत्सम्बन्धिदुःखम्। तत्र दुःखपदं स्पष्टार्थम्। तृतीयदुःखपदं दुःखध्वंसस्यैव मुक्तित्वमिति तात्पर्यसिद्धये। प्रागभावकालीनैतद्दुःखान्यत्वं दुःखविशेषणं बोध्यम्। यद्यपि दुःखपदमाकरे नास्ति तथापि बहुव्रीह्यनुरोधेन दुःखपदमध्याहृत्य हेतुमाह। दुःखसन्ततित्वादिति। बहुव्रीहीति। यद्यपि दुःखसन्ततिरित्येव बहुव्रीहिणापि दुःखसन्तत्याश्रयत्वादिति हेत्वर्थे पर्यवस्यति नत्वनित्यज्ञानाश्रयत्वादिति अनित्यज्ञानवाचकपदाभावात्। तथाप्यनयोः समनियमादस्यापि प्रकृतसाध्यहेतुत्वादेव सूक्तिः। अन्यात्मत्वस्येति। समव्याप्तोपाधिपक्षे घटादौ व्यभिचारादात्मत्वं विशेषणम्। अत एव न पक्षेतरत्वमिति भावः। ईश्वरानभ्युपगन्तृमतेनेदम्।

ननु पक्षेतरतुल्यमेतदित्यनुशयादाह। व्यधिकरणेति। पक्षोपन्यासे इति शेषः। हेतूपन्यासे तु यदि दुःखपदाध्याहारस्तदा स एव दोषो यदि च यथाश्रुतस्यैव तत्र तात्पर्यं तत्राह। सन्ततित्वादिति। यदि च व्यधिकरणबहुव्रीहिरपीष्यत एव तथापि तदध्याहारापत्तिरेव दोष इति भावः। यद्यपि सिद्धान्तेऽपि लक्षणाद्यापत्तिरेव तथाप्यापातत इदमुक्तम्। वस्तुतस्तु प्रत्येकमेव साध्यत्वे पुरुषायुषपर्यवसानाच्च सर्व्वमुक्तिसिद्धिः। सिद्धान्त्येकदेशि सर्व्वमुक्त्यसिद्धिरिति हृदयम्। बाध इति। साध्याप्रसिद्धिरिति भावः। आद्ये इति। घटाकाशादिनिष्ठध्वंसप्रतियोगिवृत्तित्वेनार्थान्तरबाधकबोधस्फुरणायाऽऽत्यन्तिकत्वं पक्षविशेषणम्।

अन्त्ये संसारिदुःखध्वंसेन सिद्धसाधनम्। अत्राहुः। आत्मकालान्यवृत्तिध्वंसप्रतियोग्यवृत्तिदुःखत्वं दुःखप्रागभावानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति। कार्य्यमात्रवृत्तिधर्म्मत्वात्। प्रदीपत्ववदिति। प्रदीपत्वं हि दुःखप्रागभावानधिकरणेषु प्रदीपावयवेषु वर्त्तते यो ध्वंसस्तत्प्रतियोगिनि प्रदीपे वर्त्तते। एवं सर्व्वमुक्तिसिद्धौ चैत्रादिदुःखत्वादिकं पक्षीकृत्य तत्तन्मुक्तिसाधनम्।

- - - - - - - - - - - -

आत्मेत्युपलक्षणम्। शरीरतदवयवादयोऽपि बोद्धव्याः। कालेत्युपलक्षणम्। तदुपाधि दिक् तदुपाधयो बोद्धव्याः। तेन दिगादिवृत्तितया ध्वंसस्य न पक्षविशेषणासिद्धिः। दुःखप्रागभावानधिकरणत्वञ्च दुःखप्रागभावाधिकरणभिन्नत्वम्। शुकाद्यात्मनश्चातथात्वात्प्रत्येकसुक्त्या नार्थान्तरम्। तथाच पक्षधर्म्मताबलात् दुःखप्रागभावाधिकरणभिन्नकालवृत्तिध्वंसप्रतियोगिदुःखमायातीति दुःखप्रागभावासमानकालीनदुःखध्वंसरूपा सर्व्वमुक्तिः सिद्ध्यति। न च कालस्यैकत्वे कथं तद्भिन्नत्वमिति वाच्यम्। तदुपाधेस्तथात्वात्। दुःखपदं व्याप्तिग्रहार्थम्। अन्यथा दृष्टान्तस्य साध्यवैकल्यापत्तिः। तादृशं कालमनादाय तादृशो दिशोऽप्यसिद्धेः न तयार्थान्तरम्। कार्य्येति। मात्रपदमनन्तत्वे व्यभिचारवारणाय। न चैवं ध्वंसत्वे व्यभिचारः। भाववृत्तित्वे सतीति हेतुविशेषणात्। न च कालादिनित्यवृत्तित्वात् कार्य्यमात्रवृत्तित्वमसिद्धम्। असाधारणवृत्ते र्विवक्षितत्वात्। अन्ये तु न तावद् यथाश्रुते साध्ये सिषाधयिषितमुक्तिसिद्धिः। समानाधिकरणदुःखप्रागभावासहवृत्तिदुःखध्वंसरूपायास्तस्या उक्तानुमानादसिद्धेः। न हि मुक्तिपदार्थरूपं विनान्यदिहानुमित्सितम्। तथाच समानाधिकरणदुःखप्रागभावासहवृत्तिध्वंसप्रतियोगिवृत्तित्वं साध्यम्। न च तावदपि साध्ये प्रत्येकमुक्त्यार्थान्तरापत्त्या सर्व्वमुक्त्यसिद्ध्यापत्तेः। किन्तु तादृशध्वंसप्रतियोगिमात्रवृत्तित्वम्। तथाच द्रव्यत्वमेयत्वादावनैकान्तवारणाय मात्रपदम्। एतन्मते च कार्य्यपदं ध्वंसावच्छिन्नसत्तायोगिपरम्। तेन ध्वंसत्वे न व्यभिचार इत्याहुः। तच्चिन्त्यम्। उक्तगत्या पक्षधर्म्मताबलेन यथाश्रुत एव सर्व्वमुक्तिसिद्धावपदार्थ-

यद्वा (४७) चैत्रकालान्यावृत्तिश्चैत्रदुःखध्वंसश्चैत्रदुःखप्रागभावानधिकरणाधिकरणः ध्वंसत्वात् घटध्वंसवदिति पक्षधर्म्मता बलाच्चैत्रदुःखप्रागभावानधिकरणकालसिद्धिः। न चानात्मवृत्तित्वमुपाधिः। आत्मान्तरदुःखध्वंसे साध्याव्यापकत्वात्। नापि चैत्रावृत्तित्वमुपाधिः। चैत्रवृत्तिसंयोगादिध्वंसे साध्याव्यापकत्वात्। नापि चैत्रमात्रवृत्त्यन्यत्वं पक्षेतरत्वात्। एवं सुखत्वादावपि साध्यम्। तेन सकलोच्छेदो मोक्षः। न चाप्रयोजकत्वम्। कार्य्योच्छेदे कारणोच्छेदस्य प्रयोजकत्वात्। प्रकृते च संसारकारणस्य मिथ्याज्ञानस्य श्रवणादिक्रमोत्पन्नतत्त्वज्ञानान्निवृत्तिः सम्भवात्। उक्तानुमानमनुद्भावयति। पार्थिवेति। उक्तरीत्या सर्व्वमुक्तौ न व्यभिचार इति समाधत्ते। सर्व्वात्मेति।

कल्पनानुपपत्तेः। उक्तगत्यैव मात्रपदसार्थकत्वाच्च। न च मुक्तिपदार्थस्वरूपं नातः सिद्ध्यतीति वाच्यम। दुःखप्रागभावासमानकालीनदुःखध्वंसस्य सर्व्वमुक्तित्वे बाधकाभावादिति। यत्तु ध्वंसप्रतियोगितावच्छेदकत्वं साध्यम्। तथाच द्रव्यत्वादावनैकान्तिकवारणाय हेतौ मात्रपदमिति। तन्न। ध्वंसस्य सामान्याभावत्वानङ्गीकारात्। तदङ्गीकारे तु तावतैव सर्व्वमुक्तिसिद्धिसम्भवे ध्वंसपूर्व्वविशेषणवैयर्थ्यापत्तेरिति।

(४९) चैत्रेति। चैत्रदुःखत्वं चैत्रदुःखप्रागभावानधिकरणाधिकरणध्वंसप्रतियोगिवृत्ति कार्य्यमात्रवृत्तिधर्म्मत्वादिति भावः। चैत्रकालान्येति पक्षविशेषणस्यार्थः प्रयोजनञ्च पूर्व्ववत्। ध्वंसत्वादिति। जन्याभावत्वादित्यर्थः। चैत्रवृत्ताविति। यद्यपि संयोगेऽपि साध्याव्याप्तिभयत्येव तथापि ध्वंसत्वरूपसाधनावच्छिन्नसाध्यव्यापकत्वाभिधाने तदुद्धारः स्यादित्याशङ्का ध्वंसपर्य्यन्तसङ्क्रम। न च दुःखध्वंसरूपपक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वाददोष इति वाच्यम। वक्ष्यमाणागमरूपविपक्षबाधकेन हेतौ. साध्यव्यापकतया तदव्यापकत्वेनोपाधेः साध्यव्याप

न हि सर्व्वमुक्तिपक्षे सर्व्वोत्पत्तिमन्निमित्तस्यादृष्टस्याभावात् तदुत्पत्तौ बीजमस्ति । न च सर्व्वभोक्तॄणामपवृक्तौ तदुत्पत्तेः प्रयोजनमस्ति । न हि बीजप्रयोजनाभ्यां विना कस्यचिदुत्पत्तिरस्ति । सर्व्वमुक्तिरित्येव नेष्यत इति चेत् तर्हि यएव नापवृज्यते तस्यैव दुःखसन्तानेऽनैकान्तिकमिदं किमुदाहरणान्तरगवेषणया । एवमस्तु न चोदाहरणमादरणीयमिति चेन्नासिद्धेः ।

तदेव स्फुटयति । न हीति । बीजं निमित्तं तच्चादृष्टम् । प्रयोजनं भोगः । यद्यपि भोगस्य (४८) प्रयोजनं विनाप्युत्पत्तिस्तथाप्यदृष्टं विना नोत्पद्यत इत्येवंपरमेतत् । मुक्तेश्चादृष्टजन्यत्वं वक्ष्यति । सर्व्वमुक्तिरेवेति । सर्व्वमुक्तिपक्षेऽनादौ संसारे सर्व्वेषां

कत्वादिति भावः । पक्षेतरत्वादिति । पक्षेतरतुल्यत्वादित्यर्थः । पक्षान्यज्ञानादेरपि व्यावर्त्तनात् । वस्तुतो वक्ष्यमाणविपक्षबाधकेन हेतोः साध्यव्याप्यत्वादनुपाधित्वमिति भावः । कालादिवृत्तितया साधनव्यापकत्वमपीत्याहुः ।

नन्वेवमप्यशेषगुणोच्छित्तिरूपा मुक्ति र्नायातीत्यत आह । एवमिति । तेनेति । चरमज्ञानभिन्नत्वेन सकलं विशेषणीयमित्याहुः ।

भोगस्येति (४८) । न च ध्वंस एव तत्प्रयोजनमिति वाच्यम् । तदुद्देशेन पुरुषः प्रवर्त्तते तत्प्रयोजनत्वात् ।

ननु केवलमप्यदृष्टजन्यत्वं मुक्तौ व्यभिचारीत्यत आह । मुक्तेश्चेति । यद्यपि मुक्तिरदृष्टजन्येति साक्षान्न वक्ष्यति तथापि प्रतियोगित्वेन तद्ध्वंसात्मकमुक्तौ जनकत्वमित्यर्थात् तदभिधानमिति भावः । क्वचिददृष्टाजन्यत्वं वक्ष्यतीति पाठः तत्र भोगतत्साधन एव भोजकादृष्टजन्यत्वनियम इति मुक्तेरदृष्टाजन्यत्वं भोजकादृष्टजन्यत्वं वक्ष्यतीत्यर्थः ।

सिद्धौ वा संसार्य्येकस्वभावा एव केचिदात्मान इति स्थिते अहमेव यदि तथा स्यां तदा मम विपरीत-प्रयोजनं पारिव्राजकमिति शङ्कया न कश्चित् तदर्थं ब्रह्मचर्य्यादिदुःख मनुभवेत्।

तथात्वमसम्भवे संसारोच्छेदापत्तिः। न ह्येतावन्तं कालं तत्त्वज्ञान-सामग्रीविघटनमेवेति भावः। असिद्धेरिति। प्रागुक्तमानेन सर्वात्मगतदुःखोच्छेदासिद्धेरित्यर्थः।

तत्र विपक्षे बाधकमाह सिद्धौ वेति। न च शमदम-भोगानभिष्वङ्गादिना मुमुक्षुचिह्नेन श्रुत्युदितेन शङ्कानिवृत्तिः स्यादिति वाच्यम्। संसारित्वेनैव मोक्षं प्रति स्वरूपयोग्यत्वात्। न तु तद्विशेषशमादिमत्त्वेन। सामान्यबाधके सत्येव योग्यताया विशेषनिष्ठत्वात्। शमादेरपि कार्य्यत्वात् तत्रापि संसारित्वेनैव स्वरूपयोग्यत्वाच्च। सामान्ये बाधकाभावात्। शमादेः श्रुतौ

सिद्धौ वेतीति। सर्व्वमुक्त्या एव सिद्धौ वेत्यर्थः। संसारित्वेनेति। स्वभादि-शरीरावच्छेददशायां स्वरूपयोग्यतासत्त्वेऽपि न मुक्तिः। श्रवणादिसहकार्य्या-भावादिति भावः। शमादिमत्त्वेन मुक्तिस्वरूपयोग्यतामभ्युपेत्याह। शमादे-रपीति।. दोषान्तरमाह। शमादेरिति। न च विषयगतोद्भूतरूपवदुभय-रूपत्वाविरोध इति वाच्यम्। तत्र प्रकारभेदेन तथात्वादत्र तु तदभावात्।

अन्येत्येतदस्वरसेनाह। आत्मावेति। वस्तुतस्तु प्रागभावस्य प्रतियोगि जनकत्वनियमेनानन्त्याभावात्, तत्तदात्मनिष्ठयावदुःखप्रागभावे प्रतियोगिजनने सर्व्वमुक्तेरावश्यकं प्रागभावाल्पत्वे शीघ्रमुक्तिः तद्बहुत्वे चिरेणेति विशेष इति भावः। कालात्ययमिति। कालोपाधित्वमित्यर्थः।

नत्वदृव्यातिरिक्तद्रव्यत्वं तथात्वे व्याप्यमित्यत्र दैशिकव्याप्तिविवक्षायां सिद्ध-

अथ यदि सर्व्वदुःखसन्ततिनिवृत्ति र्भविष्यति तर्हीयता कालेन किं नाम नाभूत्। एकैकस्मिन् कल्पे यद्येकोऽप्यपवृज्येत तदाप्युच्छेदः संसारस्य स्यात्। कल्पानामनन्तत्वात्। सत्यं। अनन्ता ह्यपवृक्ता न तु सर्व्वे संसारस्य प्रत्यक्षसिद्धत्वात्। नन्वेतदेव न स्यादित्युच्यते इति चेन्न। कालनियमे प्रमाणाभावात्।

---

सहकारित्वेन बोधनात् तस्य योग्यतानवच्छेदकत्वात्। आत्मा वारे द्रष्टव्य इति श्रुतेः सामान्यत एव मोक्षार्थिमात्रपरत्वे सङ्कोचानुपपत्तेश्च। तदर्थितायाश्च सर्व्वसाधारणत्वात्। शमादिसम्पत्तेरधिकारनिश्चय स्ततश्च तदर्थं प्रवृत्तौ शमादिसम्पत्तिरित्यन्योन्याश्रयाच्च। आक्षेपबीजमुद्घाटयति। अथेति। नन्विदमुत्पत्स्यमानघटेऽनैकान्तिकम्। न चाभूतजातीयं कार्य्यं नोत्पद्यते सर्व्वमुक्तेरभावरूपत्वात् तज्जातीयस्य च भूतपूर्व्वत्वात्। मैवम्।

---

साधनम्। कालिकव्याप्तिविवक्षायां धर्म्मत्वादित्यस्यैव सार्थकत्वेऽधिकव्यर्थतापत्तेरिति। केचित्तु कालत्वमित्यनेन कालमात्रवृत्तिधर्म्म उक्तः कालपदञ्च कालोपाधिसाधारणं बोध्यमेवञ्च दैशिकव्याप्तावपि न सिद्धसाधनमित्याहुः। कालत्वसमानाधिकरणेति। ननु कालेऽपि कालत्वात्यन्ताभावसत्त्वात्, साधनव्यापकत्वमिति चेत्। न। इदानीं कालत्वात्यन्ताभाव इति प्रतीतावपि काले कालत्वं नेति न प्रतीतिः तथाचावश्यं भेदवृत्तिभेद आवश्यकः। एवञ्च प्रतियोगिवृत्तिविशेषविरोधिवृत्त्या कालत्वाधिकरणे वर्त्तते योऽत्यन्ताभावस्तत्प्रतियोगित्वमुपाधिरित्यर्थादित्याहुः।

**न च सर्व्वोत्पत्तिमन्निमित्तादृष्टानुत्पत्तौ सर्व्वमुक्तेरनुत्पत्तिः। अपवर्गस्य भोगतत्साधनेतरत्वात्। न हि अदृष्टनिवृत्तिरदृष्टसाध्या एकस्याप्यनपवर्गप्रसङ्गात्।**

कालत्वमदृष्टवत्त्वव्याप्यं कालमात्रवृत्तिधर्म्मत्वात्। पूर्व्वकालत्ववदिति विवक्षितत्वात्। अत्र कालत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमुपाधिमभिप्रेत्याह। कालेति। मोक्षे यथा चैत्रादृष्टवत्त्वं कालधर्म्मो व्यभिचरति तद्वददृष्टवत्त्वमपि व्यभिचरेत्। विपक्षे बाधकाभावादिति भावः।

न चेति तन्निमित्तादृष्टसत्त्वे वा न सर्व्वमुक्तिरित्यर्थः। न च (४८) सुन्दोपसुन्दन्यायेनैकदैव तदुत्पादकादृष्टनाशसर्व्वमुक्त्योरुत्पत्तिः। तस्यापि सर्व्वमुक्त्यन्तर्भावात्। मानाभावाच्च। अपवर्गस्येति। न च श्रवणादिजन्यादृष्टसाध्यत्वान्मुक्तेः प्रतियोगितयावश्यं तदपेक्षणाच्च कथमेतदिति वाच्यम्। भोगजनकादृष्टजन्य मुत्पत्तिमदिति मतनिराकरणार्थत्वात्। अदृष्टसाध्येति। प्रतियोगीतरादृष्टसाध्येत्यर्थः। आदिमतीति। तथाच तद्व्यतिरेकमादाय

(४८) न चेति। चरमदुःखनाशं चरमदुःखादृष्टेन नाश्यत इत्यन्योन्यनाशकत्वाभिप्रायेण सुन्दोपसुन्दन्याय इत्यर्थः। तस्यापीति। अदृष्टनाशस्यापीत्यर्थः। ननु तस्य तदन्तर्भूतत्वेऽपि प्रतियोगितया तत्र तज्जन्यत्वमावश्यकमेवेत्यरुचेराह। मानेति। अदृष्टस्य फलनाश्यतयादृष्टनाशद्वयस्य न सर्व्वमुक्तिरूपफलेन यौगपद्यम्। न वा दुःखस्यादृष्टनाशकत्वम्। मानाभावादित्यर्थः। भोगेति। यद्यपि प्रतियोगितया भोगजनकादृष्टमेव जनकमित्यव्यभिचारतादवस्थ्यं तथापि तदन्येन रूपेणादृष्टजन्यमुत्पत्तिमत्त्वादिति मतनिराकरणं तात्पर्य्यम्। केवलेति।

स्यादेतदादिमती प्रदीपसन्तति र्निवर्त्तते दुःखसन्तति-
स्त्विय मनादि रनुवर्त्तिष्यत इति चेन्न मूलोच्छेदानु-

केवलव्यतिरेकिणा सत्प्रतिपक्षत्वमादिमत्त्वं चोपाधिरित्यर्थः।
अनादिरिति। अनादित्वं हि स्वाश्रयध्वंसव्याप्यप्रागभावप्रति-

ननु दुःखसन्ततिरत्यन्तानुच्छिन्नानादित्वादित्यत्राकाशदृष्टान्तेनान्वयव्यतिरेकित्व-
सम्भवे किं केवलव्यतिरेक्युपन्यासेनेति चेत्। अत्र वदन्ति। अत्यन्तानुच्छेदपदेन
समानजातीयप्रागभावासमानकालध्वंसप्रतियोगित्वं विवक्षितम्। तस्यैव सजा-
तीयप्रागभावासमानकालध्वंसप्रतियोगित्वरूपात्यन्तोच्छेदसाध्यविरोधित्वात्। तस्य
चाकाशादौ नित्येऽसम्भवेनान्यत्र साध्यस्यासंप्रतिपन्नत्वेनान्वयव्यतिरेकित्वाभाव
इति वक्ष्यमाणानादित्वेन सममन्वयाप्रहात् तथोक्तमित्यन्ये। आदिमत्त्वञ्चेति।
एतत्प्रदीपसन्तानेत्यतोनोच्छेद आदिमत्त्वञ्चेति साध्यव्यापकत्वमिति भाव.।

नन्वनादित्वप्रागभावाप्रतियोगित्वं पक्षेऽसिद्धमित्यत आह। अनादित्वं हीति।
येन रूपेणानादिता तत्त्वपदेन विवक्षितम्। तदाश्रयध्वंसव्याप्यो यः प्रागभाव·
तत्प्रतियोगिसमानवृत्तिजातिमत्त्वमित्यर्थः।

ननु व्याप्तिर्दैशिकी कालिकी वा। नाद्यः। यत्र घटः समवायिकारणनाशान्नष्टः
तत्र घटप्रागभावस्य घटध्वंसाव्याप्यतया घटसन्तानेऽव्याप्तेः। नान्यः। सात्वे-
त्यादिनिरर्थकत्वापत्तेः। अतएव कुसुमाञ्जलौ तथैवानादित्वमुक्तमिति चेत्। अत्र
वदन्ति।

यदा प्रागभाव स्तदा तज्जातीयध्वंस इत्येवंरूपा कालगर्भैव व्याप्तिरभिमता।
व्याप्यपदस्य समानकालीनत्वमात्रपरं न तु नियमपर्य्यन्तपरम्। तद्व्यावर्त्तनीय-
स्याभिमसमात्रपदादेव व्यावृत्तेः। न च तदेवाकिञ्चित्करमिति वाच्यम्। अत्यन्तानु-
च्छेदात्मकसाध्यस्य पूर्व्वविवर्ज्जितस्याकारोऽभावेन द्रव्यत्वमादायोक्तानादित्वस्य तत्र
सत्त्वाने कान्तिकतापत्तेः। ध्वंसप्रागभावयोः स्थाने संसर्गाभावमात्रकरणे तु

देवदत्तप्रभवत्वादिजातिमति तत्प्रागभावव्याप्यप्रागभावप्रतियोगिमात्रवृत्तिजाति-
मति शब्दादावतिव्याप्तिः। न चैवमपि जातिपदमनर्थकमिति वाच्यम्। सर्व्व-
मुक्तिमात्रे विवादेन प्रत्येकमुक्त्यभ्युपगमात्, शुकदुःखस्यापीदृशत्वेन समानजातीय-
प्रागभावसमानकालध्वंसप्रतियोगित्वरूपसाध्याभावेन व्यभिचारितया तद्वारक-
त्वात्। न हि तन्मात्रवृत्तिजातिरस्ति। निमित्तप्रयोज्याया दुःखत्वावान्तर
जातेरात्मविशेषानियतदुःखमात्रवृत्तित्वासम्भवात्, तुल्यवत्ति नानात्मनि तादृशदुःख-
सम्भवात्। न च शुकदुःखेऽपि साध्यमस्त्येवेति वाच्यम्। समानकालीनत्वनियत-
ध्वंसगर्भत्वात्तस्य। यत्तु तदगर्भत्वेऽपि चरमशुकदुःखे न व्यभिचार इति किं तद्-
गर्भतयेति। तन्न। तावन्मात्रे अनादित्वभावेन हेत्वभावात्। यावत्युक्तानादित्व-
विशिष्टसत्त्वादिति प्रकृतसाध्यमिति विवक्षितत्वात्। अन्यथा दुःखत्वमादाय शुकदुःखे
व्यभिचारात्। न ह्येवं कुसुमाञ्जलिप्रकाशेऽपि उक्तानुच्छेदस्यानादित्वनिर्वचन-
सन्दर्भं यथाश्रुत एव तत्राप्येतद्विशेषणप्रक्षेपः। किन्तु अनादित्वमात्रलक्षणमेव।
अतएव प्रमेयद्रव्यसामान्यस्यापि तत्र लक्ष्यत्वमेवेति। केचित्तु अदृष्टप्रयोज्य
जातिमादाय शुकदुःखे व्यभिचाराभावेऽपि शुकात्मरूपकारणप्रयोज्यजातिमादाय
शुकदुःखज्ञानादौ व्यभिचारस्तादवस्थ्यमेव। न च तज्जातौ मानाभावः। शुकात्म-
जन्ये तत्र जन्यतावच्छेदकधर्म्मे तस्य बाधकाभावेन लाघवेन च जातित्वात्।
अन्यथान्यत्रापि कारणप्रयोज्यजातिविलयापत्तेः। आवश्यकोपाधेरेव तदव-
च्छेदकत्वसम्भवात्। सामान्यसामग्र्यां तत्सत्त्वेऽपि विशेषस्य हेतुत्वात् यत्सामान्ये
यत्सामान्यमिति न्यायात्। तज्जातिसन्देहेऽपि सन्दिग्धानैकान्तिकस्य दुष्परिहर-
त्वात्। नचादृष्टप्रयोज्यजात्या सङ्करात् न तज्जातित्वमिति वाच्यम्। अदृष्ट-
प्रयोज्यजाते नानात्वेनाप्युपपत्तेः। अन्यथा गोत्वादिजातिविलयापत्तेः। यदि
चानुगतसत्यादिना गोत्वादिजातिसिद्धौ तारत्वादेरननुगतत्वा नानात्वं तदा जन्यता-
वच्छेदकतया तज्जातिसिद्धौ तन्नानात्वमिति तुल्यम्। तथाप्येवंरूपेणानादित्वं
सल्लाभाय धर्म्मिगर्भत्वमेवंचोक्ताकाराव्यभिचारवारणाय मात्रपदम्। जातिपदं
धर्म्ममात्रपरमेव। प्रत्येकमुक्तेरप्यनभ्युपगमदशायां विशेषादर्शनदशायां वा सत्प्रति-
पक्ष इति शुकदुःखादौ न व्यभिचारो दोषाय इत्याहुः।

## वृत्त्योः प्रयोजनकत्वात्। मूलोच्छेदाद्धि सन्ततेरुच्छेदः मूलानुवृत्तौ चानुवृत्तिः। अन्यथात्मादिमत्त्वाविशेषेऽपि

योगिमात्रवृत्तिजातिमत्त्वम्। तत्र सत्प्रतिपक्षे उपाधिमाह। (५०) मूलेति। न च मूलानुच्छेदोऽपि साध्यः। विपक्षे बाधकाभावात्। नाप्यादिमत्त्वमुपाधिः। तद्धि न कारणवत्त्वं प्रागभावप्रतियोगित्वं वा प्रागभावसाध्याव्यापकत्वात्। नापि स्वाश्रयध्वंसासमानकालीनप्रागभावप्रतियोगित्वम्। प्रागभावप्रतियोगित्वस्यैव प्रयोजकत्वे व्यर्थविशेषणत्वादित्यर्थः। उपाधेः साध्यव्यापकताग्राहकमाह। अन्यथेति। स्थापनायां विपक्षे बाधकमाह।

(५०) मूलेतीति। अनुच्छेद्यमूलत्वमुपाधिरित्यर्थः। नन्वाकाशादौ साध्याव्याप्तिसाधनताप्रसिद्धिरिति चेन्न। न। पूर्व्वविवक्षितसाध्यस्य तत्राभावादित्येके। उच्छेद्यमूलभिन्नत्वमुपाधिः। सचाकाशेऽस्त्येवेत्यन्ये। उपाधित्वपक्षं दूषयति। नापीति। प्रागभाव इति। एतद् यथाश्रुतसाध्ये बोध्यम्। विवक्षितसाध्यस्य तत्राभावात्। नापीति।

नन्वत्र यथाश्रुते प्रागभाव एव साध्याव्याप्तिस्तदवस्था। अथ विवक्षितसाध्याभिप्रायेणेदम। भावत्वपक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वाभिप्रायेण वा। तदा पूर्व्वक एवोपाधिरिति व्यर्थविशेषणत्वमित्याह। प्रागभावेति। सोऽपि नोपाधि। साधनव्यापकत्वादिति भावः। उपाधेरिति। यदि साध्यव्यापकत्वमिति पाठस्तदानुच्छेद्यमूलत्वोपाधेरित्यर्थो यदि साध्याव्यापकेति पाठस्तदा सादित्वोपाधेरित्यर्थः। तेनेति। ननु खण्डप्रलयकालमादायान्यथासिद्धिरिति चेत्। न। यदनुकात्यन्तार्थबोधनात् कतिपयकालावच्छेदेनात्यन्तार्थबोधनं सङ्कोचस्तथा वा सङ्कोच एवास्तु बाधकाभावादित्येके। मुक्तिप्रकरणाम्नायत्वेन श्रुतेस्तत्परत्वमित्यन्ये।

कालानियमो न स्यात्। क्वचित् प्रदीपसन्ततिः प्रहरमनुवर्त्तते क्वचिदहोरात्रमित्याद्यनियमो हि तैलादिमूलोच्छेदादिनियमप्रयुक्त इति। अशरीरं वावसन्तं प्रियाप्रिये न स्पृशतः इत्याद्यागमाच्चायमर्थोऽध्यवसेयः।

अशरीरमिति। वावसन्तमिति यङ्लुकि अत्यन्तमशरीरं वसन्तमित्यर्थः। तेन संसार्य्यवस्थायां क्षणमात्रमशरीरतया नान्यथासिद्धिः।

ननु द्वन्द्वान्मिलितसुखदुःखोभयनिषेधः प्रतीयते स च नित्यवत्प्राप्त एव। एकैकनिषेधे च वाक्यभेदः। अत्राह।

नन्वेवं मुक्तिमात्रमागतं न सर्व्वमुक्तिरिति चेत्। न। अस्याः श्रुतेः कतिपयात्मपरत्वे सङ्कोचो वाच्यः। तथा बाधकं विना न सङ्कोच इत्याशयात्। स चेति। एकत्वेऽपि मिलितनिषेधसम्भवात् न मुक्तौ प्रमाणत्वमिति भावः। समानेति। अत्र स्वाश्रयेति पूरणीयम्। स्वपदञ्च प्रकृतजातिपरम्। तेन जातिमता सामानाधिकरण्यं बोध्यम्। ईश्वरसाक्षात्कारविषयताव्याप्यजातिमत्त्वं घटादावपीत्यत उक्तं सामानाधिकरण्येति। घटसमानाधिकरणश्च न साक्षात्कार इति तद्व्युदासः। आत्मनिष्ठज्ञानादावपि नातिप्रसङ्गस्तस्य तादृशसाक्षात्कारविषयत्वनियमाभावात्। सुखदुःखयोस्तु भोजकादृष्टसाध्यत्वनियमेन भोगासम्भवे तदुत्पादासम्भव इति सर्व्वस्य योगजादितत्त्वज्ञानसम्भवादिच्छादीनां समानाधिकरणसाक्षात्कारविषयत्वनियमे इच्छात्वादिकमादायातिव्याप्तिरित्यत उक्तम्। समानकालीनेति। विनश्यदवस्थसुखेन समानकालविद्यमानत्वं तद्गोचरसाक्षात्कारस्येति नासम्भवः। नन्वेवमपीच्छासमानाधिकरणसमानकालीनेश्वरसाक्षात्कारविषयताव्याप्यमिच्छात्वं तद्विशिष्टेच्छायामतिव्याप्तिरिति चेत्। भवेदेवं यदि यत्किञ्चित्स्वाश्रयसमानाधिकरणत्वं विवक्षितं स्यात्। किन्तु यत्र यत्र सा जातिरस्ति तेन तेन समानाधिकरणः समानकालीनो यः साक्षात्कारस्तद्विषयताव्याप्यजातिमत्त्वं तात्पर्य्यम्।

स्यादेतत् तत्त्वज्ञानं हि विरोधितया समूलं मिथ्याज्ञानमुन्मूलयन्निःश्रेयसहेतुः । नचोपपत्त्या शब्देन वा जनित मिदं परोक्षमपरोक्षं मिथ्याज्ञानं निवर्त्तयितु मुत्सहते दिङ्मोहादौ तथानुपलब्धेः । ततोऽपरोक्षम-

समानकालीनसमानाधिकरणसाक्षात्कारविषयताव्याप्यजातिमत्त्वस्य सुखदुःखोभयसाधारणैकरूपसत्त्वान्न वाक्यभेदः । किञ्च मिलित-निषेधो नैकैकसत्त्वात् बोध्यः । अशरीरस्य सुखाद्युत्पत्तेरयोग्य-त्वान्नित्ये च सुखे मानाभावात् । अतः उभयासत्त्वप्रयुक्त एव न्याय्यः । यद्वा दुःखिनात्यन्तं विमुक्त श्चरतीति श्रुत्यन्तरसंवादा-दध्यवसायः ।

एवञ्च यद्यपि ज्ञानसामान्यगर्भत्वेऽपि न दोष स्तथापि साक्षात्कारत्वं जाति-रिति न व्यर्थविशेषणत्वम् । एतज्ज्ञानत्वादिधर्म्ममादायातिव्याप्तिरित्यत उक्तं जातीति ।

ननु प्रियाप्रियपदादुक्तसाधारणैकरूपेण उपस्थितौ लक्षणापत्तिः । नचैक-वाक्यतारक्षार्थं तत्स्वीकारः । द्वितयस्यैवानुगतस्यान्वयितावच्छेदकत्वेन वाक्य-भेदाभावात् । अन्यथा द्वन्द्वमात्रे लक्षणापत्तेः । तथाच जितं साहित्यवादिभि-रित्यरुचेराह । किं चेति । अशरीरस्येति । एतच्चोपलक्षण मेकसत्त्वे मिलित-निषेधानभ्युपगमस्येत्यपि बोध्यम ।

ननु वावेति सम्बोधने । तथाच वावसन्तमिति यङ्लुकीत्यसिद्धमेवं च क्षणमात्राशरीरतया खण्डप्रलयकालीनाशरीरतया वा ईश्वरप्रतिपादनपरतया वा अन्यथासिद्धिरेवेति सर्वसिद्धत्यानन्यथासिद्धश्रुत्यन्तरसंवादेनास्या मुक्तिनियाय-कत्वमित्याहुः । यद्वेति । अत्र मुक्तशब्दस्य ध्वंसवाचितया नेश्वरप्रतिपादक-तयान्यथासिद्धिरिति वदन्ति ।

व्युत्थायि बलवत्तरं तत्त्वज्ञानं तन्निवर्त्तनसमर्थम्। तच्च कुतो भवतीत्यत आह। तच्चेति। ईश्वरस्य चोदना उपदेशो वेद इति यावत्। तेनाभिव्यक्तात् प्रतिपादितात् धर्म्मादेवेत्यर्थः, अयमर्थः। शास्त्रेण पदार्थान् विविच्य श्रुतिस्मृतीतिहासपुराणोपदिष्टयोगविधिना दीर्घकालादरनैरन्तर्य्यैरासेविताान्निवृत्तिलक्षणात् धर्म्मादेव

अभिधेयप्रयोजनयोरुपदर्शितत्वादग्रिमग्रन्थोपयोगार्थमाह। तत्त्वज्ञानमिति। मूलं संस्कारः (५१)। दिङ्मोहेति। सूर्य्योदयेन प्राचीमनुमायापि मुह्यतीत्यर्थः। अव्युत्थायीति। व्युत्थातुं भ्रमितुं शीलमस्येति व्युत्पत्त्या व्युत्थायि भ्रान्तम्। न तथेत्यर्थः। बलवत्तरं बहुतरं संस्काराधायकं वा। शरीरादावात्मधीः प्रत्यक्षा न परोक्षेण शब्दानुमानजनितेन निवर्त्तयितुं शक्यमिति तन्निवर्त्तनक्षमा शरीरभिन्नात्मधीः प्रत्यक्षा स्यात्। सा च न शास्त्रादित्यर्थः। तत्त्वज्ञानमिति। शरीरादिभिन्नात्मभावनातः साक्षात्काररूपमित्यर्थः। तर्हि प्रथमत एव तथा ज्ञानमुत्पद्यतां किमनेनेत्यत आह। न हीति। शरीरादिभिन्नज्ञानाद्याश्रयात्मज्ञानेऽपि

(५१) मूलपदस्यात्मादिपरत्वभ्रमं निवारयति। संस्कार इति। मुह्यतीति। साक्षात्कारिभ्रमे साक्षात्कारिविपरीतदर्शनस्यैव विरोधित्वादितिभावः। न तथेति। यद्यपि भ्रमरूपविशेषदर्शनमपि ज्ञानविरोधि भवत्येवेत्यव्युत्थायीति व्यर्थं तथापि प्रकृते प्रमारूपमेव तदिति स्वरूपाख्यानपरमिति केचित। केचित्तु भ्रमोत्तरप्रमां प्रति तथैव हेतुतेति तथोक्तम्। विशेषणापि हेतुहेतुमद्भावा-

तत्त्वज्ञानमुत्पद्यते । यतोऽपवृज्यते न ह्युपपत्त्या विना विवेको न च विवेकादिना उपदेशमात्रेणाश्रद्धामलक्षालनं न हि तेन विना शङ्काशुकत्यागो न च तम-रेण निवर्त्तको धर्म्मो न च तेन विना दृढभूमिविभ्रमसमुन्मूलनसमर्थस्तत्त्वसाक्षात्कार इति ।

एतेन सत्त्वशुद्धिद्वारेणारादुपकारकं कर्म्म सन्निपत्योपकारकञ्च तत्त्वज्ञानमिति मन्तव्यम् । न तु

---

तद्विरुद्धनिरञ्जनात्मश्रुतिदर्शनात् । कुत्रार्थे श्रुतितात्पर्य्यमित्यनिश्चयात् क्षणिकत्वोपपादककुतर्काच्च मननेन च तात्पर्य्यं निश्चित्यानन्तरं महायाससाध्यनिदिध्यासनादौ प्रवृत्तिस्ततः तत्साक्षात्कार इत्यर्थः ।

ननु तत्त्वज्ञानवत् कर्म्मापि श्रुत्या कारणं बोधितमिति तत् कुतो नादिष्टमित्यत आह । एतेनेति । सत्त्वं आत्मा तस्य शुद्धिस्तत्त्वज्ञानोत्पत्तिप्रतिबन्धकदुरितनिवृत्तिः । तद्द्वारा परम्परया कर्म्म मोक्षे कारणं तत्त्वज्ञानन्तु सन्निपत्य (५२)

---

दित्याहुः । बहूनां यौगपद्याभावात् न निवर्त्तकमित्यन्यमर्थमाह । संस्कारेति । शब्देति । यद्यप्येतन्मते शाब्दं न ज्ञानं तथापि न्यायनयमभ्युपेत्येदमुक्तम् ।

(५२) ननु तत्त्वज्ञानमपि न सन्निपत्योपकारकं कायव्यूहादिना व्यवधानादित्यत आह । कर्म्मापेक्षयेति । तथाच तत्सहकारित्वकल्पने गौरवमिति भावः । नापीति । यद्यपि परम्परयाहेतुत्वेऽपि न क्षतिस्तुल्यकक्षतया समुच्चयस्यैव निषेध्यत्वात् । तथाप्ययमपि पक्षो न सम्भवतीदमुच्यत इत्याहुः । सन्निपत्योपकारकत्वं

तुल्यकक्षतया तत्समुच्चयः । नापि ज्ञानेन धर्म्मो जन्यते विहितत्वादिति धर्म्मस्यैव प्राधान्यम् । दृष्टद्वारेणैवो-

कर्म्मापेक्षया सन्निधार्य्योपकारकं कर्म्मानन्तरं तदुत्पत्तेरिति । नत्विति । तत्त्वज्ञानानुत्पादकतया साक्षादित्यर्थः । ज्ञानकर्म्मणो र्न समप्राधान्येन समुच्चयः । कर्म्मणां स्ववाक्यात् फलान्तरार्थत्वेन श्रुतत्वात्साक्षार्थत्वकल्पनाविरोधात् । तत्त्वज्ञानस्य नैरपेक्ष्येण मुक्ति साधनत्वप्रतीतेश्च । नाप्यङ्गाङ्गिभावः । स हि सन्निपत्योपकारकतया वा अवघातादिवत् आरादुपकारकतया वा प्रयाजादिवत् । नाद्यः । तत्त्वज्ञानशरीरानिर्वाहकत्वात् । नान्त्यः । कर्म्मणां स्ववाक्यत एव प्रयोजनलाभे फलवत्सन्निधावफलत्वाभावादिति भावः ।

ननु तत्त्वज्ञानं मोक्षसाधनत्वेन विधिना बोध्यते तच्चाशुविनाशि न कालान्तरीयमोक्षाय कल्पत इति स्वानन्तरोत्पत्तिकं धर्म्ममपेक्षत इति स एव सन्निपत्योपकारकः । स च मुक्त्यैव फलेन नाश्यत इत्यत आह । नापीति । दृष्टद्वारेति । मिथ्याज्ञाननिवृत्त्येत्यर्थः । अन्यथेति । तथाच विहितत्वं तत्र व्यभिचारीत्यर्थः । ननु मोक्ष

यदि तत्त्वज्ञानसहकारितया साक्षान्मुक्तिजनकत्वं तदा नाङ्गाङ्गिभावः । किन्तु समप्राधान्यमेव । तच्च पूर्वं दूषितमेवेति प्रधानीभूततत्त्वज्ञानेन शरीरनिष्पादकत्वमेव तद्वाच्यम् । एवं मत्वाह । तत्त्वज्ञानेति । कर्म्मणामिति ।

ननु प्रधानफलातिरिक्तमुख्योद्देश्यफलाभाववत्त्वमङ्गत्वं तच्चाप्यक्षतमेव । यद्य- तिरिक्तफलश्रुत्यैवाङ्गत्वक्षतिः, तदा सङ्गतस्य ग्रन्थकृता न स्यात् विभिन्नसफल कत्वात् । नहि प्रधानप्रत्यक्षस्य विभिन्नसफलमिति चेत् । न । तत्त्वज्ञानेनोपपत्तौ

पपत्तावदृष्टकल्पनानवकाशात् । अन्यथा भेषजादिविधिष्वपि तथा कल्पेत । उपपत्तिविरुद्धश्च ज्ञानकर्मसमुच्चयः । काम्यनिषिद्धयोस्त्यागादेव समुच्चयानुपपत्तेः । नापि असङ्कल्पितफलकाम्यकर्मसमुच्चयः । चतुर्थाश्रमविधिविरोधात् । यावन्नित्यनैमित्तिकसमुच्चयस्यापि तत एवानुपपत्तेः । यत्याश्रमविहितकर्म्मणा ज्ञानस्य

---

हेतुश्रवणेन नियमादृष्टं जन्यत एव अन्यथात्मनः पक्षस्योपनायकतामात्रेण तदुपयोगे तद्भिन्नोपायान्तरेण पक्षोपस्थितिः मननोपयोगिनो स्यात् । मैवम् । (५२) मननव्यापारकश्रवणस्य मोक्षहेतुत्वेन श्रवणादुपायान्तराधीनतदुपस्थिते मोक्षाहेतुतया नियमादृष्टस्याकल्पनात् । तथात्वेऽप्यात्मसाक्षात्कारेण तदजननात् तस्यैव सन्निपत्योपकारकत्वात् मननस्यापि निदिध्यासनमेव दृष्टं व्यापारः । काम्येति । काम्यत्यागस्यैव संन्यासत्वादिति भावः ।

ननु फलकामनां विना यत्काम्यं कर्म्म तेन समुच्चयः स्यादित्यत आह । नापीति । तादृशकाम्यकर्म्मणोऽपि मोक्षे त्याग

---

तदङ्गत्वकल्पने प्रमाणाभावादित्याशयात् । स एवेति । यद्यप्येवमपि तुल्यफलतया समुच्चयो न सिद्धः तथापि तत्त्वज्ञानमात्राद्धेतुत्वनिराकरणे तात्पर्य्यम । मिथ्याज्ञानेति । वासनानिवृत्त्येत्यर्थः । तदप्युपलक्षणम् । युगपद्भोगजनककायव्यौगपद्यद्वारेत्यपि द्रष्टव्यम् ।

(५२) मननव्यापारकेति । श्रोतव्यः श्रुतिवाक्येभ्य इति श्रवणान्मननव्यापारकश्रुतिजन्यात्मश्रवणत्वेन हेतुत्वलाभात् नादृष्टकल्पनमित्यर्थः । केचित्तु

समुच्चय इत्यपि नास्ति तदभावेऽपि गृहस्थस्य ज्ञाने सति मुक्तेः। यतः स्मरन्ति हि। कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः। इति। न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते।

न च साध्यस्यावैचित्र्ये साधनवैचित्र्यमुपपद्यते।

श्रवणादित्यर्थः। यावदिति। गृहस्थादिसाधारणस्य तस्यापि संन्यासिनां त्यागश्रवणादित्यर्थः। गृहस्थस्यापीति। न च मोक्षार्थिकर्त्तव्यत्वेन कर्म्माणि विहितानि येन तत्समुच्चयः स्यादिति भावः।

ननु कार्य्यसामान्यव्यभिचारेऽप्यवान्तरजातीयकार्य्यं प्रत्यव्यभिचारस्तत्कर्म्मणः स्यादित्यत आह, न चेति। (५४) ज्ञानत्ववान्तरजातीय एव कर्म्मणां हेतुत्वमिति भावः।

श्रुतिवाक्यस्य इत्यत्र श्रुतिशब्दस्याप्रामाण्यशङ्कास्मृत्यन्यशब्दपरत्वमतः तादृशस्मृतिपुराणादिजन्यश्रवणस्यापि हेतुत्वमत एव शूद्रस्याप्यपवर्गभागित्वसम्भवात् जगद्द्दृश्यता शास्त्रगोतु सङ्गच्छते इत्याहुः।

ननु श्रवणानन्तरं किञ्चिद्द्वारव्यवधानाद् यत्र मननं तत्रादृष्टं विना कथं तस्य तद्धेतुत्वमिति चेन्न। न। तत्रापि संस्कारद्वारा तथात्वसम्भवात्। कश्चित्तु एतदस्वरसेनाह। तथात्वेऽपीति। मननस्यापीति। अदृष्टं विना जनकत्वपक्ष इदम। ननु फलेति। फलकामनामभिलाषं विना यत्काम्यं कर्म्म श्राद्धादिकमित्यर्थः।

(५४) न चेताति। यद्यपि तत्तद्द्वारकाविय जनकत्वमस्तु कार्य्यतावच्छेदकाननुगमस्यादोषत्वात्। तदर्थिप्रवृत्तस्तु मुक्तिसाधनताज्ञानात् न तु तत्तावच्छेदेन

**न च स्वर्गवदपवर्गेऽपि प्रकारभेदः सम्भवति। तस्मात् *तत्त्वज्ञानमेव निःश्रेयसहेतुः।* कर्म्माणि त्वनुत्पन्नज्ञानस्य ज्ञानार्थिन स्तत्प्रतिबन्धकाधर्म्मनिवारणद्वारेण**

---

ननु समवाय्यसमवायिनाशयोर्द्रव्यनाशकारणतावदभावरूपमोक्षेऽपि कर्म्मणां कारणता स्यात्। नैवम्। निमित्तकारणतरकारणनाश्यत्वेन तत्र हेतुत्वात्। न चात्र मुमुक्षुकर्त्तव्यत्वेन कर्म्माणि विहितानीत्युक्तम्। तस्मादिति।

ननु स्वाश्रमविहितेन कर्म्मणा ज्ञानस्य समप्राधान्येन समुच्चयः स्यात्। ज्ञानकर्म्मणोस्तुल्यत्वेन मुक्त्यर्थत्वावधारणात्। "स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः" इति स्मृतेः। अत आह। तत्त्वज्ञानस्य मिथ्याज्ञानध्वंसो व्यापारो दृष्टत्वात्। तत्र न तस्य कर्म्मसहकारित्वम्। विनापि कर्म्म तेन मिथ्याज्ञानविनाशात्। कर्म्मान्तराणां यमनियमादीनां तत्त्वज्ञानद्वारेण मोक्षहेतुत्वं सम्भवति। साक्षात्त्वस्याश्रुतेः।

ननु तत्तत्तीर्थस्नानमहादानकाशीमरणादिकर्म्मणां तत्त्वज्ञाननैरपेक्ष्येण मोक्षहेतुत्वं श्रूयते तत्कथं तत्त्वज्ञानमेव तद्धेतुः। न च तत्त्वज्ञानमेव व्यापारः। अनुपदमेव तत्त्वज्ञानानुत्पादेनादृष्टद्वारा

तत्साधनत्वे ज्ञानात्। तादृशज्ञानस्य मुक्तिनिष्ठकार्य्यताप्रतियोगिककारणताश्रयत्वप्रकारकं शब्दादितएव सुलभम्। तथापि मिथ्याज्ञानोच्छेदकाय यौगपद्ययोक्तस्वस्थानेकमाध्यत्वेन तदावश्यकतायां तत्र च जातिभेदस्वीकारनियमे ततएव सामान्यसामग्रीतः कार्य्यसम्भवे किं विशेषसामग्र्यन्तरकल्पनेन इत्यत्र तात्पर्य्यमिति

प्रायश्चित्तवदुपयुञ्जन्ते । उत्पन्नज्ञानस्य त्वन्तरालब्धवृत्तेः कारीरीपरिसमाप्तिवत् प्रारब्धाश्रमधर्म्मसमापनं लोकसंग्रहार्थमिति युक्तमुत्पश्यामः ।

हि तद्धेतुत्वं वाच्यम् । तथा चापवर्गहेतुरेवादृष्टं कल्प्यताम् । मैवं । दृढभूमिसवासनमिथ्याज्ञानध्वंसं विना न मोक्ष इति मिथ्याज्ञानप्रागभावासहवृत्ति तद्ध्वंसे तत्त्वज्ञानं हेतुरिति तत्रापि तत्त्वज्ञानस्यावश्यकत्वात् । (५५) तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय इति श्रुतेः । कर्म्मणाञ्च तत्त्वज्ञानद्वारापि मोक्षहेतुत्वमसम्भवात् । सम्प्रदायविदस्तु ज्ञानकर्म्मणोर्निरपेक्षसाधनत्वश्रुतेर्व्रीहियववद्विकल्प एव । निरपेक्षसाधनावरुद्धेऽन्यसाधनान्वयो न विकल्पं विना । आकाङ्क्षाविरहात् । साहित्यबोधनं विना यत्रैकं प्रत्येकस्य हेतुना शब्देन बोध्यते तत्र विकल्पे नान्वयो यथा व्रीहियवयोरिति व्युत्पत्तेरित्याहुः ।

वर्द्धन्ते । अभावरूपेति । तथा च भावरूपकार्य्यस्य व्यभिचारिणो न जनकत्वं न त्वभावरूपेऽपीति भावः । नियमघटितं जनकत्वमभावरूपकार्य्येऽपि व्यभिचारिणोऽसम्भवीत्याशयेनाह । ननु तत्त्वादिति । एतन्मते मोक्षे वक्ष्यमाणं बोध्यम् । मिथ्याज्ञानेति । समानाधिकरणमिथ्याज्ञानप्रागभावेत्यर्थः ।

(५) ननु मिथ्याज्ञानं विरोधिगुणान्तरमात्रनिवर्त्तनीयमिति किं तत्त्वज्ञानेन । न च वासना तन्नाश्या । कालादिनापि तन्नाशसम्भवात् । न च काययौगपद्यार्थं तदिति वाच्यम् । तद्धेतोरेवेति न्यायेन तदुत्पादकादृष्टादेव तत्सम्भवादिति वेदसपोहनकेनाह । तमेवेति । तथा च तत्त्वज्ञानस्य प्रामाणिकत्वे तस्यैव वासनानाशकत्वं काययौगपद्यादिहेतुत्वञ्च । प्रामाणिकं गौरवं न दोष इति भावः । तत्त्वज्ञानद्वारापीति । ननु तत्त्वज्ञानस्य द्वारत्वे मुक्तिहेतुत्वं कर्म्मणामावश्यकम् ।

एतेनाथातो धर्म्मं व्याख्यास्यामः। यतोऽभ्युदय-

नन्वेवमुत्पन्नतत्त्वज्ञानस्य कर्म्मणामनाचरणप्रसङ्ग इत्यत आह, उत्पन्नेति। ननु लोकसंग्रहो न सुखदुःखाभावरूपः न वा तत्साधनम्। न च सङ्कल्पितकर्म्मत्यागेन लोकानां निन्द्यत्वेन ज्ञानाभावार्थं प्रवृत्तिः। जनेनावमतो योगी योगसिद्धिञ्च विन्दतीति पुराणात् जनावमाननाया योगिनः श्लाघ्यत्वात्। अत्राहुः। तत्तत्कर्म्मसाध्यभोजकादृष्टक्षयार्थं योगिनां तत्र प्रवृत्तिः। यद्वास्मत्कर्म्म दृष्ट्वा लोकः कर्म्म संग्रह्लात्विति करुणया तत्र प्रवर्त्तते।

यत्त्वधिकारे सति नित्यस्यावश्यकी कर्त्तव्यता अन्यथा प्रत्यवायाधिक्येनानपवर्गापत्तिरिति मतम्। तन्न। दोषाभावेन नित्याकरणेऽपि प्रत्यवायानुत्पादात्। अतएव भोगार्थं प्रवृत्तावपि तस्य न धर्म्माधर्म्मोत्पत्तिः।

ननु यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्म इति सूत्रस्य धर्म्म-

---

उक्तगत्या चादृष्टद्वारैव हेतुत्वं वाच्यम्। एवञ्च तददृष्टस्य तत्त्वज्ञानसुतरुभयजनकत्वकल्पने गौरवम्। तत्त्वज्ञान मद्वारीकृत्यैव मुक्तिमात्रजनकत्वे लाघवमिति ज्ञानकर्म्मणोः समप्राधान्यमेवेति चेत्। न। उक्तयुक्त्या तत्त्वज्ञानस्यावश्यकत्वे तद्धेतुजिज्ञासायामुपस्थितत्वादन्वयव्यतिरेकानुविधायित्वाच्च श्रुतश्रवणादितद्धेत्वभावे कर्म्मणामेव तद्धेतुत्वकल्पनात्। काशीमरणस्य तत्त्वज्ञानहेतुत्वमागमादेव लभ्यत एव। तथा च प्रामाणिकं गौरवमिति भावः।

तमेवेत्यादि श्रुतिविरोधादस्वरसमुद्भावयन्नाह। सम्प्रदायेति। सर्व्वत्रैवं भावे मानाभावादित्यत आह। यद्वेति। करुणयेति। कारुणिकानां परदुःखज्ञानात् दुःखमुत्पद्यत इति दुःखाभावमुद्दिश्य प्रवृत्तिरितिभावः। दोषाभावेनेत्युपलक्षणम्। प्रागभावाभावेनेत्यपि द्रष्टव्यम्। अन्यथा प्रतियोग्युत्पत्तेरावश्यकत्वात्।

निःश्रेयससिद्धिः स धर्म्मः । तद्वचनादाम्नायसिद्धेः प्रामाण्यमिति त्रिसूत्री व्याख्याता । अन्यथाव्याख्याने हि यतोऽभ्युदयेति प्रत्येकसमुदायाभ्याम् उभयत्राप्यव्यापकं स्यात् । यतोऽभ्युदयसिद्धिः स धर्म्म इत्येतावतैव लक्षणसिद्धेः । पारम्पर्य्येण निःश्रेयसेऽप्यस्य हेतुत्वं प्रतिपादयितुं निःश्रेयसग्रहणमिति । एवं प्रतिपन्न-

मोक्षहेतुताबोधकत्वविरोध इत्यत आह, (५६) एतेनेति । सूत्रमप्यभ्युदयमात्रसाधकधर्म्मपरतयैव व्याख्येयमित्यर्थः । अभ्युदयोऽत्र तत्त्वज्ञानम् । तद्वचनादिति । तेनेश्वरेण वचनात् प्रणयनादाम्नायस्य प्रामाण्यमित्यर्थः । अन्यथेति । यद्येको धर्म्मोऽभ्युदयसाधकोऽन्यश्च निःश्रेयससाधक इत्यर्थः । न चैकस्यैव धर्म्मस्योभयसाधकतया नोक्तदोषः । उक्तयुक्तेः । तत्त्वज्ञानोत्पादनेनैवान्यथोपपत्तौ धर्म्मस्य निःश्रेयसहेतुत्वे मानाभावादिति भावः । एवं सति निःश्रेयसपदोपयोगमाह । यत इति । एवमिति । अभिधेयं द्रव्यादि । प्रयोजनं निःश्रेयसम् । सम्बन्धः तत्त्वज्ञाननिःश्रेयसयो र्हेतुहेतुमद्भावः ।

(५६) एतेनेति । ननु यतोऽभ्युदयेति सूत्रमेव प्रकृत मपरं सूत्रद्वयं प्रकृतासङ्गतमिति चेत् । अत्र यतोऽभ्युदयेति सूत्रमन्याभिप्रायकमेवेति क तद्विरोध इति यद्व्याख्यामाद्यं सूत्रम । तथा चाथातो धर्म्मं व्याख्यास्याम इति प्रतिज्ञामात्राम्यपरत्वमिति द्वितीयसूत्रोपष्टम्भकतयैव तत्सूत्रतम् । धर्म्मस्य चाभ्युदयसाधकत्वे किं मानमित्याशङ्कायामाम्नाय इत्येवोत्तरं वाच्यम् । तस्य च कृतः

प्रयोजनाभिधेयसम्बन्धो जिज्ञासुः पृच्छति । अथेति । अथ कानि द्रव्याणि कियन्ति च । के गुणाः कियन्तश्च । कानि कर्म्माणि कियन्ति च । किं सामान्यं कतिविधञ्च । के विशेषाः । कः समवाय इत्यर्थः । किञ्च तेषामिति सामान्यतो विशेषतश्च पदार्थानां द्रव्याणां गुणानाञ्च कर्म्मणामित्यादि नेयम् । चकारौ मिथः समुच्चये । साधर्म्यवैधर्म्ययोरप्येवान्तर्भूतत्वात् । पृथक् लक्षणार्थमपि न प्रश्नः ।

तत्रेति । तत्र तेषु द्रव्यादिषु वक्तव्येषु । द्रव्याणि

अग्रे विभागस्यापि वचनात् । तद्विषयां जिज्ञासामाह, कियन्तीति । विशेषाणामानन्त्यात् । समवायस्यैकत्वात् तत्र न विभागजिज्ञासा । चकाराविति । किञ्चेति चकारः प्रश्नसमुच्चये । वैधर्म्याच्चेति चकारः साधर्म्यसमुच्चय इत्यर्थः ।

ननु द्रव्यादिलक्षणात्मन्ययोगव्यवच्छेदार्थं इति साधर्म्यादेर्लक्षणं किं न पृष्टमिष्टमित्यत आह, साधर्म्येति । एवञ्च द्रव्यादि

प्रामाण्यं येन तथा स्यादित्यपेक्षायामुक्तम् । तद्वचनादिति । तथा चाप्तोक्तत्वेन तत्प्रामाण्यमित्यभिसन्धियोक्तम् । विस्तृतोऽन्यत्रास्तु । तत्त्वज्ञानाच्च कायव्यूहादिना भोगद्वारा कर्म्मक्षये सति मोक्षः । नाभुक्तं क्षीयते इत्यादेः । न च ज्ञानाग्निरित्यादिना विरोधः । भोगद्वारापि तत्प्रामाण्योपपत्तेरिति साम्प्रदायिकाः । वस्तुतो नियमः यत्कर्म्मजदुःखप्रागभावोऽस्ति तस्य भोगेनैव नाशः तत्प्रागभावस्य प्रतियोगिजन-

पृथिव्यादीनि। यद्यपि विभागस्य न्यूनाधिकसंख्याव्यवच्छेदपरत्वादेव नवत्वं लब्धं तथापि स्पष्टार्थं नवग्रहणम्।

एवकारश्च विप्रतिपत्तिनिराकरणार्थः। सामान्यसंज्ञा द्रव्यमिति। विशेषसंज्ञा पृथिवीत्यादिका। तयोक्तानि सूत्रकृतेति शेषः। अवगतप्रभावस्य तस्योक्तेरागमत्वात्। अनवगतप्रभावस्यापि लोकप्रसिद्धार्थानुवादकत्वात्। लोके च तावतामेव सामान्यतो विशेषतश्च व्यवहारात्। किं पुनरत्र प्रतिषिध्यते नवैवेति। न ह्यनवगतस्य प्रतिषेधः सम्भवति। उच्यते। द्रव्यस्य

ष्वेवेत्यर्थः। तथा च द्रव्यादेः साधर्म्यादेश्च मिथो विशेषणविशेष्यभावात् लक्ष्यलक्षणभाव इत्यर्थः।

ननु द्रव्यादीनां लक्षणप्रश्नः कुतो नेत्यत आह, साधर्म्येति। एष्वेव लक्षणेष्वेव। तथा च साधर्म्यादि प्रश्न एव लक्षणप्रश्न इत्यर्थः।

किं पुनरिति। नवाधिकद्रव्यस्य सिद्धासिद्धिभ्यां विरोधादित्यर्थः। अत्र द्रव्यस्य नवत्वं विशेषणं नवानां द्रव्यत्वं वा। आद्ये

कत्वनियमात्। अन्यथा तस्यानन्यगत्या अदृष्टफलस्यैव तत्त्वज्ञानाद्याग इति युक्तमुत्तरयाम। तत्त्वज्ञाननिःश्रेयसयोरिति। यद्यप्यभिधेयद्रव्यादिना प्रयोजनस्य सम्बन्धः कथयितुमुचितस्तथापि तद्विषयकतत्त्वज्ञानस्य हेतुत्वबोधने परम्परया द्रव्यादेरपि प्रयोजकत्वलाभ इति भावः।

सतो नववाह्यत्वं नववाह्यस्य सतो द्रव्यत्वं वा । तथाच प्रतिपन्नस्यैव प्रतिपन्ने प्रतिषेध इति न किञ्चिद्दुष्यति । अतः परं न शङ्का न चोत्तरम् । तथाहि इदं द्रव्यं एभ्योऽधिकं स्यादिति वा इदमेभ्योऽधिकं द्रव्यं स्यादिति वा आशङ्क्येत । प्रथमे आधिक्यं निराकरिष्यामो यथा सुवर्णस्य । द्वितीये द्रव्यत्वं निराकरिष्यामो यथा तमसः । अतःपरं न शङ्का न चोत्तरम् । धर्म्मिण एव बुद्ध्यनारोहात् । यदि कथञ्चिद्बुद्धिमारोक्ष्यते तदास्माभिरप्युक्तेष्वेवान्तर्भावयिष्यते । अनन्तर्भावे वा

विशेषणसङ्गत एवकारोऽयोगव्यवच्छेदार्थ इति नवद्रव्ये नववाह्यत्वं निषिध्यत इत्याह । द्रव्यस्येति । अन्ये विशेष्यसङ्गत एवकारोऽन्ययोगव्यवच्छेदार्थ इति नववाह्ये नववाह्यत्वं निषिध्यत इत्याह । नवेति । (५७) तथाहीदं द्रव्यमिति पाठे एभ्यो नवभ्योऽधिकमिदं तमो द्रव्यमिति योजना । इदमेभ्य इति । इदं सुवर्णमेभ्यः पृथिव्यादिभ्यः अधिकं स्यादित्यर्थः । अतःपरमिति । दशमं द्रव्यं न निषिध्यते । प्रतियोग्यप्रतीतेरित्यर्थः ।

नन्वेतावता नव द्रव्याणि न न्यूनाधिकानीत्युक्तम् । तत्र नवेति नवसंख्यायोगितायामुक्तायां न न्यूनानीति व्याहतम् । न्यूनता हि नवावान्तरसंख्यायोगिता । न च तदसम्भवे नवत्वं नाप्यधि-

(५७) अपिसमयस्यानुरोधादाह । तथाहीदमिति । न निषिध्यत इत्युप

द्रव्यत्वं तस्य निराकरिष्यत इत्यभिप्रायवानाह । तद्व्यतिरेकेण संज्ञान्तरानभिधानादिति । सूत्रकृतेति शेषः । लोकेनेति वा ।

स्यादेतदन्धकारस्तावदनुभवसिद्धतया दुरपह्नवः । न च सामान्यविशेषसमवायेष्वन्यतमं तमः । तेषां व्यञ्जकवैचित्र्येऽपि व्यक्त्याश्रयसम्बन्धिनामुपलम्भमन्तरेणानुपलम्भनियमात् । उपलम्भे वा तत्त्वव्याघातात् ।

कव्यवच्छेदः । दशमादिद्रव्याणां दुरपह्नवात् । अत आह । गुणे चतुर्विंशतित्ववदत्र नवत्वं भाक्तम् । तथा च पृथिवीत्वादिनवोपाध्यनाक्रान्तेषु द्रव्यत्वं नास्ति द्रव्येषु वा अन्याष्टकानाक्रान्तेषु पृथिवीत्वव्यवच्छेदो नास्तीति व्यवच्छेदार्थः ।

तमसो दशमद्रव्यत्वमाशङ्क्य परिशेषमाह । न चेति । ननु (५८) यदि तमः सामान्यं तदा दिवाप्युपलभ्येत । एवं सति गोत्व

लक्षणम् । न शक्यतेऽपि । कस्यापि भेदेऽपीत्यपि द्रष्टव्यम् । दशमादीनि । व्यक्तिभेदमादायेति शेषः । दशमेति । द्रव्यत्वं प्रसाध्य दशमत्वमाशङ्कमित्यर्थः ।

(५८) यदि तम इति । न चोभयसिद्धतमःशब्दार्थानामेव पक्षत्वात् इति वाच्यम् । आलोकजन्यज्ञानविशिष्टज्ञानुपमानात्कारणविषयत्वस्यैव पक्षतावच्छेदकत्वात् । यदि च तन्मते तमसः तामसेन्द्रियग्राह्यत्वं तथा च न पक्षे रूपप्रतीत्यसाधारणकारणेन्द्रियपरम् । तद्विषयस्यास्मन्मते आलोकाभावः । तन्मते द्रव्यान्तरमित्यादि । तदेतत् पक्षतावच्छेदकोभयसंप्रतिपत्त्यैव विवादप्रवृत्तेः । अन्यथा साध्यतद्व्याप्तिकल्पनानुमानोच्छेदप्रसङ्गादिति वदन्ति ।

**न कर्म संयोगविभागयोरकारणत्वात् । न ह्यन्धकारेण किञ्चित् कुतश्चित् विभज्य केनचित् संयोज्यते । अतथाभूतस्य च तल्लक्षणानुपपत्तेरतत्त्वात् । न गुणः । द्रव्यासमवायात् । द्रव्यासमवेतं ह्यसमवेत-**

मपि तद्विरहिणि देशे कुतो नोपलभ्यते । व्यञ्जकमास्त्राद्यभावादिति चेत् । तुल्यम् । तस्यालोकाभावव्यङ्ग्यत्वादित्यत आह । व्यञ्जकेति । तेषां सामान्यादीनामनुपलम्भादिति योजना । सामान्यादौ व्यक्त्यादेर्यथासंख्यमन्वयः ।

नन्वेतद् यथाश्रुतं व्यधिकरणम् । अथ तमसः सामान्यादिभिन्नत्वे साध्ये क्रमेण व्यक्त्याद्यविषयकसाक्षात्कारविषयकत्वादिति हेतुः । तथापि व्यक्तिः किमाश्रयमात्रं वा समवायिदेशो वा । आद्ये समस्ततदविषयकसाक्षात्कारविषयकत्वमसिद्धम् । कालादीनां भावात् । अन्त्ये यत्किञ्चित्समवायिदेशः तमसो वा । प्रथमे पुनरसिद्धिः । विशेषसमवायभेदसाधने च साक्षात्कारा-

ननु तेषां व्यञ्जकैरचित्वेऽपीत्ययुक्तं विशेषसमवाययोरतीन्द्रिययोर्व्यञ्जकस्यैवाभावादित्यन्यथा योजयन्ति । तेषामिति । तथा च व्यञ्जकेति सामान्यमात्रान्वितमिति नोक्तदोष इति भावः । कालादीनामिति । यद्यपि कालो न प्रत्यक्ष स्तथाप्युपनीतस्य तद्विषयत्वं बोध्यम् । तन्मते तस्य षड़िन्द्रियवेद्यत्वाभ्युपगमादित्यके । अतद्गुणसंविज्ञानाद् घटकादौत्युक्तमित्यन्ये ।

नन्वेवमालोकविषयकसाक्षात्कारविषयत्वात् न सामान्यमित्यायातं तच्चायुक्तम् आत्मत्वादौ व्यभिचारादित्यत आह । तदयमर्थ इति । तमो नेति । चाक्षुषत्वं चक्षुर्मात्रेतरेन्द्रियाग्राह्यत्वम् । अतो न द्रव्यत्वगुणत्वादिना व्यभिचारः । न च

मेव स्यात् अद्रव्यसमवेतं वा। उभयथापि गुणत्वव्याघातः। सामान्यवतः स्वतन्त्रस्य द्रव्यत्वापत्तेः। निःसामान्यस्य गुणत्वलक्षणव्याघातात्। गुणकर्म्मणोर्निर्गुणतया गुणस्य तत्र समवायविरोधात्। द्रव्यासमवाय एवास्य कथमिति चेत्। इत्थं न दिक्कालमनसा-

विषयत्वमेव समर्थमिति व्यर्थमधिकम्। अत्राहुः। व्यज्यतेऽनयेति व्यक्तिरालोकः। तदयमर्थः। तमः सामान्यं चाक्षुषमेव वाच्यम्। अन्येनेन्द्रियेणाग्रहात्। तस्य चालोकोऽयं व्यञ्जकः। तथा च न तमश्चाक्षुषसामान्यम् आलोकाविषयकसाक्षात्कारविषयत्वादित्यन्वयव्यतिरेकौ। विशेषसमवाययोश्चानुपलम्भनियमः

हेतोरेव तज्जव्यत्यासेनालोकाविषयकसाक्षात्काराविषयत्वमर्थः क्षणसत्त्वालोकाभावादि दृष्टान्तसौलभ्येनान्वयित्वसम्भवे व्यतिरेकीति ग्रन्थविरोधात्। यथाश्रुतेऽपि तस्य दृष्टान्तत्वसम्भवात् दोषतादवस्थ्यम्। तन्मते तस्यानुपलब्धिगम्यतया हेत्वसत्त्वात्। न चैवमप्यन्धकारप्रत्ययविषयनीलरूपस्य दृष्टान्तत्वमस्त्विति वाच्यम्। तादृगलौकिकसाक्षात्कारविशेष्यत्वादित्यर्थात्। न च तद्विशेष्यत्वं तस्योभयसिद्धम्। तत्र नीलारोपपक्षे तस्य विशेषणत्वेनैव भानात्। विशेष्यत्वपर्यन्तमवश्यं वाच्यमेव। अन्यथा नीलजातौ व्यभिचारापत्तेरिति वदन्ति। तच्चिन्त्यम्। एवमपि द्रव्यत्वादिदृष्टान्तसौलभ्ये व्यतिरेकीति ग्रन्थविरोधतादवस्थ्यादिति।

केचित्तु साक्षात्कारपदेन चाक्षुषसाक्षात्कारो विवक्षितः तेन द्रव्यत्वादौ न व्यभिचारः। न च पेचकादिचक्षुर्जन्य-साक्षात्कारविषयत्वमादाय व्यभिचारः। मानुषेति बोध्यत्वात्। न चाञ्जनविशेषादन्धकारे चौरादिग्राह्ये व्यभिचारः। प्रमाणाभावात्। भावे वाल्याभावकेति विशेषणात्। न चैवं साध्ये चाक्षुषपदं

मयम् । तेषां विशेषगुणविरहात् । सामान्यगुणस्य चाश्रयसहोपलम्भनियमेन तदप्रत्यक्षताया मप्रत्यक्षत्व-प्रसङ्गात् ।

साक्षात्कारविषयत्वनियमएव विवक्षितः । न कर्म्मेति । अत्र क्षण-चतुष्टयावस्थायित्वेन कर्म्म विशेषणीयम् । तेन (५८) विनश्यदवस्थ-कर्म्मणि न व्यभिचारः । वस्तुतो विनश्यदवस्थं समवायिकारणमेव न भवति । कार्य्योत्तरकाले सतएव तत्त्वात् । न च तमोरूप कर्म्मणा भूतलाद्याश्रयसंयोगादि जन्यत एवेति वाच्यम् । अन्योन्याश्रयात् । कर्म्मत्वे हि सिद्धे तत्कल्पनं तत्कल्पने च कर्म्मत्वसिद्धिरिति भावः ।

न गुण इति । ननु द्रव्येति विशेषणं व्यर्थं असमवायादित्य-स्यैव गमकत्वात् । न च स्वरूपासिद्धिनिवारकविशेषणवदिदमपि साधनमिष्यत इति तन्मतेनैतत्समाधेयम् । तथाहि किं पृथिव्यादि-

व्यर्थम । व्यापकेऽखण्डाभावे च नैयर्थ्याभावात् । न च व्यतिरेके साध्याभावस्य व्याप्यतया भावत्वेन व्यर्थविशेषणत्वमावश्यकमिति वाच्यम् । शरीराजन्य-त्ववत परेण व्यभिचारावारकविशेषणस्यापि सार्थकत्वाभ्युपगमात । तत्र पक्ष-भ शेताासिद्धिप्रयोजनवदव्याप्यहेतुसिद्धे प्रयोजनत्वादित्याहु । न चालोकाभावत्व-पक्षे तमसोऽन्यतरासिद्धिः सप्रतियोगिकस्यैवाभावस्य साक्षात्कारविषयत्वादिति-वाच्यम् । तन्मतनैवास्य हेतुत्वात । प्राचीनमते प्रतियोगिनोऽप्यभावसाक्षात्कारा-विषयत्वाच्च । न चालोकाभावादेः सपक्षाद्व्यावृत्तावसाधारण्यमिति वाच्यम् । अनुकूलतर्कसत्त्वादिति ।

(५८) विनश्यदिति । विनश्यदवस्थस्य कर्म्मणोत्वर्थं । फलोपधानमाशङ्क्येद-मुक्तम् । एतच्चारम्भकसंयोगनाशसमकालं कर्म्मोत्पत्तिसम्भवपक्षे बोध्यम् । अत्र संयोगाजनकत्वात् विभागाजनकत्वाच्चेति हेतुद्वयं बोध्यम् । न च परेण द्रव्यत्वा-

नवकाससमवायी हेतुः द्रव्यमात्रासमवायी वा । आद्ये तमोरूपेणा नैकान्तिकम् । अन्त्ये स्वरूपासिद्धिः । किञ्च तमसः स्वावयवरूपद्रव्यसमवेतत्ववादिनोऽसिद्धिः । अत्राहुः । नञः प्रतियोगिविशेषणत्वात् । द्रव्यसमवेतत्वाभावो विशिष्टव्यतिरेको हेतुरिति न व्यर्थविशेषणम् । न चासमवेतत्वमत्रोपाधिः । अगुणत्वे साध्ये कर्म्मादौ साध्याव्यापकत्वात् । यद्वा हेतुद्वयमत्र विवक्षितम् । असमवेतान्धकारवादिपक्षे असमवेतत्वस्य द्रव्यान्यसमवेतत्ववादिपक्षे च तत्त्वस्यास्य हेतुत्वात् । नाप्यसिद्धः । अवयवसमवेतत्वमिद्धार्थमेवास्य परिशेषस्य क्रियमाणतया तत्पूर्व्वं तदसिद्धेः । यद्यपि द्रव्यासमवायसिद्धार्थ मवश्यवाच्याग्रेतनपरिशेषेणास्य गतार्थता तथापि तस्यैवानुमानरूपस्य सहकारिविपक्षबाधकाभिधानद्वारास्य ग्रन्थस्य

भ्युपगमादात्मादिसंयोगादन्धकारणत्वमसिद्धम् तदसमवायिकारणत्वाभावस्य हेतुत्वात् । न्यायनयेनेदमुक्तमित्यप्याहुः । न चाकारणत्वादित्येवास्तु अखण्डाभाव वैयर्थ्याभावात । तन्मते स्वरूपासिद्धवारकस्यापि सार्थकत्वाच्चेत्याहुः ।

ननु विनश्यदवस्थे घटादौ न कर्म्मोत्पत्तिसम्भवः । तथाहि तत्र विनश्यदवस्थत्वं समवायिनाशादारम्भकसंयोगनाशाद्वा । नाद्यः । आचार्य्यमते त्ववयविनि कर्म्मोत्पादस्य यावदवयवकर्म्मोत्पत्तिनियतत्वेन कपालादिनाशसमकालमवयवकर्म्मसामग्रीविरहात् घटादौ कर्म्मानुत्पत्तिः । नान्त्यः । आरम्भकसंयोगनाशजनकविभागजनककर्म्मणि तदानीं अवयववर्त्तित्वेन कर्म्मणि सति कर्म्मानुत्पादेन चावयवकर्म्मसामग्रीविरहेण पूर्व्ववत् तदनुत्पत्तेः । तन्नाशाग्रिमोत्तरकालभाविना उत्तरसंयोगेन विनाशिते कर्म्मणि प्रतिबन्धकाभावेऽवयवकर्म्मसामग्रीसम्भवात् । एवञ्च यथाश्रुत एवाव्यभिचारे किं क्षणचतुष्टयावस्थायित्वविशेषणेनेत्यपरितुष्यन्नाह । वस्तुत इति । विनश्यदवस्थं कर्म्म समवायिकारणमेव न भवति । उक्तयुक्त्या कर्म्मरूपकार्य्योत्तरकालसत्त्व एव तथात्वादित्यर्थः ।

व्याघातप्रतिपादनपरत्वम्। असमवेतं तमः सामान्यवन्निःसामान्यं वा। आद्ये सामान्यवत इति। स्वातन्त्र्यस्यासमवेतस्येत्यर्थः। अन्त्ये निःसामान्यस्येति। अद्रव्यसमवेतत्वञ्चेति दूषयति। गुणेति। तेषामिति।

ननु यथोक्तो हेतुरपक्षधर्म्मः। न चानेन गुणत्वाभावः सिद्ध्यति। सामान्यगुणत्वेऽप्युपपत्तेः। (६०) अथ प्रतिनियतेन्द्रियग्राह्यतया

---

ननु कार्य्यमात्रे तदुत्तरकालसतस्तथात्वं मानाभावात्। कार्य्यनिराश्रयत्वापत्त्या कार्य्यसमानकालत्वमात्राभ्युपगमादिति। एवञ्चैतन्मते संयोगविभागान्यतरजनकत्वाभाव एकएव हेतुरखण्डाभावं च न वैयर्थ्यम्। हेतुद्वयेऽपि तेनैव वैयर्थ्योद्धारात् विभागाजनकेन व्यभिचारापत्तेः। कर्म्मोत्तरकालसतएव कर्म्मोत्पादे तत्र तेन विभागजननमावश्यकम्। तत्र कार्य्यसमानकालीनत्वमात्रेणैव तथात्वादित्युक्तहेतौ न व्यभिचारशङ्का। तमसः कर्म्मत्वे तदाश्रये चलतीति धीप्रसङ्गः। इत्यपि बोध्यम।

स्वरूपासिद्धिरिति। गुणत्ववादिमतेऽवश्यं द्रव्यसमवायीकारात् स्वरूपासिद्धिरित्यर्थः। ननु स्वमतेनैव हेतुरित्याशङ्कयानुमानप्रयोक्तृमतेऽपि स्वरूपासिद्धिरित्याह। किञ्चेति। तम प्रतियोगी समवायः तद्विशेषणं द्रव्यमित्यर्थः। नन्वत्रापि द्रव्यपदं पृथिव्यादिनवकपरं द्रव्यमात्रपरञ्चेति पूर्व्वदोषानिवृत्तिरित्यनुशयादाह। यद्वेति। तथाच तन्मतेनैव तत्तद्धेतुत्वमिति नोक्तदोष इति भावः। द्रव्यसमवेतत्ववादिनोऽपि परिशेषकरणकालेऽपि नासिद्धिरित्याह। नापीति। यद्यप्येवमपि परार्थं परिशेषानुमानप्रयोगात् स्वतोऽसिद्धिरेव तदभावेऽपि सन्दिग्धासिद्धिर्दुर्वारैव। तथापि पूर्व्वोक्त एव तात्पर्य्यम्। न च द्रव्यासमवाय एवास्य कथमित्यादि मूलग्रन्थेनैवासिद्धिनिरास इति वाच्यम। पृथिव्यादिनवकासमवायमात्रस्यैव तेन साधनात। तत्र चोक्तदोषात्। व्याघातेति। गुणत्वे द्रव्यसमवेतत्वव्याघात निःसामान्यत्वे गुणत्वव्याघातः। इत्यादि क्रमेणेत्यर्थः।

(६०) अथेति। इन्द्रियपदं वहिरिन्द्रियपरमतो नात्मैकत्वादौ व्यभिचार।

**नात्मनो बाह्यकरणाप्रत्यक्षत्वादिदन्तास्पदत्वाच्च । नापि नभोनभस्वतोः । चाक्षुषत्वात् । चाक्षुषता हि**

सामान्यगुणत्वाभावे सिद्धे विशेषगुणत्वाभावेऽयं हेतुः । तथापि दिगादीनि न तमोरूपविशेषगुणवन्ति तमो वा न तद्विशेषगुणः इत्यत्र साध्याप्रसिद्धिः । अथ दिक्कालमनसां सयं न गुण इति प्रत्यक्षसिद्धत्वात् । गन्धवत् । यद्येवं साध्यविकलो दृष्टान्तः । विशेषगुणानामेव तद्गुणत्वात् । अत्रापतिष्ठत तेषामिति । तत्र गन्धादीनां दिगादिगुणत्वस्याप्रसिद्धत्वात् । प्रसङ्गाध्याहारे च माना-भावात् । अत्राहुः । दिगादीनां गुणो भवन्नयं सामान्यगुणो वा स्याद्विशेषगुणो वा । आद्ये बाधकम् । अन्त्ये तेषामिति । अयम-न्धकारो दिगादिगुणत्वे सति न विशेषगुणः प्रत्यक्षत्वात् घटवत् । प्रत्यक्षत्वादिति हेत्वध्याहारे च प्रत्यक्षत्वापादनसंवाद विपर्यय-रूपतया मानमित्यर्थः । तदेव स्पष्टयति । सामान्यगुणस्येति ।

इदन्तेति । नन्विदन्तास्पदत्वं यदीदमिति प्रतीयमानत्वं तदा सुखे व्यभिचारः । इदं मे सुखमिति मानसप्रत्यक्षत्वात् । नाप्यात्म-

प्रतिनियतैन्द्रियग्राह्यजातिमत्त्वादित्यर्थ इत्यन्ये । प्रत्यक्षत्वादिति लौकिकप्रत्यक्षत्वा-दित्यर्थः । तन्मतेऽलौकिकप्रत्यक्षाभावात् यथाश्रुतएव हेतुरित्यन्ये । कथमन्धकार इति । अन्धकारपदं पूर्वोक्तपरम् । तेन पक्षविकल्पावकाशः । नन्वत्रापि साध्या-प्रसिद्धिरिति चेत् । अत्र दिगादिगुणत्वसमानाधिकरणविशेषगुणत्वाभाव दिगादि-गुणत्वसमानाधिकरणत्वं व्यधिकरणं प्रतियोगितावच्छेदकमिति व्यधिकरणधर्माव-च्छिन्नप्रतियोगिताकाभावस्तन्मतेन साध्य इत्येके । दिगादिगुणत्वविशेषगुणत्वयोः प्रत्येकं प्रसिद्धयोः व्यासज्यप्रतियोगिकाभावः साध्य इत्यन्ये । ननु प्रत्यक्षत्वात

गुणानां रूपिद्रव्यसमवायेन व्याप्ता। तच्च रूपित्वं गगनपवनाभ्यां व्यावर्त्तमानं चाक्षुषगुणसम्बन्धमपि व्यावर्त्तयति न तैजसः। प्रतीतौ तद्विरोधित्वात्। शैत्यवत्। गुणिनः स्वगुणप्रतीतिपरिपन्थित्वे गुणस्य नित्यमनुपलम्भप्रसङ्गात्। सत्याश्रये तेनैव प्रतिबन्धात्। असति गुणस्यासत्त्वात् सत्सहचरितगुणान्तरानुपल-

समवेतत्वम्। असिद्धः। अत्राहुः (६१) मनोऽसाधारणकारणप्रत्यक्षाविषयत्वमहत्त्वव्यधिकरणत्वं वा तद्विवक्षितम्। प्रतीताविति। प्रतीतौ तमःप्रतीतौ। तद्विरोधित्वात् तेजोविरोधित्वादित्यर्थः। यद्वा प्रतीतौ चाक्षुषप्रतीतौ। तस्य तमसो विरोधित्वात्। वाह्यालोकं विना चाक्षुषज्ञानाभावादित्यर्थः। नापि तेजएव तमोरूपस्वगुणग्रहे प्रतिबन्धकम्। स्वगुणग्रहाप्रतिबन्धकत्वाद् गुणिनः। अन्यथा स्वगुणानामध्यक्षताविरोध इत्याह। गुणिनश्चेति। तदेव स्पष्टयति। सत्याश्रय इति। तत्सहचरितेति तेजःसहचरितेत्यर्थः।

प्रत्यक्षाविषयत्वादित्यर्थो वाच्यः। तथाच प्रत्यक्षेति व्यर्थम्। उक्तसाध्यस्य केवलान्वयितया व्यभिचारासम्भवादिति चेन्न। विषयत्वादित्यत्रैव तात्पर्य्यात्।

(६१) मन इति। अत्र तजव्यत्यासेन मनोऽसाधारणकारणकप्रत्यक्षविषयत्वादित्यर्थः। तेन भावनादौ न व्यभिचारः। प्रत्यक्षगुणत्वाभावः साध्यः। प्रत्यक्षत्वे सतीति हेतौ विशेषणमित्यन्ये। यदि च मनोऽसाधारणकारणकप्रत्यक्षान्यप्रत्यक्षविषयत्वमिति पाठस्तदा न दोषः। अहन्त्वेति। ननु व्यधिकरणत्वं तदधिकरणानधिकरणत्वं तच्च सन्दिग्धासिद्धमिति चेन्न। स्वमतावष्टम्भेनोक्तत्वादित्यन्ये।

न्धेश्च । न तावच्छाया तेजसो रूपमेव । तद्रूपस्य शुक्ल-
भास्वरत्वनियमात् । न चेदं नीलप्रभावद्वाश्रयोपाधि
रतथाभूत मिद माभातीति साम्प्रतम् । शैलभूतल-

---

यद्यप्येतद्गुणसर्गेनानैकान्तिकं तथापि न तम स्तेजोगुणः । तेजो
रूपाविषयकचाक्षुषप्रतीतिविषयत्वादित्यर्थः ।

ननु चासिद्धमेतत् । तेजोरूपात्मकत्वात् तमस इत्यत आह ।
न तावदिति । तद्रूपस्येति । न चाभिभवात् तत्त्वानुपलम्भः ।
सत्स्वपि भूतलादिरूपस्यानभिभावकत्वात् । अभिभावकान्तरस्य
चाभावात् । रूपान्यतेजोविशेषगुणस्य त्वगिन्द्रियाग्राह्यत्वे न

---

चक्षुर्व्यधिकरणत्वेन प्रतीयमानत्वादिति विवक्षितम् । न ह्ययं मूर्त्तो मद्दृ-
मन्धकारं जानामीति प्रतीतिरित्यन्ये । तेज मन्धचारितेति तेजोऽभिनान्यं । तेजो
रूपेति । चाक्षुषेति तामसेन्द्रियानभ्युपगमपक्षे । भाट्टमते नीलरूपविषयत्वाद-
भिचारणाय तेजःपदम् । रूपाविषयकत्वं चाक्षुषप्रतीतावप्रसिद्धमेवेति तद्-
मित्याहुः ।

ननु रूपेति व्यर्थमिति चेन्न । भाट्टमते प्रभा हि तेजसो रूपं न तु तेज इति
तदाश्रयतेजसोऽप्रत्यक्षत्वात् तेजोविषयकसाक्षात्कारविषयत्वस्य प्रभायां व्यभि
चारित्वात् । रूपपदं स्वरूपार्थकमित्यन्ये । उष्णस्पर्शे व्यभिचारवारणाय चाक्षु
षेति । सत्स्वपीति । अभिभावकत्वे तदुपलम्भापत्तेरिति भावः । रूपान्येति ।
प्रत्यक्षेति बोध्यमतो न चक्षुरादिस्पर्शव्यभिचारः । तेजःपदं गन्धादौ विशेषपदञ्च
त्वग्गृहीतसंयोगविशेषे व्यभिचारवारणाय ।

केचित् त्वगिन्द्रियस्य ह्युगुणत्वव्याप्यजातिशून्यत्वादिति कल्पयः । एवञ्च
द्रवादौ स्थितिव्यापके च व्यभिचारवारणाय तेजःपदविशेषपदे इत्याहुः । नीलं

स्फटिकपद्मरागाद्याश्रयरूपाननुविधानात् तस्मात् गुणान्तरमेवेदं तेजस इति वाच्यम्। तथाच तद्ग्रहे तदग्रहणं तद्विरहएव तद्ग्रहणमिति विपरीतमिह महत्यनुपपत्तिः। नापि पाथःपृथिव्योः। आलोकनिरपेक्षचक्षुर्ग्राह्यत्वात्। पार्थिवमेवेद मारोपितं रूपमित्यपि न समीचीनम्। बाह्यालोकसहकारिविरहे

---

सम्भवतीति भावः। गलेति। आश्रयरूपानुविधाने तमसः पद्मरागादिच्छायासु रक्ततायुपलम्भः स्यादित्यर्थः।

ननु विषयात्मकदोषमाहात्म्यान्नीलिमैवारोप्यते। यद्वक्ष्यति। आरोपे सति निमित्तानुसरणमित्यादि। मैवम्। आरोपो हि तेजसि तद्रूपे वा। आद्ये नीलं तेज इति प्रत्ययापत्तिः। नान्त्यः। तज्ज्ञानस्य तद्गतावान्तरजातिविषयत्वनैयत्यात्।

बाह्यालोकेति। आरोपानारोपसाधारणनीलसाक्षात्कारएव चक्षुषा बाह्यालोकापेक्षणादित्यर्थः। तदेव हीति। नीलरूपमेवेत्यर्थः। धर्मान्तरे तेजोऽभाव इत्यर्थः। तत्रैवेति। नीलरूपएव

---

तेज इति। यद्यपि दोषवशात् तेजस्त्वाग्रहे तथारोपः सम्भवत्येव तथाप्यन्धतमसे तेजोऽभावाच्च तत्र तदारोप इति भावः। तज्ज्ञानस्येति। तेजोरूपसाक्षात्कारस्य तद्गतशुक्लत्वभास्वरत्वान्यतरजातिविषयत्वनैयत्यादित्यर्थः। इन्द्रनीलप्रभायान्तु शुक्लत्वाग्रहेऽपि भास्वरत्वग्रहान्न व्यभिचारः। तथा प्रकृते तदविषयत्वान्न तेजोरूपविषयत्वमिति भावः।

चक्षुषस्तदारोपेऽप्यसामर्थ्यात्। तदेव हि धर्म्मान्तरे समारोप्येत पित्तपीतिमवत्। तत्रैव वा नियतदेशेऽनियतदेशत्वम्। नेदीयस्यनीयस्यपि महत्त्ववत्। उभयथापि तद्ग्रहणमन्तरेणानुपपत्तिः। एकत्रारो-

स्वाश्रयावृत्तित्वमारोप्यत इत्यर्थः। नेदीयसीति। गोलकसन्निकृष्टाणुनि यथाधिकदेशत्वमारोप्यत इत्यर्थः। एकत्र आद्ये पक्षे। अन्यत्र अन्त्ये पक्षे इत्यर्थः। तस्यैव नीलरूपस्येत्यर्थः। (६२) स्पर्श्यमाणारोपपक्षस्त्वग्रे निरस्यः। स्पर्शरहितत्वादिति। न चानुद्भूतं स्पर्शं पृथिव्याद्यन्यतमम्। उद्भूतरूपयोः पृथिवीजलयोरुद्भूतस्पर्शनियमात्। न चेन्द्रनीलप्रभामहश्चरितनीलभासेन व्यभिचारः। तत्र मानाभावात्। प्रभायान्तु मणिगोलकरूपारोपेण स्पर्श्यमाणारोपेणैवोपपत्तेः। उद्भूतरूपानुद्भूतस्पर्शतेजोरूपत्वे च तमसश्चान्द्रतेजोवत्परप्रकाशकत्वापत्तिः। सुवर्णतुल्यत्वे च तेजोऽन्तरप्रकाश्य-

(६२) ननु स्पर्श्यमाणारोपोऽस्त्वित्यत आह। स्पर्श्यमाणेति। उद्भूतरूपयोरिति। चन्द्रालोके व्यभिचारात् पृथिवीजलयोरित्युक्तम्। नन्वेवं पार्थिवे त्रसरेणौ व्यभिचार इति चेन्न। तद्भिन्नेति विशेषणादित्येके। तत्रास्पर्शो गृह्यत एव विविच्य परं नेति मतेनेदमित्यन्ये। धूमेऽपि न व्यभिचारः तत्राप्युद्भूतस्पर्शात्। अत एव तत्सम्बन्धाज्जलेऽपि जलनिपात इत्याहुः। तेजोरूपत्वे तेजःस्वरूपत्वे।

नन्वभिभूतत्वान्न तथेत्यत आह। सुवर्णेति। यथाश्रुते घटादौ व्यभिचारादन्यथा तर्कमाह। तमो यदीति। तेजोऽभाववदिति। यद्यप्यस्मन्मतेऽस्यैव पक्षत्वान्न दृष्टान्तत्वं तथापि निश्चितसाध्यवत्त्वात् तथात्वं मत एवाभेदानुमाने तथात्वमिति भावः। एतदस्वरसाद्वा आह। नीलरूपवत्त्वेति। तमोऽपि तत्तयानुभूयमाननील

प्यत्वात्। अन्यत्रारोपविषयत्वात् तस्यैव। न चालो-
कमन्तरेण रूपग्रहणे चक्षुषः सामर्थ्यमित्युक्तम्। न
चारोप्यारोपविषयाप्रथने भ्रान्तिसम्भवः। न चोभ-
योरन्यतरस्मिन् अव्यापृतस्यैव चक्षुषो भ्रान्तिजनक-
त्वम्। न चायमचाक्षुषः प्रत्यय स्तदनुविधानस्यान-
न्यथासिद्धत्वात्। स्वप्नविभ्रमवन्मानस एवायं न

त्वापत्तिः। वस्तुत इति। तमो यदि रूपवत् स्यात् आलोकान-
पेक्षचक्षुर्ग्राह्यं न स्यात् घटवदित्यापत्तिः। भावग्रहे आलोकापेक्ष-
स्यैव चक्षुषः सामर्थ्यात्। तेजोग्रहेऽपि विषयापेक्षणात्। तथाच
तमो न रूपवत्। तेजोऽनपेक्षचक्षुर्ग्राह्यत्वात् तेजोऽभाववन्नीलरूप-
वच्चेति। नीलरूपवत्त्वे बाधकादालोकाभावएव तम स्तत्रैव नीला-
द्यारोप इति गुणवत्त्वं क्रियावत्त्वञ्चासिद्धमित्यर्थः।

ननु चावाधितरूपवत्तया तमो द्रव्यं आलोकं विना च न
चक्षुर्ग्राह्य मतस्तद्ग्राहकं ताममसमिन्द्रियं प्राप्यकारि कल्पते।
अन्यथा तमःसाक्षात्कारानुपपत्तेः। अधिष्ठानं तस्य गोलकं

रूपपदित्यर्थः इत्याहुः। ग्राह्यत्वस्य ग्रहणविशेष्यत्वपरत्वात्। अन्यथा भेदारो-
पात नीलरूपवतो विशेषणतया तमोबुद्धिविषयत्वेन व्यभिचारप्रसङ्गात्। तस्मात्
नीलरूपवद्वस्य बहुव्रीहिणा तदाश्रयघटादिपटत्वाद्यतिरेकदृष्टान्तत्वं इत्येके।
साध्यान्तरसूचनाय प्रतियोग्यन्तरोत्कीर्त्तनमेतत्। तथाच नीलरूपवदिति साध्या-
न्तरम्। अतएव नीलरूपवत्त्वे बाधकादित्याह इत्यन्ये। स्वमतेन तेजोऽभाव-

चाक्षुष इत्येतदपि नाशङ्कनीयम्। निमीलितनयनस्य गेहेऽस्त्यन्धकारो नवेति सन्देहानुपपत्तेः। तस्मात् क्रियावत्त्वात् गुणसम्बन्धाच्च द्रव्यमेतत्। क्रियावत्त्वादेव नाकाशात्मकम्। प्रत्यक्षत्वान्न मनः। रूपवत्त्वादेव न वायुमनसी। स्पर्शविरहित्वान्न पृथिवी जलं तेजो वेति दशमं द्रव्यं प्राप्तं। तत्कथं नवैवेति। न। वस्तुतोऽस्य क्रियावत्त्वं स्वरूपवत्त्वं वा चाक्षुषत्वप्रस-

चक्षुष इव। यथा चक्षुःश्रवसो गोलकं चक्षुर्गोलकाधिष्ठानं अतएव चक्षुर्वत् तदनुविधायि। न चेन्द्रियान्तरग्राह्यगुणग्राहकतया भिन्नेन्द्रियसिद्धिः तमसि च तादृशगुणस्याग्रहादभावः। नीलस्य च चक्षुर्ग्राह्यत्वादिति वाच्यम्। इन्द्रियान्तराग्राह्यग्राहकतयैव भिन्नमिन्द्रियं सिद्ध्यति। गुणग्राहकत्वस्य गौरवेणातन्त्रत्वात्। तमोवृत्तिनीलस्य चक्षुरग्राह्यत्वेन तदन्येन्द्रियाग्राह्यत्वाच्च। मैवम्।

वदिति परमतेन तस्यानुपलब्धिगम्यत्वात् परमते तमोवृत्तिनीलरूपवदित्यपरे। न चालोकं विना पेचकादिना दृश्यत इति वाच्यम्। मानुषेति विशेषणात्। तच्चक्षुष्यपि दण्डायमानं तेजोऽस्ति तस्यापेक्षस्य तथात्वम्। अदृष्टविशेषात् तेनैव तद्गत इत्याहुः। अञ्जनादिना चौरदृष्टे पूर्ववन्न व्यभिचारः तामसमिति। तथा चान्धकाराभावस्तामसेन्द्रियेणैव ग्राह्य इति त्वयाप्यभ्युपेयम्। तन्नायुक्तम्। प्रौढालोकदशायां विरोधित्वेन तामसेन्द्रियस्यासत्त्वात्। अन्यथा तमोऽन्तरस्यापि सत्त्वापत्तेः। तस्माच्चक्षुषैव ग्राह्य इति तत्प्रतियोगी अन्धकारोऽपि तथेति भावः। एतदपि स्वमतावष्टम्भेनोक्तम्। परेणाभावस्येन्द्रियवेद्यत्वानभ्युपगमात्।

ङ्गात्। आलोकसहकारिण श्चक्षुष स्तत्र सामर्थ्याव-धारणादित्युक्तम् ।

न चेदमद्रव्यं रूपिद्रव्यम्। रूपवतो मूर्त्तिनान्तरीयकत्वेन निरवयवस्य परमाणुतयातीन्द्रियत्वापत्तेः। नाप्यनेकद्रव्यं स्पर्शरहितद्रव्यत्वेनारब्धत्वात् मनोवत्। न च रूपवत्तया स्पर्शोऽनुमास्यते तद्रहितस्यापि

---

रूपसाक्षात्कारत्वेन नीलं तम इति बुद्धेश्चक्षुर्जन्यत्वात्। धर्म्मि-ग्राहकमानेन तथैव चक्षुषः सिद्धेः। तेन विना तदनुत्पत्तेः। भावाभावयोरैकेन्द्रियवेद्यत्वनियमाच्च।

अद्रव्यमिति। न विद्यते द्रव्यं समवायिकारणतया सम्बन्धि यस्य, निरवयवमित्यर्थः। रूपवत इति। अस्य चाक्षुषत्वादित्यर्थः। (६२) अनित्यत्वाच्चेत्यपि द्रष्टव्यम्। स्पर्शरहितेति। स्पर्शवत्तयारम्भकत्वेनारब्धस्य स्पर्शवत्त्वनियमादित्यर्थः। न चेति। साम्प्रत-मित्यग्रेतनेन सम्बन्धः। स्पर्शरहितस्यापि तमसः पुरुषार्थहेतु-

---

यद्यप्यनुद्भूतरूपतयान्धकारे चक्षुः सत्त्ववत् तदा तत्प्रत्यक्षमविरुद्धं तथापि पूर्व्वदोषा-वष्टम्भेनेदमुक्तम्।

(६२) अनित्यत्वाच्चेति। यद्यपि न्यायनये आलोकात्यन्ताभावरूपे तमसि नेदमस्ति तथापि यत्रालोकध्वंसानन्तरं तमःप्रतीति स्तत्र ध्वंसएव तथा। एवञ्चा-नित्यत्वात् प्रागभावप्रतियोगित्वादित्यर्थः इत्येके। केचित्तु यत्रालोकप्रागभावदशायां तमःप्रतीति स्तत्र यथाश्रुतमेवानित्यत्वमित्याहुः। तमो नारब्धस्पर्शरहितत्वादित्य-त्रोपाधिमाह। साधनेति। पार्थिवपरमाणोः साध्याव्यापकत्वात् साधनावच्छिन्ने-

| | Rs. | |
|---|---|---|
| *Markandeya Purana, Fasc. 5-7 @ /10/ each | 1 | 14 |
| *Mimāṁsā Darçana, Fasc. 10-19 @ /10/ each | 6 | 4 |
| Nyāyavārtika, Fasc. 1-6 @ /10/ each | 3 | 12 |
| *Nirukta, Vol. IV. fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisara, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Nityācārapaddhatiḥ, Fasc 1-7 @ /10/ each | 4 | 6 |
| Nityācārapradīpaḥ Vol. I Fasc 1-8 ; Vol II, Fasc. 1-3. @ /10/ each | 6 | 14 |
| Nyayabindutikā, Fasc. 1 @ /10/ each | 0 | 10 |
| *Nyāya Kusumāñjali Prakaraṇa Vol. I, Fasc. 2-6 ; Vol. II, Fasc. 1-3 @ /10/ each | 5 | 0 |
| Nyayasarah | 2 | 0 |
| Padumawati, Fasc. 1-5 @ 2/ | 10 | 0 |
| *Pariçiṣṭa Parvan, Fasc 3-5 @ /10/ each | 1 | 14 |
| Prākrita Paingalam, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Prithivirāj Rāsa. Part II, Fasc 1-5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II, Fasc 1 @ 1/- | 1 | 0 |
| Prākrta Lakṣaṇam Fasc. 1 @ 1/8/ each | 1 | 8 |
| Paraçara Smṛti, Vol I, Fasc. 1-8, Vol. II, Fasc 1-6, Vol III, Fasc. 1-6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Parīksamukha Sutram | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | 3 | 12 |
| Saddarsana-Samuccaya, Fasc 1-2 @ /10/ each | 1 | 4 |
| Samaraicca Kaha Fasc 1-3, @ /10/ | 1 | 14 |
| Sāṅkhya Sutra Vṛtti, Fasc 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vijaya, Fasc 2-3 @ /10/ each | 1 | 4 |
| Six Buddhist Nyaya Tracts | 0 | 10 |
| Srāddha Kriyā Kaumudī Fasc 1-6 @ /10/ each | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) | 2 | 0 |
| Suçruta Samhita, (Eng.) Fasc 1 @ 1/- each | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each | 2 | 8 |
| Sundarananadam Kavyam | 1 | 0 |
| Suryya Siddhanta Fasc 1 | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittreya Brahmana, Fasc 11-25 @ /10/ each | 9 | 6 |
| ,, Pratisakhya, Fasc 1-3 @ /10/ each | 1 | 4 |
| *Taitterīya Samhitā, Fasc 27-45 @ /10/ each | 11 | 14 |
| Tāṇḍya Brāhmaṇa, Fasc 10-19 @ /10/ each | 6 | 14 |
| Tantra Vārtika (English) Fasc 1-8 @ 1/4/ each | 10 | 0 |
| Tattva Cintāmaṇi, Vol I, Fasc 1-9, Vol II Fasc 1-10, Vol III, Fasc 1-2, Vol IV, Fasc 1, Vol V, Fasc 1-5, Part IV Vol II, Fasc 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1 @ /10/ each | 0 | 0 |
| Ditto Prakas, Fasc 1-2, @ /10/ each | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc 1-3 @ /10/ each | 1 | 14 |
| Tirthacintamoni, Fasc, 1, @ /10/ each | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc 1-3 @ /10/ each | 1 | 14 |
| Tul'si Satsai, Fasc 1-5 @ /10/ each | 3 | 2 |
| *Upamita-bhava-prapañca katha, Fasc 1-2, 5-13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc 1-6 @ 1/- each | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1-6 @ /10/ each | 3 | 12 |
| *Vāyu Purāṇa, Vol I, Fasc 3-6, Vol II, Fasc 1-7, @ /10/ each | 6 | 14 |
| Vidhāna Pārijata, Fasc 1-8 Vol. II Fasc 1 @ /10/ each | 5 | 10 |
| Ditto Vol II Fasc 2-4 @ 1/4/ | 3 | 12 |
| Vivādaratnākara, Fasc 1-7 @ /10/ each | 4 | 6 |
| Vrihat Svayambhū Purāṇa, Fasc 1-6 @ /10/ each | 3 | 12 |
| Yoga Aphorisms of Patanjali, Fasc 3-5 @ /10/ each | 1 | 14 |
| Yogasāstra of Hemchandra Vol I Fasc 1-3 | 3 | 12 |

*Tibetan Series*

| | | |
|---|---|---|
| Baudhyastotrasangraha, Vol I (Tib. & Sans.) | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc 1-4 @ 1/- each | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc 1 | 1 | 0 |
| Pag-Sam S'hi Tiṅ, Fasc 1-4 @ 1/- each | 4 | 0 |
| Rtogs brjod dpag hkhri S'in (Tib. & Sans. Avadāna Kalpalatā) Vol. I, Fasc 1-8, Vol II Fasc 1-7 @ 1/- each | 15 | 0 |
| Sher-Phyin, Vol I, Fasc 1-5, Vol. II, Fasc 1-3, Vol III, Fasc 1-6, @ 1/- each | 14 | 0 |

*Arabic and Persian Series*

| | | |
|---|---|---|
| 'Alamgirnāmah, with Index, (Text) Fasc 1-13 @ /10/ each | 8 | 2 |
| Al-Muqaddasi (English) Vol I, Fasc. 1-4 @ 1/- each | 4 | 0 |
| Akbarnāmah, with Index, Fasc 1-37 @ 1/8/ each | 55 | 8 |

*The other Fasciculi of these works are out of stock and complete copies cannot be supplied.

ननु सामान्यादिभ्यो व्यावर्त्तमानापि सत्ता यदि स्वाश्रयं ततो न व्यावर्त्तयेत् द्रव्यत्वादिकमपि न व्यावर्त्तयेदविशेषात्। न। सत्ताया व्यक्तिमात्रव्यङ्ग्यतया व्यञ्जकनियमाभावात्। बाधकात्तु सामान्यादौ तत्त्यागः। सामान्यान्तरस्य हि संस्थानगुणकार्य्यकारणादिव्यङ्ग्यतया तेषाञ्चानियतत्वात् न सर्व्वताभिव्यक्तिः।

हेतुत्वादित्यर्थः। सत्ताया इति। यद्यप्यभावादावनुवृत्तिबोधकत्वमस्त्येव न च भावात् तद्बोधकत्वं सामान्यादावापर्य्यन्तिकसत्ताव्यतिरेकनियमे ततोऽपि व्यावृत्तबोधकत्वात्। तथापि जातिमदर्थप्रतियोगिकव्यावृत्तबोधकतया सत्तासामान्यमेवेति तात्पर्य्यम्। बाधकादिति। सत्प्रत्ययानुगमस्य सर्व्वभावसाधारण्येऽपि सामान्यादावुक्तबाधकान्न सत्तास्वीकार इत्यर्थः। द्रव्यत्वादिवैधर्म्यमाह। सामान्यान्तरस्येति। द्रव्यत्वादिकं न सर्व्वत्र सामान्यवति प्रतीयते सत्ता तु न तथेत्यर्थः। अत्र हेतुः। संस्थानेति। वस्तुस्वभावोऽत्र नियामक इति भावः।

परसामान्यपदोपादानेन जातिव्यापकत्वनिरसनमिदमिति व्यक्तिनतम्। ननु व्यापकत्वमात्रकत्वं प्रमेयत्वाभिधेयत्वादावव्याप्तिप्रसङ्गात्। द्रव्यत्वस्यापि पृथिवीत्वव्यापकत्वप्रसङ्गाच्चेति।

नन्वेवं गुणादिवृत्तिजातेः सर्व्वत्राभिव्यक्त्यापत्तिः अत संस्थानादेरभिव्यञ्जकत्वाभावादित्यनुशयेनाह। वस्तुस्वभाव एवेति।

तर्हि वस्तुस्वरूपमेव सत्तास्तु । न च गोत्वाद्य-भावेऽपि यदि गौरिति प्रत्ययानुवृत्तिः स्वरूपतः स्यात् तदाश्वादावपि स्यादितिवत् यदि सत्तया विना सत् सदिति प्रत्ययानुवृत्तिः स्वरूपतः स्यात् । सर्व्वत्र स्यादित्यनिष्टापत्तिरिति वाच्यम् । तदनुवृत्ते स्तदभावेऽपीष्टत्वादिति । न । प्रत्ययानुवृत्तेर्निमित्तमन्तरेणानु-

नन्वेवं किं सत्तया । तां विनापि सदिति बुद्धेरुपपन्नत्वात् स्वरूपमेव तद्बीजमस्त्वित्याह । तर्हीति । तदनुवृत्तेः सत्प्रत्ययानुवृत्तेरित्यर्थः । तदभावेऽपि सामान्यादौ सत्ताया अभावेऽपीत्यर्थः । प्रत्ययेति । भिन्नेषु सदित्यनुगतप्रत्ययस्याननुगताप्रयोज्यतया यदत्र प्रयोजकं तत्सत्तासामान्यमध्यक्षमेवेत्यर्थः । न च (८२) प्रामाणिकत्वेनोपाधिना तदुपपत्तिः साक्षात्सम्बन्धधर्म्मबाधे सत्येव परम्परासम्बन्धोपाधिव्यवस्थितेः । प्रमाणप्रवृत्तेः प्राक् सदिति बुद्ध्यनापत्तेः । अतीतानागतयोरपि प्रामाणिकतया सदिति बुद्ध्या-

(८२) प्रामाणिकत्वेनेति । एवञ्च सामान्यादावपि सत्प्रत्ययो बाधित एवेति भाव । न चाभावेऽपि सत्प्रत्यय स्यादुक्तरूपसत्त्वादिति वाच्यम । भावत्वेन विशेषणादित्याहुः ।

प्रमाणेति । तथाच तद्विनापि तदा सद्व्यवहारदर्शनात् तत्प्रयोजकतयावश्यं सत्ता स्वीकार इति भाव ।

ननु कस्यचिद् योगादेः प्रमाणवृत्तिरस्त्येव तद्योग्यता वा तद्व्यवहाराङ्गं सा च तदास्त्येवेति अनुशयादाह । अतीतेति । यद्यप्यतेष्टापत्तिः । अतीते वर्त्तमानत्वप्रत्ययाभावेऽपि स घटः सन्नासीति प्रत्ययात् । सत्ताजातिवादिनापि

पपत्तेः । न च विशेषा एव तन्निमित्तं लक्षणमात्रं वा । सामान्यमात्रोच्छेदप्रसङ्गात् । न हि विशेषान् लक्षणं वा विहाय क्वचित् सामान्याभिव्यक्तिरस्ति कथं तर्हि सामान्यादौ सत् सदिति प्रत्ययः । सत्तैकार्थसम-

पत्तेश्च । रूपादयो द्रव्यवृत्तिमन्तः जातित्वात् घटवत् । न च द्रव्यत्वमुपाधिः उक्तविपक्षबाधकादतो साध्यव्याप्यतया उपाधेः साध्याव्यापकत्वात् । यद्वा द्रव्यत्वादीनि जातिव्याप्यानि जाति सन्निष्ठात्यन्ताभावप्रतियोगिजातित्वात् घटवदित्यप्याहुः । विशेषा

तदभ्युपगमात् । न च तदाश्रयाभावेन तत्र सत्ताविरहात् न तदभ्युपगम इति वाच्यम् । तथा सति घटत्वादेरप्यनापत्तेः । तथाप्यभावेऽतिप्रसक्तिः सामान्यादिगणो तद्वारस्तु तदननुसन्धानेऽपि सामान्यस्याश्रुत्यादि दूषणं तात्पर्य्यम् ।

यद्वेति । व्याप्यत्वं भेदगर्भमतो नार्थान्तरम् । ननु जातिमदित्यादि विशेषण व्यावर्त्त्यमन्यथाऽसिद्धौ तद्वैयर्थ्यं तत्सिद्धौ किमनुमानेनेति चेत् । न । अनवस्था भयेन क्वचिदपि साध्याभाव-स्वीकारेण जातित्वस्य सामान्यतोऽनैकान्तिकत्वे निर्वि कल्पकसाधकानुमाने विशिष्टपदस्य व्याप्तिपक्षोपयिकत्वेन सार्थकत्वात् । न च द्रव्यगुणोभयमात्रवृत्तित्वेनार्थान्तरं कर्म्मत्वे व्यभिचारात् । द्वयद्वयवृत्तिजातिद्वयन्तु जातिसङ्करभयादेव नेति पक्षधर्म्मताबलादेकस्याश्चिन्तयानुगतायाः सिद्धिरिति भावः । वस्तुतस्तु जात्याश्रयत्वं क्वचिदस्ति क्वचिन्नास्तीति सर्व्वसिद्धम् । तथाच सम्भवत एकयोगायोगादिति न्यायेनानुगतो धर्म्मोऽवश्यं वाच्य इति स एव बाधकाभावात् तज्जातिरूप एव कल्प्यत इति तत्त्वम् । जातित्वादौ व्यभिचारवारणायान्तिम-जातिपदम् । अत्राप्यनेकसमवेतत्व एव तात्पर्य्यम् । अभावस्येति ।

ननु अभावत्वेनोपस्थितौ तदभावेऽपीदन्त्वेनोपस्थितौ तदभावे बाधकाभावः । किञ्च विरोधित्वेनास्फुरणदशायां अभावत्वेनोपस्थितावपि तदारोपः स्यादेव ।

वायात् । गुणादिषु संख्यादिप्रत्ययवत् । अभावेऽपि तर्हि स्यादिति चेन्न । तस्य सद्विरुद्धतयैव प्रतीतेरिति ।

द्रव्यत्वाद्यपरं सत्तापेक्षयाल्पविषयत्वात् । तच्चेति च स्त्वर्थः । अपिः समुच्चये । अनुवृत्तेर्हेतुत्वादिति । हेतुमनुकर्षति । सत्तायामन्त्येषु च एकैकनिमित्तवशा-

स्तत्तद्व्यक्तयः । लक्षणं द्रव्यव्यञ्जकम् । सत्तैकार्थेति । यद्यपि नायं सम्बन्धः समवाये तथापि सत्तकार्थाधेयत्वं विवक्षितम् । अभावे चातिप्रसक्तिमग्रे निराकरिष्यति । यद्वा आरोपनिमित्तं सत्तया सम्बन्धमात्रमनेनोपलक्षितम् । तस्येति सामान्यादीनां भावत्वेन तदुपस्थिति न सत्तारोपविरोधिनो अभावस्य तत्त्वेनोपस्थिति-स्तदारोपप्रतिबन्धिकेत्यर्थः ।

द्रव्यत्वादीति । (८३) समानाधिकरणसामान्यसमानाधि-करणात्यन्ताभावप्रतियोगीत्यर्थः । चकारो व्यावृत्त्यर्थो न सत्ता-पेक्षया समुच्चयार्थः । सत्ताया विशेषत्वाभावादित्याह । च इति ।

नहि वस्तुनो यो विरोधी तदुपस्थितिमात्रं तदारोपप्रतिबन्धकं सामान्यत्वादेरपि तथात्वेन तथात्वापत्तेरिति चेन्न । आरोपे सति निमित्तानुसरणमिति न्यायात् । अत्र स्वभावादेव नारोप इत्येके । विरोधित्वेनोपस्थित्यभिप्रायेणेदं तदनुपस्थितावभावः सविषयारोपः कदाचिद् भवत्येव सामग्रीसत्त्वादित्यन्ये । सत्तावच्छिन्नत्व गर्भसभावत्वम । तथाच सत्तावच्छिन्नत्वप्रतीतौ न सत्तावत्त्वभान मित्यभिप्राय इत्यपरे ।

(८३) समानाधिकरणेति । स्वसमानाधिकरणीभूतयत्सामान्यसमानाधि-करणीभूतात्यन्ताभाव-प्रतियोगि यत्सामान्यं तत्तद्व्याप्यमित्यर्थः ।

देकैका संज्ञा। इह तु निमित्तद्वयसमावेशात् संज्ञाद्वयसमावेश इत्यर्थः। अतद्व्यत्पादनप्रयोजनं साधर्म्यादौ भविष्यतीति विशेषानाह। नित्येति। बहुवचनेनानन्त्यं लक्षयति। ते के। अन्त्याः। अन्ते अवसाने भवन्ति सन्तीति यावत्। येभ्योऽपरे विशेषा न सन्तीत्यर्थः। सामान्यरूपेभ्यो विशेषेभ्योऽपरे गुणादयो विशेषाः सन्ति। एभ्यस्तु नापरं किन्त्वेष्वेव वैशिष्ट्यं समाप्यते। क्व ते वर्त्तन्त इत्यत उक्तं नित्येति। अयमर्थः। अनित्यद्रव्येषु तावदाश्रयादि-

ननु विशेषत्वे हेत्वभिधाने सामान्यरूपत्वे हेतु र्नोक्त इत्यत आह अपिरिति। आनन्त्यं बहुत्वम्। न तु समवायवदेकत्वमिति भावः।

ननु भवन्ति जायन्ते इत्यत विरोधो विशेषाणां नित्यत्वादित्यत आह। सन्तीति। विद्यन्ते इत्यर्थः। अवसानं स्पष्टयति। सामान्यरूपेभ्य इति। यथैकजात्याश्रये गुणादिनापि व्यावृत्तधीस्तथा न विशेषाश्रयेऽन्याधीना व्यावृत्तिरित्यर्थः।

ननु व्यावृत्तिधीबलादनित्यद्रव्येष्वपि कुतो न विशेषा इत्यत आह। अयमर्थ इति। अस्ति तावत् परमाणुषु समानजातिगुणकर्मसु मिथो व्यावृत्ति स्तद्यदेवात्र व्यावर्त्तकं स विशेषः। सा

ननु बहुवचनं मानन्त्यप्रतिपादकं त्रिष्वपि तत्प्रयोगात्। न। तथाच बहुवचनेनानन्त्यं विवक्षितमित्ययुक्तमित्यत आह। आनन्त्यमिति।

एव विशिष्टबुद्धिरुपपद्यतेति ततोऽधिकविशेषेषु प्रमाणाभावः। नित्येषु तु द्रव्येषु आश्रयरहितेषु समानजातीयेषु समानगुणकर्म्मसु च भवितव्यं व्यावर्त्तकेन केनचिद्धर्म्मेण व्यावृत्तत्वात्।

हि वैधर्म्म्यसाम्या न तु पृथक्त्वमेव तद्व्यावर्त्तकम्। न च या यतो व्यावृत्तधीः सा तद्धर्म्मासमानव्यावर्त्तकधर्म्माधीना यथा घटे पटाद्व्यावृत्तिधीः पटत्वविसदृशघटत्वधर्म्मकार्य्येति वाच्यम्। जातित्वेन तयोः (८४) सादृश्याद्व्यभिचारसिद्धेः। विशेषाणामपि विशेषत्वेन समानत्वाच्च। न च जात्या समानत्वं विवक्षितम्। गुणादिना तादृशेन व्यावृत्तिधीदर्शनाद्व्यभिचारात्। मैवम्। गुणानामपि स्वाश्रयवृत्त्यसिद्धौ व्यावृत्त्यसिद्धेः। अन्यथान्योन्याश्रयापत्तेः। विशेषाणाञ्च स्वाश्रयवत् स्वस्मिन्नपि व्यावृत्तधीजनकत्वस्वाभाव्यात् सिद्धासिद्धिव्याघाताच्च। अयमनारब्धद्रव्यः परमाणुरेतत्परमाणुनिष्ठजातिगुणकर्म्मभिन्नधर्म्मसमवायी परमाणुत्वात्। अन्यपरमाणुवत्। विपक्षे बाधकश्च व्यावर्त्तकधर्म्माभावादभेदप्रसङ्ग इत्यप्याहुः।

(८४) तयोरिति। घटत्वपटत्वयोरित्यर्थः। तादृशेनेति। जात्या समानेनेत्यर्थः। गुणानामिति। पृथक्त्वादीनामित्यर्थः। यदि पृथक्त्वमात्रमाशङ्कितं तथापि गुणान्तरस्यापि सम्भावितत्वात् बहुवचनमुक्तम्।

नन्वयं दोषो विशेषेष्वपि तुल्य इत्यत आह। विशेषाणाञ्चेति। ननु स्वभाव एव तेषां कथं तादृशोऽन्यथा गुणादेरपि तादृक् स्वभावः किं न स्यादित्यत आह। सिद्धासिद्धीति। असिद्धावाश्रयासिद्धिः। सिद्धौ धर्म्मिग्राहक

न चैवं गुणादिष्वपि तत्कल्पनावकाशः। आश्रय-विशेषेणैव तद्व्यावृत्त्युपपत्तेरिति प्रमाणसूचनम्। तथाच वक्ष्यते। ननु सामान्यान्येव कानिचित् तथा भविष्यन्ति गुणा वा किं पदार्थान्तरकल्पनयेत्यत आह। तेचेति। च स्त्वर्थः। अयमर्थः। ते पुन

अतएवाह प्रमाणसूचनमिति। विशेषा एवेति। व्यावृत्ता एवेत्यर्थः। स्वरूपेति। स्वरूपेण सत्ता ननु सत्तायोगेनेत्यर्थः।

मातेन तत्स्वभावत्वेनैव तत्सिद्धेः। गुणादिष्वान्यथैव सिद्धिरिति भावः। अयमिति। द्व्यणुकेनार्थान्तरारम्भकावयवारब्धद्रव्य इति। न च परमते शक्तिमात्रव्यादिना अर्थान्तरम्। स्वमतात्तस्यानोक्तत्वात्।

नन्वेतत्परमाणुनिष्ठत्वे विशेषणे व्यर्थे द्रव्यसमवायित्वेनैव परमाण्वन्तरस्य दृष्टान्तत्वात्। अतएव परमाण्वादिहेतुरपि। अन्यथा परमाणुत्वमपरमाणुत्वा-वच्छिन्नपरिमाणवत्त्वमिति यथाश्रुतमपि परिमाणवत्त्वहेतोरेव सामर्थ्ये व्यर्थविशेषणत्वापत्तेः। अनारब्धद्रव्यमन परमाणोः पक्षसमत्वेन व्यभिचाराभावादिति चेन्न। परमाण्वन्तरस्यारब्धद्रव्यत्वाग्रहदशायां न तथा सत्यनुमानप्रवृत्तिः स्या-दिति। तदा व्याप्तिग्राहकत्वे सार्थकत्वमित्येके। अनारब्धद्रव्य इति साध्यविशेष-णम्। तथाचारब्धद्रव्यः सन्नेतादृशधर्मसमवायी न स्यात्।

एवञ्च परमाण्वन्तरे साध्यैकत्वोद्धारार्थं तद्विशेषणमित्यन्ये। ननु विशेष्यता भिन्नेति विशेषणस्यापि दानात् तदतिरिक्तधर्मस्यापि सिद्धेरित्यत आह। विपक्षेति। तथाच धर्मान्तरसिद्धौ न सोऽस्तीति न तत्सिद्धिरिति भावः। इत्यपीत्यस्वरसोद्भावनम्। तद्बीजन्तु विपक्षबाधकाश्रयणं किं सहाविद्यया सामान्यतो दृष्टेनैवान्योन्यव्यावर्त्तकधर्मसिद्धेः। तदनाश्रयणं प्रकृतानुमानप्रयो-जकमिति।

यद्येकैकव्यक्तिवृत्तयः कथं सामान्यरूपाः। अनेकव्यक्तिवृत्तित्वेन कथ मत्यन्तव्यावृत्तिबुद्धिहेतवः। गुणा अपि भवन्तः यदि सामान्यवन्तः स्युः तथाप्यत्यन्तव्यावृत्तिहेतुत्वं व्याहन्येत। ततो निःसामान्या स्तथाच गुणत्वव्याघात स्तस्मादन्यव्यपदेशाद् व्यावृत्तिबुद्धेरेव हेतुत्वाद्विशेषा एव विशेषा नान्यत्रान्तर्भूता इति। एकद्रव्याः स्वरूपसन्त इति लक्षणं सूचित मिति। एवञ्च सति निःसामान्यत्वेऽपि विशेषोऽयं विशेषोऽय मित्यनुगतव्यवहार उपाधि र्लक्षणञ्चोपाधिरध्यवसेय इति।

निःसामान्यत्वे सत्येक (८५) द्रव्यमात्रवृत्तित्वमिति लक्षणार्थः। एवञ्चेति। विशेषपदसंकेतग्रहोऽपि तत एवेति द्रष्टव्यम।

(८५) जातावतिव्याप्ते राह। एकमात्रेति। फलित मर्थमाह। निःसामान्यत्व इति। रूपादा वतिव्याप्ते राह सत्यन्तं। द्रव्यत्वेऽतिव्याप्ते राह एकेति। जातावतिव्याप्ते राह मात्रेति। द्रव्यपदं स्वरूपनिर्वचनं। केचित्तु समयत्वेऽव्याप्ते राह द्रव्यपदं। नच समवायार्थक वृत्तिपदेनैव तन्निरासः। स्वरूपसम्बन्धेनैव वृत्तेः। स्वरूपं तत्र समवाय एवेत्याहुः। वृत्तिपदञ्च समवायपरं। तेनैतद्घटत्वादावुपाधौ नातिव्याप्तिः।

लक्षणार्थ इति। लक्षणवाक्यार्थ इत्यर्थ। नन्वाकाशेश्वरवृत्तिविशेषे माना भावः। शब्दध्वंसनित्यज्ञानादिव्यावर्त्तकान्तरकल्पने ऽनुमानस्यान्यथासिद्धेरिति चेत् अत्राहुः। तत्र विशेषो न स्वीक्रियत एवेत्येके। नित्यद्रव्येण तत्रापि

समवायस्यैकत्वा द्विभागो नास्तीति लक्षण माह। अयुतसिद्धानामिति। अयुताः प्राप्ताश्च सिद्धा इति अयुतसिद्धाः। प्राप्ता एव सन्ति नाप्राप्ता इति यावत्। तेषां सम्बन्धः प्राप्तिलक्षणः समवायः। तेन सम्बन्धो व्यवच्छिन्नः। तस्याप्राप्तिप्रवर्त्तकत्वात्। तथाच नित्यप्राप्तिः समवाय इति लक्षणं सूचितं। अजसंयोगा-

(८६) ननु चायुतसिद्धौ यदि युतौ न सिद्धौ तदा कयोः सम्बन्धो धर्म्मिणोरेवाभावात्। अथायुतौ सिद्धौ तथापि कयोः सम्बन्धः सम्बन्धिनोरपृथग्भूतत्वात्। पृथग्भूतयोरेव सम्बन्धादित्यत आह। अयुता इति। अन्योन्यपरिहारेण पृथगाश्रयानाश्रिता इत्यर्थः। एतदेव स्पष्टयति। प्राप्ता एवेति। अनेना प्राप्तिर्निषिध्यते। साच प्राप्तिः प्रागभावः। तथाच तदप्रतियोगी सम्बन्ध इत्यर्थः। तेन विशेषणताख्योऽपि अनित्यः सम्बन्धो निरस्तः। अजेति। विभुनो मिथः संयोगो नास्ति। अज इति

तदनुमान॰ मतएव कुसुमाञ्जलिप्रकाशे आकाशैकगुणत्वादित्यत्र गुणपदं व्योमवृत्ति विशेषे व्यभिचारवारणायेत्युक्तम। इत्यन्ये॥

(८६) ननुचायुतसिद्धा नित्यत्र विशिष्टाभावो विशेष्याभावाद्विशेषणाभावाद्वा। आद्ये यदीति। अन्ये अथेति। आश्रितपरिहारेणाश्रयोऽप्याश्रितो भवत्येवेत्यत आह। अन्योन्येति। विशेषणताख्य इति। नित्यद्वयनिरूपितविशेषणताख्य इत्यर्थः। यद्यपि नित्यस्य तस्य प्रागभावाप्रतियोगिसम्बन्धत्वात् तत्रातिव्याप्तिरेव तथापि सम्बन्धपदस्य सम्बन्धिद्वयातिरिक्तसम्बन्धपरत्वादेतदुक्तम।

भावो वक्ष्यते। समवायस्य नित्यत्वञ्च प्राप्तिपदेनैव वाच्यवाचकादिभावलक्षणः सम्बन्धो न प्रसज्यते। एतदेव स्पष्टयति आधार्य्याधारभूतानामिति। स्वभावादाधार्य्याधारयोः नत्वागन्तुकेन धर्म्मेणेत्यर्थः। तत्र

न तत्रातिव्याप्तिरित्यर्थः। प्राप्तिपदेनेति। न च नित्यपदेनैव तन्निरासः। अस्येश्वरेच्छारूपतया नित्यत्वात्। यद्यपि प्राप्तित्वं संयोगसमवायान्यतरत्वमित्यन्योन्याश्रय स्तथापि जातिशून्यत्वे सति सामान्यत्वविशेषत्वशून्यभावत्वं तल्लक्षणं सत्तेनोपलक्षितम्। संयोगिनोरप्याधाराधेयभावादाह। स्वभाव इति। (८७) इह

इच्छेति। ईश्वरेच्छेत्यर्थः। प्राप्तित्वमिति। यदि च प्राप्तित्वं सम्बन्धिभिन्न-सम्बन्धत्वं तदा वाच्यवाचकभावसम्बन्धेऽतिप्रसक्तितादवस्थ्यमेवेति संयोगसमवाया-न्यतरत्वमेव तद्वाच्यं। एवञ्चान्योन्याश्रय इति भावः। तथापीति। ननु सामान्यस्य अनेकव्यक्तिसमवेतत्वगर्भं विशेषत्वञ्च एकद्रव्यमात्रसमवेतत्वगर्भमित्यन्यो-न्याश्रय इति चेत्। अत्राहुः। सम्बन्धिभेदेऽप्यभिन्नसम्बन्धत्वमनेनोपलक्षितं। न चेद मन्यत्र। संयोगस्य संयोगिभेदभिन्नत्वेन तद्धर्मसंयुक्तसमवायादीनामपि तथात्वादभावे च सम्बन्धिन एव सम्बन्धत्वेन तद्भेदेन भेदनियमात्। विषय-विशेषोपहितेच्छयोः संकेतत्वेन तस्यापि विषयरूपसम्बन्धिभेदेन भिन्नसम्बन्ध-भेदादिति प्राहुः। प्रकृते सामान्यत्वं विशेषत्वं समवायघटितं अन्यथैव निर्वाच्यं अतो नोक्तमित्यन्ये॥

(८७) इहेति। संयोगेनार्थान्तरसाधनवारणाय तन्तुष्विति। नचानुमानिकेह प्रत्ययेऽसतो बाध इति वाच्यम्। पक्षतावच्छेदकधर्मावच्छेदेन साध्यसिद्धेरनुद्देश्य त्वात् किन्तु तत्सामानाधिकरण्यमात्रेणेत्येके। लौकिक प्रत्ययेति विशेषणमित्यन्ये। यथार्थेति। यथार्थलौकिकं विशिष्टप्रत्ययत्वादित्यर्थः।

प्रमाणमाह। इह प्रत्ययहेतुरिति। इह तन्तुषु पट इह पटे शुक्लत्वं इह गवि गोत्वमित्यादयः सम्बन्ध मन्तरेणानुपपद्यमाना स्तं व्यवस्थापयन्तीत्यर्थः।

तन्तुष्विति। इह तन्तुषु पट इत्यादिधी राधाराधेयसम्बन्धनिमित्ता यथार्थेहज्ञानवत्त्वात्। इह कुण्डे बदरमितिवदनुमानात् तत्सिद्धिरित्यर्थः।

नन्विह घटाभाव इह घटे ज्ञानमिति प्रतीत्या व्यभिचारः। न च बाधकाभावे सतीति विशेषणं व्यर्थं विशेष्यत्वात् बाधकाभावस्यैव साधकत्वात्। आधाराधेयभावेन सिद्धसाधनत्वाच्च। सैवं। तत्रापि स्वरूपसम्बन्धस्य सत्त्वात्। न च तेनैवार्थान्तरं लाघवादेकस्यैव सम्बन्धस्य सिद्धेः। स्वरूपसम्बन्धस्य च तत्तत्स्वरूपात्मक

ननु सम्बन्धिभिन्नसम्बन्धनिमित्तकत्वं साध्यं सम्बन्धमात्रनिमित्तकत्वं वा। आद्ये दोषमाह। इह घटे इति। साधकेति। तथाच विशेषणासिद्धिरिति भावः। अन्त्यं दूषयति। आधारेति।

ननु धर्म्मिकल्पनात इति न्यायेन क्लृप्तानां तत्तत्स्वरूपाणां सम्बन्धत्वमात्रकल्पनमर्हं न तु समवायरूपधर्मिकल्पनमित्यरुचेराह। अनुगतेति। समवायस्यानुगतत्वं न तत्तत्स्वरूपस्याननुगतत्वमिति भावः।

ननु समवायत्वावच्छिन्नकारणतानिरूपितं कार्य्यतावच्छेदकं न लौकिकविशिष्टप्रत्ययत्वं। अभावादिविशिष्टबुद्धौ व्यभिचारात्। विशेषणसम्बन्धत्वेनैव स्वरूपसम्बन्धसाधारणेन तदवच्छिन्नहेतुत्वाच्च। न च सम्बन्धत्वमननुगतमिति वाच्यम्। तथासति व्यापकतावच्छेदकाननुगमेन व्याप्यत्वापत्तेः। यदि च विशेषणविशेष्यात्मकत्वादिना तत्र सुवचं तदा तुल्यं। न च गुणादिविशिष्टप्रत्ययत्वं तथा। आदिपदस्यैकस्याभावेनाननुगतत्वात्

अथान्येऽपि शक्तिसंख्यासादृश्यादयः पदार्थाः किं नोद्दिष्टा इत्यत आह । एवमिति । एवमुक्तेन क्रमेण ।

त्वेनानन्तत्वात् । अनुगतकार्य्यस्यानुगतकारणताप्रयोज्यत्वात् सामान्यविशेषान्यनिःसामान्यभावान्योन्याभाववद्भावत्वात् । द्रव्यत्ववदित्यप्याहुः ॥

धर्म्मान् परित्यज्य धर्म्मिणामुद्देशः कृत इति वृत्तानुकीर्त्तनं निरस्याशङ्काह । अथेति । यद्यपि द्रव्यादीनां विभागोऽपि कृतः तथापि नामसंकीर्त्तनरूपतया तस्योद्देश एवान्तर्भाव इति

ननु चायुतसिद्धसम्बन्धि तादृशप्रत्यक्षत्वं तथेति चेत् । न । तस्य कार्य्यतावच्छेदकत्वे मानाभावादन्यथा युतसिद्धसम्बन्धप्रत्यक्षत्वस्यापि तथात्वेऽनुगतकल्पनापत्तेः ।

ननु विशिष्टप्रत्यक्षे विशेषणसम्बन्धस्तद्विशिष्टप्रत्यक्षे तद्विशेषणसम्बन्धो हेतुरिति सामान्यविशेषसामग्रीभ्यामेव तदुत्पत्ते र्युतसिद्धसम्बन्धिप्रत्यक्षत्वस्य कार्य्यतावच्छेदकत्वे मानाभाव । भावे चायुतसिद्धसम्बन्धिनिरूपितसम्बन्धत्वेनैव हेतुत्वमस्त्विति चेत् तुल्यं प्रकृतेऽपि । एतेन गुणादिविशिष्टप्रत्यक्षत्वं प्रत्येकमेव कार्य्यतावच्छेदकं तदनुगमस्यादोषत्वात् तत्र समवायत्वेन हेतुत्वमिति परास्तम् । उक्तन्याये अन्यथोपपत्ते स्तत्कार्य्यतावच्छेदकत्वे मानाभावः । भावे वा तत्र स्वरूपाणां गुणनिरूपितसम्बन्धत्वेन गुणत्वेनैवाहेतुतापत्तेः । न च लाघवादेकव्यक्तेरेव हेतुत्वं । धर्म्मिकल्पनात इति न्यायेन विपरीतगौरवापत्तेरित्यादि प्रत्यक्षप्रकाशे द्रष्टव्यम् ।

अपीत्यस्वरसे । तद्बीजन्तु यद्युक्तविपक्षबाधकानाश्रयणं तदा प्रयोजकत्वमन्यथा समवायान्यतदन्यविशेषणप्रक्षेपादनन्तपदार्थापत्तिः । तदाश्रयणे तु पूर्व्वोक्तानुमानादेव तत्सिद्धिरिति ॥

धर्म्मिणामुना धर्म्मा एव परं नोद्दिष्टाः । शक्त्यादीनामेष्वेवान्तर्भावात् तथा वक्ष्यामः । यद्यपि च सामान्यविशेषसमवायानां लक्षणमप्युक्तं तथापि तस्येहाव्युत्पादनादनुक्तकल्पतयोद्देशः कृत इत्याह ।

यद्यपि च धर्म्मा अपि षड्भ्यो नातिरिच्यन्ते तथापि त एव परस्परसङ्कुलत्वमापन्नाः परस्परविवेकायोपयोत्स्यन्त इति पृथगुच्यन्त इत्यभिप्रायवानाह । षण्णामपीति । अपि रभिव्याप्तौ । अस्तित्वं विधिमुखप्रत्ययत्वम् । प्रतियोग्यनपेक्षनिरूपणमिति यावत् । अभिधे-

भावः । धर्म्मा एवेति । धर्म्मिणां सर्व्वेषामुद्देशादपरं धर्म्मिणो न सन्तीत्यर्थः । अनुक्तेति । तत्र लक्षणे न तात्पर्य्यमित्यर्थः । तथापीति । द्रव्यादीनां स्वातन्त्र्येणैवोद्देशात् न तु मिथो विशेषणविशेष्यभावेनेति अग्रे लक्षणपरत्वेनोच्यत इत्यर्थः । परस्परेति केवलान्वयिधर्म्मेतरपरम् । समुच्चयानामनुपपत्तेराह । अपिरिति ।

नन्वस्तित्व सत्तेति वेद्यत्वं तदभावेऽप्यस्तीत्यत आह । विधिमुखेति । विधिमुखप्रत्ययवेद्यत्वं स्वरूपमभावेऽप्यस्तीत्यत आह । प्रतियोगीति । यद्यपि प्रमेयत्वेनाभावो ज्ञायमानः प्रतियोग्यनपेक्षनिरूपण एवेति अतिव्याप्तिस्तथापि (८८) असमवायित्वे गुण-

(८८) असमवाय इति । अत्र सत्यन्तदयं प्रतियोगिविशेषणं तेन विशिष्टाभावस्य समवायज्ञानादौ च सत्त्वात्रातिव्याप्तिः । अन्यथा तद्व्याप्तिवारणार्थमुपात्तस्य तस्याव्याप्तितादवस्थ्ये व्यर्थत्वापत्तेः ।

यत्व मभिधानयोग्यत्वम्। शब्देन सङ्गतिलक्षणः सम्बन्धः।
ज्ञेयत्वं ज्ञानयोग्यता। ज्ञाप्यज्ञापकभावलक्षणः सम्बन्धः।

---

त्वशून्यत्वे च सति सविकल्पकमात्राविषयत्वं भावत्वं वा विवक्षितम्। अभिधेयत्व मभिधानकर्म्मत्व मभिधानदशायामव्यापकमिति तद्व्याचष्टे। अभिधानेति। योग्यतावच्छेदकमाह। शब्देनेति। एवमुत्तरत्र।

---

नन्वाकाशादावव्याप्ति स्तस्य सविकल्पकमात्रविषयत्वात्। न च प्रत्यक्षत्वं सविकल्पके विशेषणं सत्यन्तवैयर्थ्यापत्ते। अतीन्द्रियाभावेऽतिव्याप्तेश्च। अथ योगि निर्विकल्पकमादाय नोक्तदोषः। न च तत्र मानाभावः। अविशेषणज्ञानत्वेन तत्कल्पनात्। न हि निदिध्यासनाद्यन्यूनानतिरिक्तविषयमेव प्रत्यक्षं येन तस्यैव विशेषणज्ञानत्वं स्यात्। अन्यथा तदुपनीतस्यैव प्रत्यक्षत्वे ज्ञानलक्षणयैवोपपत्तेर्योगजधर्म्मस्य प्रत्यासत्तित्वं न कल्पेरन्। समवायाभावयो र्ज्ञानादेश्च सविकल्पकमात्रविषयत्वमेव तज्ज्ञानस्य सम्बन्धिज्ञानादिजन्यत्वात्। अतो न सत्यन्तवैयर्थ्यम्। न चाभावेऽतिव्याप्तिरिति चेन्न। अस्तु तावतापि समवायादेः कथं न योगि निर्विकल्पकविषयत्वम्। योगजधर्म्मस्य साधारणत्वात्। न ह्यलौकिकेऽपि तज्ज्ञाने सम्बन्धिज्ञानादिजन्यत्वनियमः। प्रमेयत्वेन तन्निरूपणे तदभावादिति। अत्र वदन्ति। अतीन्द्रियभिन्नगुणत्वाभावसमानाधिकरणसविकल्पकमात्रवेद्यपदार्थविभाजकोपाधिशून्यत्वे तात्पर्यम्। विभाजकोपाधिश्च न पदार्थविभाजक एव किन्तु विभाजकमात्र मतो गुणविभाजकज्ञानत्वादिमत्यतिव्याप्तिवारणाय गुणत्वाभावसमानाधिकरणत्वं प्रतियोगिविशेषणम्। समवायत्वादेरतीन्द्रियत्वान्न तत्राव्याप्तिः। सविकल्पकमात्राविषयत्वान्न द्रव्यादावव्याप्तिरिति। वस्तुतोऽसमवायासमवेतमात्रवृत्तिपदार्थविभाजकोपाधितदन्यत्वे तात्पर्य्यम्।

नन्वेतदुभय मभावत्वशून्य एव पर्य्यवसितम्। तथाच तदपेक्षया भावत्वमेव

नन्वेतत् द्वयमप्यभावेऽस्तीति चेत् । अस्तु नेह तद-पेक्षया वैधर्म्यमिह विवक्षितम् । अपितु षडपेक्षया साधर्म्यम् । आश्रितत्व माधेयता स्वाभाविकी । सा च नित्यद्रव्येषु नास्तीत्यत आह । अन्यत्रेति । नित्यद्रव्याणि विहायेदं साधर्म्यमित्यर्थः । ननु समवायेऽप्येत-न्नास्ति । न । समवायस्य समवायान्तराभावेऽपि स्वभा-

---

ननु संयोगवृत्त्या नित्यद्रव्याण्यप्याश्रितानि इति तद्व्यावृत्ति-रयुक्तेत्यत आह । स्वाभाविकीति । समवायेनेत्यर्थः । समवाय-स्येति । समवायेऽपि तेनैवाधेयता । किन्तु स्वाभिन्नेनैव विशेषणतायाः स्वरूपसम्बन्धानतिरेकादिति नाव्याप्तिरित्यर्थः । (८९) संयोगान्य-वृत्त्या समवायभिन्नभावत्वं वा विवक्षितम् ।

---

लघ्विति तदेवाह । भावत्वं वेति । समवायसम्बन्धत्वं समवेतवृत्तिपदार्थविभाजको-पाधिमत्त्वं वेत्यर्थः । न च प्रथमे समवायेऽव्याप्तिः तत्रापि स्वरूपसम्बन्धस्य सम वायात्मकत्वात् । यद्वा द्रव्यादिषट्कान्यतमत्वमित्यर्थः । एवमिति । एतच्चास्मदादि-ज्ञानाविषयतामभिप्रेत्योक्तम् । अन्यथा ईश्वरज्ञानविषयतायाः सर्व्वदा सत्त्वात् अज्ञायमानंताद्दशानुपपत्तेरिति ।

(८९) संयोगान्येति । ननु समवायिभिन्नेति व्यर्थम । समवायेऽव्याप्तिश्चेति चेत् । अत्र समवायपदं प्रत्यासत्तिपरम् । अकारप्रश्लेषेण बहुब्रीहिणा अप्रत्यासन्न-भिन्नेत्यर्थः । परमाण्वादावतिव्याप्तिवारणायाद्यपदम । अभावस्य विशेषणतया प्रत्यासन्नत्वादतिव्याप्तिवारणाय भावपदमित्येके । तत् चिन्त्यम् । नञ् वैयर्थ्यात् । संयोगान्यवृत्त्या प्रत्यासन्नभावत्वमित्येवादोषात् । अपि चेदानी माकाश इति प्रतीतेः काले संयोगान्यवृत्त्याकाशस्य वर्त्तमानतयातिव्याप्तिः । न च वृत्तिपदं साधारण-

वत एव आधारसन्निकृष्टत्वात् । तथाच वक्ष्यामः । चकारान्मूर्त्तत्वं विहाय निष्क्रियत्वम् । अथ समवायात् वैधर्म्म्य मितरेषां साधर्म्म्यमाह । द्रव्यादीनामिति । समवायित्वं समवायलक्षणः सम्बन्धः । अनेकत्वं

---

चकारादिति । समुच्चेयान्तराभावात् अनुक्तसमुच्चयार्थश्चकार इत्यर्थः । निष्क्रियत्वमिति । न च निष्क्रियविनष्टे मूर्त्ते क्रियात्यन्ताभाववत्त्वमित्यतिव्यापकम् । कर्म्मवद्वृत्तिद्रव्यत्वव्याप्यजातिशून्यभावत्वस्येन्द्रियवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिशून्यभावत्वस्य वा विवक्षितत्वात् ।

समवायित्वमिति । यद्यपि समवायित्वं यदि समवेतत्वं तदानित्यद्रव्याव्याप्तिः । समवायाश्रयत्वञ्च सामान्याद्यव्यापकं तयोः

---

र्वृत्तिपरम् । प्रलये परमाणुरिति प्रतीतेरभावरूपे तत्र तादृशवृत्त्या वर्त्तमानतयातिव्याप्तेरिति वदन्ति । अन्ये तु लक्षणद्वये तात्पर्य्यम् । संयोगान्यवृत्त्या विशिष्टभावत्वमित्येकम् । अपरश्चाकारप्रश्लेषेणासमवायः समवायावृत्तिक स्तद्भिन्नमित्याहु । तन्न । प्रथमे उक्तरीत्याकाशाद्यतिव्याप्तेः । द्वितीये नञ्द्वयं व्यर्थम् । तद्विहाय लक्षणे पूर्व्वभेद इति । इतरे तु लक्षणान्तरमिदं किन्तु समवायेनाधेयता न विवक्षिता येन समवायाव्याप्तिशङ्का स्यात् । किन्तु संयोगान्यवृत्त्या संयोगान्यवृत्तित्वेन समवाय स्तद्भिन्नो भावस्य विवक्षितः । स च समवायः स्वरूपसम्बन्धोऽपीति संयोगान्यभाववृत्त्याश्रितत्वं विवक्षितम् । अतो नाव्याप्त्यतिव्याप्ती इति । तदपि चिन्त्यम् । उक्तरीत्याकाशाद्यतिव्याप्तेः । वयन्तु ब्रूमः । संयोगान्यवृत्त्या समवायेन लक्षितः समवायोत्यर्थः । अकारप्रश्लेषेण बहुव्रीहिणा असमवायोऽसमवेत इत्यर्थः । तथाच समवायित्वे सत्यसमवेतं यन्नित्यद्रव्यं तद्भिन्नभावत्वमिति पर्य्यवसितोऽर्थ इति ।

स्वरूपभेदः। चकारात् समवायादन्यत्वम्। द्रव्यत्वं विहाय पञ्चानामाह। गुणादीनामिति। निर्गुणत्वं गुणाभावविशिष्टत्वं निष्क्रियत्वं क्रियाया असमवायः।

---

समवेतधर्म्माभावात्। तथापि समवेतवृत्तिपदार्थविभाजकोपाधिमत्त्वं विवक्षितम्। स्वरूपेति। यद्यपि स्वरूपभेदः प्रामाणिकत्वमितरनिष्ठान्योन्याभावप्रतियोगित्वं वा इयमपि समवायगतं तथापि स्वाश्रयान्योन्याभावसमानाधिकरणपदार्थविभाजकोपाधिमत्त्वे तात्पर्य्यम्।

गुणाभावो गुणात्यन्ताभावः। क्रिया स्पन्दः तदत्यन्ताभावश्च यद्यपि निष्क्रियनष्टे द्रव्ये दिगादौ चास्ति तथापि कर्म्मवद्वृत्तिसत्ताव्याप्यजातिशून्यभावत्वं विवक्षितम्। समवायेति। सामान्यादौ

---

कर्म्मवद्वृत्तीति दोषतादवस्थ्यमित्यत उक्तं द्रव्यत्वव्याप्येति। व्याप्तिभेदगर्भेति न द्रव्यत्वमादाय दोषतादवस्थ्यम्। जातिपदञ्च गुणवत्त्वमादायातिव्याप्तिनिरासार्थम्। इन्द्रियेति। साक्षात्पदगर्भव्याप्तिसूचनाय। अत्रापि भावत्वं पूरणीयम्। अन्ये तु जातिशून्यत्वं जात्यत्यन्ताभाववत्त्वम्। अभावे वा भावानभ्युपगमाच्च तदपेक्षेत्याहुः।

समवेतवृत्तीति। समवेतत्वं स्वातिरिक्तसमवाये वृत्तिमत्त्वम् अतो न समवायातिव्याप्तिः। पदार्थेति। भावेत्यर्थः। अन्यथा पदार्थो द्विविध इत्यर्थविभाजकोपाधिभूतभावत्वसत्त्वादतिव्याप्तिः स्यादित्यर्थः। पदार्थविभाजकेति। भावविभाजकेत्यर्थ। गुणात्यन्ताभाववत्त्वमित्यत्रात्यन्तपदमन्योन्याभावव्यावर्त्तकम्। सामान्याभावस्यावश्यवाच्यत्वात् प्रागभावादिनिवन्धनातिव्याप्तिशङ्कानवकाश इति वदन्ति।

ननु निष्क्रियत्वमप्रसिद्धं विश्वस्य धात्वर्थरूपक्रियासम्बन्धित्वादित्यत आह। स्पन्द इति। कर्म्मवद्वृत्तीति। साक्षात्वादं काचित्कम्। भेदेन व्याप्यत्वबोधनाय

द्रव्यादीनां त्रयाणामिति सत्तासम्बन्धः समवाय-लक्षणः। सामान्यविशेषा द्रव्यत्वादय स्तद्वत्त्वम्। निरुपपदेनार्थशब्देन द्रव्यादय स्त्रय एवाभिधीयन्ते नापरे। एष एव स्वसमयो वैशेषिकाणां स्वशास्त्रे व्यवहारलाघवाय।

यथा च धारणाध्यानसमाधि त्रयमेकत्र संयम इति योगानुशासने। द्रव्यादित्रयन्तु प्रत्येकसमुदायाभ्या-

---

चैकार्थसमवाय इति तद्वावृत्तिः। तद्वत्त्वञ्च तत्समवायित्व-मित्यर्थः। यद्यपि सामान्यवत्त्वमेवेतरभेदगमकं तथापि सामान्य-रूपो विशेष इति विग्रहेण जातिमत्त्वमात्र मवोक्तम्।

प्रत्येकेति। सत्तावत्त्वेन प्रवृत्तिनिमित्तेनार्थपद(९०)सङ्के-तात् तात्पर्य्यात् क्वचित् त्रितयं तेनोच्यते। क्वचित् प्रत्येकम्। संयमपदस्य तु मिलित एव सङ्केतात् न प्रत्येकवाचकत्वमित्यर्थः।

---

हत्युक्तम्। गुणाद्यव्याप्तिवारणाय जातिमत्त्वम्। धर्म्मसत्त्वात् गुणाद्यसंग्रह इत्यत आह। जातीति। जातिमत्त्वमात्रमिति। जातिपदार्थनिर्वचने यावदेव व्याप्यं तत्रैव तात्पर्य्यम।

(९०) अर्थपदेति। महर्षिकृतार्थसङ्केतादित्यर्थः। एतच्चेच्छामात्रसङ्केतपक्षे। यदि चेश्वरेच्छासङ्केतस्तदा येन पदेनाधुनिकसङ्केतस्तात्पर्य्यवशेन मिलितप्रत्येक-तत्तत्पदस्मरणक्रमेण तत्तदर्थोपस्थितिवैचित्र्यं सङ्केतक्रमेण चेत्याहुः। पदार्थेति भावेत्यर्थः। प्रसक्तस्य कलञ्जभक्षणादेः। नापि जातेरिति। यद्यपि जातेर्निवृत्ति-पक्षेऽपि निवृत्तेरेवादृष्टजनकत्वं स्यान्न जातेरन्यथासिद्धत्वात्। न च निवृत्ति-

मिति विशेषः। तदिदमुक्तं स्वसमयेति। धर्म्माधर्म्मकर्त्तृत्वञ्चेति साधर्म्म्यद्वयसूचनाय चकारः। धर्म्मकर्त्तृत्वमधर्म्मं विहाय अधर्म्मकर्त्तृत्वञ्च धर्म्मं विहाय।

---

ननु न सर्व्वगुणसाधर्म्म्यमेतत् धर्म्मस्याधर्म्माहेतुत्वादित्यत आह। धर्म्मकर्त्तृत्वमिति। कर्त्तृपदं निमित्तपरम्। न च धर्म्ममधर्म्मं गुणान्तरं वा यन्न जनयति तदव्यापकत्वम् अधर्म्मान्यत्वे सति धर्म्मजनकत्ववृत्तिपदार्थविभाजकोपाधिमत्त्वमिति विवक्षितत्वात्। धर्म्मान्यत्वे सत्यधर्म्मजनकवृत्तिपदार्थविभाजकोपाधिमत्त्वमिति विवक्षितत्वात्। द्रव्यमदृष्टसाधनं भूमि र्दीयमाना-द्रियमाणा च। गुणो गङ्गाजलचाण्डालसंयोगः। कर्म्म तीर्थयात्रा म्लेच्छदेशगमनञ्च।

ननु जातिविशिष्टस्यैव द्रव्यादे रदृष्टजनकत्वे विशेषणस्यापि जातेस्तज्जनकत्वमित्याह। नन्विति। अदृष्टजनकत्वं श्रुत्येकगम्यम्। सा चासिद्धस्य क्रियमाणस्येष्टसाधनत्वं सिद्धस्य तु व्यापारभागित्वेन तथात्वं। क्वचित् प्रसक्तस्य निवृत्तिः तथात्वेन बोधयति। जातिश्च न स्वरूपतः कार्य्या नित्यत्वात्। नापि व्यापारभागितया

---

व्यापारः। स्वाभावस्य स्वव्यापारत्वायोगात्। तथापि निवृत्तेरप्यदृष्टजनकत्वं न सम्भवतीति प्रसङ्गादुक्तम्। न त्वस्य प्रकृतोपयोग इति। विहितेतीति। यद्यप्यरुणयैकहायन्येत्यादिस्थले रूपस्यासिद्धत्वेनाव्यापारत्वात् गुणस्य जन्यधर्म्मानाश्रयत्वेनाव्यापारित्वाच्चैव हेतुता स्यात्। तथापि साक्षात्परम्परासाधारणव्यापारभागित्वं बोध्यम्।

ननु जात्यादीनां कथं नैतत् । उच्यते । विहित निषिद्धभावनाविष्टानां हि तद्धेतुत्वं न स्वरूपतः ।

न च भावनावेशो जात्यादिषु स्वरूपतो द्रव्यादिक मनन्तर्भाव्य सम्भवति नित्यत्वेनाव्यापारत्वात् । अनित्यधर्म्मायोगेनाव्यापारितत्वात् ।

न च ज्ञानमात्रेण तेषां तदुपयोगोऽभियोगवद्- निषेधात् । तस्मात् स्वाश्रयावच्छेदकमात्रेणैवोपयुज्यते

---

जन्यधर्म्मानाश्रयत्वात् । नापि जाते र्नित्यतया निवृत्तिरिति नादृष्ट- जनकत्वमित्याह । विहितेति ।

ननु जाते र्यद्यपि भावनाविषयत्वात् भाव्यत्वेन नादृष्टं प्रत्युपयोगः । तथापि भावनाविषयत्वावच्छेदकत्वेनोपयोगः स्यादित्यत आह । न चेति ।

अभियोगो विधिः । अदृष्टजनकत्वस्य श्रुत्येकगम्यत्वात् यथाश्रुति र्जाते र्व्विधिं न प्रतिपादयति तथा निषेधमपीत्यर्थः । (९१) ज्ञानावच्छेदकत्वेन विषयस्य कारणत्वं न सिद्ध्यति तस्य ज्ञानमात्र एवोपक्षयात् । विशेष्यसमवाययोश्चादृष्टजनकत्वे मानाभाव

---

(९१) ज्ञानावच्छेदकत्वेनेति । इष्टसाधनताज्ञानविषयतावच्छेदकत्वेनेत्यर्थः । विशेषेति । यद्यपि ज्ञानजन्यादिसामानाधिकरण्यस्यादृष्टजनकत्व मन्यथा अज्ञानकृते प्रायश्चित्तभेदानुपपत्तिरिति समवायस्याप्यदृष्टजनकता तथाप्यदृष्टजनकतावच्छेदकावच्छिन्नत्वं विवक्षितम् । न च तदवच्छिन्नः समवाय स्तावन्मात्रविश्रान्ताव-

इति। कार्य्यत्व मभूत्वाभावित्व मनित्यत्वं भूत्वा अभा-
वित्वं विवक्षितम्। अन्यथा कारणवतामेवेति निय-
मो न स्यात्। तदनपेक्षान् विहायेत्येवकारार्थः। कार-
णत्वञ्च ज्ञातधर्म्मेतरकार्य्यापेक्षया। अन्यथा न पारि-

---

इत्यर्थः। नियोगवदिति पाठे नियोगोऽपि विधिरित्यर्थः।
कार्य्यत्वं यदि प्रागभावप्रतियोगित्वमनित्यत्वञ्च ध्वंसप्रतियोगित्वं
विवक्ष्येत तदा ध्वंसप्रागभावातिव्याप्तिरिति व्याचष्टे। अभूत्वेति।
उभयत्रापि सत्तावत्त्वेन विशेषणात् नोक्तदोष इत्यर्थः। अन्यथेति।
यदि तेन न विशेष्येत यदि वा भवनमात्रं विवक्ष्येत तदा प्राग-
भावे नित्ये च तत्त्वात् कारणवतामेवेति लक्ष्यनिर्द्देशो नोपपद्ये-
तेत्यर्थः।

ननु ज्ञानादिकं प्रति सामान्यादीनामपि कारणत्वमस्त्येवेत्यत

---

च्छेदकानङ्गीकारात् किन्तु विशिष्टत्वेनावच्छेदकमित्याहुः। तदा ध्वंसेति।
यद्यपि ध्वंसः कारणं वा नवेति तस्य संग्राह्यत्वात् नातिव्याप्तिस्तथापि लयाणा-
मित्यनुवृत्त्या लयस्यैव लक्ष्यत्वमिति भावः। सत्तावत्त्वेनेति। यद्येतद्विशेषणपूरणे
यथाश्रुतमपि सम्यगेवेत्यभूत्वाभावित्वमित्यादिव्याख्यानमयुक्तम्। तदपूरणे तत्का-
व्याप्तितादवस्थ्यमेव तथापि भाव सत्त्वेत्यभूत्वा प्रागभावप्रतियोगीभूय भावित्वं सत्ता
योगित्वं भूत्वा सत्ताविशिष्टीभूयाभावित्वं विनाशित्वमित्यर्थः।

तेनेति। सत्तावत्त्वेनेत्यर्थ। यदि चेति। सत्तावत्त्वमात्रं यदि विवक्ष्येतेत्यर्थः।
तदेति। एतच्च सत्तावत्त्वे सति नाशित्वमित्यत्र प्रागभावप्रतियोगित्वे सति सत्ता-
वत्त्वमित्यत्रान्यतरमात्रविवक्षायां ध्वंसे नित्ये च व्योमादौ गतत्वादित्यादि बोध्यम्।
कारणवतामिति। लयाणामिति शेषः।

माण्डल्यादिव्यवच्छेदः । त्र्यग्रहणाच्च नोपपद्यते । पारिमाण्डल्यं परमाणुपरिमाणम् । आदिग्रहणात् परममहत्त्वं, अन्त्यावयविरूपरसगन्धस्पर्शपरिमाणानि,

---

आह । ज्ञातृधर्म्मेति । अन्यथेति । यद्यपि योगिप्रत्यक्षस्य विषयाजन्यतया पारिमाण्डल्यमपि न (६२) ज्ञातृधर्म्मजनकं तथाप्यतद्गुणसंविज्ञानबहुव्रीहिणादिपदग्राह्याणामस्मदादिप्रत्यक्षजनकत्वात् ते व्यवच्छेद्या द्रष्टव्याः । योगिप्रत्यक्षमपि विषयजन्यमिति केचित् । त्र्यग्रहणच्चेति । अत्र त्रयाणाम् इत्यनुवृत्तेः त्रयस्यैवैतत्साधर्म्म्यं तच्च सामान्यादेरपि ज्ञानकारणत्वात् कारणत्वमात्रविवक्षायां नोपपद्यते । न चाग्रे सामान्यादेरकारणत्वमेतद्वैधर्म्म्यं स्यादित्यर्थः ।

आदिग्रहणादिति । नन्वयं विरूपादीनामपि स्वध्वंसकारणत्वादभिघातं प्रति स्पर्शस्य कारणत्वात् तथा परमाणुद्वित्वस्य द्व्यणुकपरिमाणजनकत्वात् न तेषां व्यवच्छेद्यत्वम् । संस्कारस्य चरमत्वं विशेषणमयुक्तम् । भावनात्मकस्य तस्य सर्व्वस्यैव ज्ञातृधर्म्मेतरकार्य्याजनकत्वात् । अत्राहुः । ज्ञातृधर्म्मेतर-

---

सामान्यादीनामिति । यद्यपि विशेषसमवाययोरतीन्द्रियतया न ज्ञानजनकत्वं तथापि मूलोक्तादिपदग्राह्या ऐन्द्रियका अनेन संगृहीता इत्येके । सामान्यमात्र एव तात्पर्य्यमित्यन्ये । ज्ञायमानकारणतापक्षे लिङ्गविषतया तयोरपि तज्जनकत्वमित्यप्याहुः ।

(६२) न ज्ञातृधर्म्मेति । ज्ञायमानकारणत्वमतमभ्युपेत्येदम् । आदिपदग्राह्याणामिति । ऐन्द्रियककारणमिति शेषः । केचिदित्यस्वरसोद्भावनम् । तद्बीजन्तु अतीतादिगोचरप्रत्यक्षे व्यभिचाराच्च तस्य विषयजन्यत्वम् । न च विद्य-

द्वित्वद्विपृथक्त्वपरत्वापरत्वानि, विनश्यदवस्थद्रव्यनिष्ठ-संयोगविभागकर्म्माणि, अन्त्यः शब्दः, चरमसंस्कारो ज्ञानञ्च गृह्यते।

द्रव्याश्रितत्वञ्च द्रव्यसमवायिकारणकता। एवं द्रव्यत्वादिसामान्यविशेषपदार्थयोरप्रसङ्गः। तथाप्य-

---

कार्य्यापेक्षयेत्यत्र कार्य्यपदेन प्रागभावावच्छिन्नसत्तायोगित्वमत्र विवक्षितम्। स्पर्शपदञ्च स्पर्शसमानाधिकरणं परिमाणमिति मध्यमपदलोपिसमासेन स्वसहवृत्तिपरिमाणोपलक्षणं द्वित्वञ्चा-न्त्यावयविवृत्तिपरिमाणाजनकं विवक्षितम्। चरमपदन्तु भावना-परिचर्य्यार्थमेवोपात्तम्। ज्ञात्मगुणेषु तस्याश्चरमपाठात्। ज्ञान-मपि मोक्षाव्यवहितप्राक्कालवृत्त्यत्रोपसंख्येयम्। यद्यप्यन्त्यावयवि-रूपादीनामपि असमवायिकारणजातीयत्वमस्त्येव तथापि व्यक्त्य-भिप्रायेणाजनकत्वव्युत्पादनम्।

द्रव्याश्रितत्वं द्रव्यसमवेतत्वं सामान्ये विशेषे च गतमित्यन्यथा

---

मार्गविषयकप्रत्यक्षविशेषे तद्धेतुत्वम्। अतीतागोचरप्रत्यक्षवद् योगजधर्म्मादिनैव तदुपपत्तौ तत्र मानाभावादिति। द्वित्वञ्चेति। अत्रान्त्यावयविवृत्तीति पदं प्रामा-दिकमित्यन्ये। अन्त्यपदं प्रामादिकम्। अवयविपरिमाणाजनकमित्यर्थः। इत्यन्ये। एतदुपलक्षणम्। बहुत्वाद्यपि परिमाणाजनकमन्त्यावयव्येकत्वैक-पृथक्त्वादिकमपि बोध्यम्। ज्ञानमपीति। अन्यज्ञानस्य घटादिजनकत्वादिति भावः। मोक्षेत्युपलक्षणम्। निर्विकल्पकेत्यपि द्रष्टव्यम्। व्यक्त्यभिप्रायेणेति। तथाच कारणत्वं फलोपहितत्वम्। एवं यद्यत् फलानुपहितं तत्तदा पदग्राह्यमेवेति भावः।

व्यापकमत आह। अन्यत्रेति। नित्यद्रव्येत्युपलक्षणम्। नित्यगुणेष्वपि द्रष्टव्यम्। नित्यद्रव्याणि नित्यगुणांश्च विहायेदं द्वयं साधर्म्यमित्यर्थः। आद्यसंयोगविभागौ नित्यवर्गञ्च विहाय गुणासमवायिकारणता चेति चार्थः। सामान्यादीनामिति। स्वात्मसत्त्वं सत्ताविरहः। बुद्धिलक्षणत्वं बुद्धिमात्रममीषां लक्षणं

व्याचष्टे। द्रव्येति। समवायिकारणत्वमित्यर्थः। द्रव्येति स्वरूपनिर्व्वचनमितरसमवायि(८३)व्युदासार्थं वा। आद्याविति कर्म्मजौ चकारादत्र कर्म्मजन्याद्यवेगोऽपि द्रष्टव्यः।

बुद्धिमात्रमिति। ननु यदि प्रमाणं प्रमा तदा द्रव्याद्यतिव्याप्तिः। तेषामपि बुद्धेः प्रमात्वात्। अथ प्रमाकरणं तन्न चक्षुरादेरपि तत्त्वात्। अथानुवृत्त्यादिबुद्धिरितयान्यतमपरं बुद्धिपदं तथापि संयोगेऽतिव्याप्तिः। एतेन प्रत्यक्षमध्येऽवधारणमिदं प्रत्यक्षमेवात्रेदृक् प्रमाणम् नान्यदृगमिति निरस्तम्। विशेषसमवाययोस्तदभावात्। बुद्धिपदस्य निःसामान्यत्वप्रकारकभावविषयकप्रमिति-

(८३) इतरसमवायीति। द्रव्यस्यैव समवायिकारणत्वमिति शोधनार्थमेवेत्यर्थः। ननु सकलाद्यत्वमसम्भवीति यत्किञ्चिदाद्यत्वं संयोगजसंयोगादेरपीति व्याचष्टे। कर्म्मजाविति। कर्म्मजन्येति। एतच्चाद्यत्वविवरणं अन्यथाद्यपदवैयर्थ्यापत्तेरिति ध्येयम्। चक्षुरादेरिति। यद्यपि विशेषसमवायौ न प्रत्यक्षौ तथाप्यलौकिकप्रत्यक्षे तथात्वमस्त्येवेति भावः। ईदृगिति। अनुवृत्त्यादिबुद्धिरूपमित्यर्थः। प्रमाणमिति। प्रमेत्यर्थः। तदभावादिति। अतीन्द्रियजातावपि बोध्यम्। इदन्तु लौकिकप्रत्यक्षाभिप्रायेणोक्तम्। निःसामान्येति। तदंशे तादृश-

प्रमाणम्। ननु द्रव्यादिवत्प्रमाणान्तरमस्तीत्यर्थः। अनुवृत्तबुद्धि व्यावृत्तबुद्धिरिहेति बुद्धिरित्येव सामान्यादित्रये प्रमाणमिति। अकार्य्यत्वमनादित्वम्। कथमिति चेत्। अन्यथा स्वरूपव्याघातात्। सामान्यस्य हि

---

परतया तद्विषयस्यानुगतबुद्ध्याद्यन्यतमबुद्धिषु यदसाधारणं तत्त्वस्य वा विवक्षितत्वात्। अकार्य्यपदे बहुव्रीहिनिरासायाह। अनादित्वमिति। तच्च यद्यप्यकारणत्वं प्रागभावाप्रतियोगित्वं वा द्वयमपि नित्यद्रव्यादावतिव्याप्तं तथाप्यादिमदवृत्तिपदार्थविभाजकोपाधिमत्त्वे तात्पर्य्यम्।

स्वरूपव्याघातमेवाह। सामान्यस्य हीति। भावकार्य्यस्य समवायिकारणजन्यत्वनियमादित्यर्थः। तदुत्पत्तौति। समवायिकारणनाशे समवेतकार्य्यनाशनियमादित्यर्थः। सामान्यरूपतामिति। प्रागुत्पन्नेदानीमुत्पन्नघटत्वयोः प्रागुत्पन्नत्वेदानीमुत्पन्नत्व-

---

प्रमितिविषयत्वं बोध्यम्। अतो न समूहालम्बनमादायातिव्याप्तिः। न च निःसामान्यभावमित्येवास्त्विति वाच्यम्। यथोक्तविशेषणविशेष्यभावे दोषाभावात्। यदसाधारणमिति। नन्विह कुण्डे बदरमिति बुद्धिमादाय संयोगे इह घटाभाव इति बुद्धिमादायाभावेऽतिव्याप्तिरिति चेन्न। अयुतसिद्धसम्बन्धिविषयकत्वेन तद्बुद्धेर्विशेषणात्। यद्यपि विशेषणस्यातीन्द्रियनिष्ठतया तन्निरुव्यावृत्तिबुद्धौ न तस्य हेतुत्वं तथापि निमित्तपदं प्रयोजकपरमित्येके। योगिज्ञानाभिप्रायेणैतदुक्तमित्यन्ये। प्रागुत्पन्नेत्युपलक्षणं व्यक्तिभेदादपि न तथात्वमित्यपि बोध्यम्।

आवश्यकत्वादिति। तथाच समवायिकारणनाशात् तन्नाशे तदनन्तरं तद्व्यवहारो न स्यात्। पुनस्तदुत्पादे पूर्व्व एव दोष इति भावः। विशिष्टानीति मूलं विशेषवन्तीत्यर्थः।

कार्य्यत्वे व्यक्तिरिव समानाधिकरणा स्यात्। तथाच तदुत्पत्तिविनाशयोः जात्युत्पत्तिविनाशे प्रतिव्यक्तिभिन्नं सत् सामान्यरूपतां जह्यात्।

अभेदे तु व्यक्तेः पूर्व्वमपि सत्त्वात्। न तत्कारणकं स्यात्। एवं पूर्व्वपूर्व्वतरपूर्व्वतमादिव्यक्तिभ्योऽपि प्राक् सत्त्वात्। अनादित्वं सामान्यस्यान्यथा स्वरूपव्याघात इति। नित्यद्रव्याणाञ्च कदाचिद्विशेषाभावे व्यावृत्तिरपि निवर्त्तताम्। तथाच द्रव्यसङ्करः स्यात्। न च स्वभावसाङ्कर्य्ये पुनरसाङ्कर्य्यं स्वभावपरावृत्तिप्रसङ्गात्। ततः सर्व्वदैवासङ्कीर्णत्वात् सर्व्वदैव

---

लक्षणविरुद्धधर्म्माध्यासाद् भेदेऽनुगतत्वाभावात् सामान्यरूपमेव तन्न स्यादित्यर्थः। न च सर्गाद्यकालीनघटादिव्यक्तिजन्यमेव घटत्वादिकमिदानीं व्यक्त्यन्तरेणापि व्यज्यते पूर्व्वकल्पान्तरेऽपि तन्निमित्तघटादिव्यवहारोऽसिद्ध एवेति वाच्यम्। सर्गाद्यकालीनघटादिनाशे तन्नाशस्याप्यावश्यकत्वात्। अन्यसमवेतकार्य्यस्यान्यासमवेतत्वात्।

नित्यविशेषाणामनादित्वमुपपादयति। नित्यद्रव्याणामिति। व्यावृत्तिरपीति। व्यावृत्तेरन्योन्याभावस्य वैधर्म्म्यानियतत्वेन तदभावे सापि न स्यादित्यर्थः। सङ्करस्तादात्म्यम्। न चेति। प्रथमं तादात्म्ये पश्चाद्विशेषोपपत्तौ भेदः स्यादिति न सम्भवति।

विशिष्टानीत्यनादय एव विशेषाः। समवायोऽपि निःसमवायः कथं समवायिकारणं विना भवेत्। भवन् वा कथं न कार्य्यान्तरमर्य्यादामतिक्रामेत्। कथञ्चोत्पन्नो विनश्येत्। तथाच कथमुत्पद्येतापि। भावस्याविनाशिनोऽनुत्पत्तिः। समवायान्तराभ्युपगमे च कथमनवस्थां नापादयेत्। कथं वा पश्चादुत्पद्य-

---

अन्योन्याभावस्य सदातनत्वादित्यर्थः। समवायोऽपीति। (८४) समवायो यदि भावत्वे सति कार्य्यः स्यात् समवायिकारणं विना न स्यादिति भावः। वेति। भावकार्य्यान्तरस्य मर्य्यादामतिक्रामेदित्यर्थः।

कथञ्चेति। कार्य्यनाशस्य समवाय्यसमवायिनाशजन्यत्वनियमादित्यर्थः। न च द्वित्ववन्निमित्तनाशात् तन्नाशः स्यात्। रूपादिसमवायस्य दण्डादिनिमित्तकत्वेन तन्नाशेऽप्यनाशात्। अदृष्टनाशस्य चासिद्धेः। नापि सम्बन्धिनाशकनाश्यः। अग्निसंयोगान्नीलरूपं नष्टमिति प्रतीतेः। समवायो नष्ट इत्यननुभवात्। तर्हि समवेत एवास्तु समवाय इत्यत आह। समवायान्तरेति। पश्चादिति। सम्बन्धिभ्यामिति शेषः। किञ्च सम्बन्धिनो

---

(८४) ध्वंसे व्यभिचारादन्यथा व्याचष्टे। समवायो यदीति। ननु समवायो भावत्वे सति कार्य्यः समवायिकारणं विना जायमानत्वादित्यमस्य पर्य्यवसानं वाच्यम्। तथाच स्वनये स्वरूपासिद्धिरिति चेन्न। परमतमवलम्ब्योक्तत्वादि-

मानः संयोगलक्षणप्राप्तेः स्वभावं न जह्यात् । अप्राप्ति-पूर्विका प्राप्तिरिति हि तत् नित्यसम्बन्धिषु तथानभ्यु-पगमाच्चेति ।

तस्मात्सुष्ठूक्तं सामान्यादीनां त्रयाणामकार्य्यत्व-

---

नित्यत्वे समवायस्यानादित्वस्थितावनित्यसम्बन्धिनोऽपि तस्य नित्यत्वमनुमेयमित्याह । नित्येति । न च सम्बन्धत्वावच्छिन्न-साध्यव्यापकं नित्यसम्बन्धित्वमुपाधिः । लाघवादेकस्यैव समवायस्य सिद्धौ साधनव्यापकत्वात् ।

अपरेति । अपरेत्युपलक्षणम् । सामान्यविरहस्यैवेतरवैधर्म्यं-

---

त्येवं । वस्तुतः समवायिजन्यः स्यादित्यापाद्य मेवञ्च विपर्य्यये समवायिकारणाजन्य-त्वस्य नासिद्धमिति बोध्यम् ।

भावेति । यद्यपि गुणादिनिष्ठशक्तेः समवायिकारणं विनाप्युपपत्तिः परेण स्वीक्रियत एव तथापि स्वमतावष्टम्भेनेदम् ।

ननु जातिमत्कार्य्यस्य समवायिकारणजन्यत्वनियमो नतु भावकार्य्यस्य । समवायस्य च समवायान्तरस्वीकारान्न जातिरिति । तद्विनापि तदुत्पत्तावविरोध इति चेन्न । धर्म्मिग्राहकमानेन लाघवादेकसमवायसिद्धौ तन्नित्यत्वसिद्धेरिति ।

द्वित्ववदिति । तथाचोक्तनियमे व्यभिचार इति भावः । असिद्धेः कार्य्य-नाशकत्वासिद्धेः गौरवादन्यथा सर्व्वत्रैव तन्नाशादेव तन्नाशः स्यात् आकाशादेरप्येव मनित्यत्वं स्यादिति भावः । समवाय इति । यद्यपि वैशेषिकनये समवायस्या-तीन्द्रियतया न ध्वंसो न प्रत्यक्षस्तथापि न्यायनयेनेदम् । अनुमितिरूपप्रतीत्यभि-प्रायेणोक्तमित्यन्ये । नित्यत्वं साध्यं व्योमादौ न च तत्रोपाधिरिति साध्याव्याप्ते-राह । सम्बन्धत्वावच्छिन्नेति । साधनेति । समवायत्वस्वरूपसाधनव्यापकत्वा-दित्यर्थः । सामान्यविरहस्येति समवेतधर्म्मविरहमात्रे तात्पर्य्यमित्याहुः ।

मिति। अकारणत्वमनात्मधर्म्मापेक्षया असामान्यविशेषवत्त्वं अपरसामान्यविरहः। स च सामान्येष्वनवस्थानात् विशेषेष्वपि सामान्यसद्भावे गुणत्वापत्तौ पुनः सामान्यगुणेषु विशेषान्तरापेक्षायामनवस्थानादेव। समवायस्यैकत्वाच्च समवायान्तरापेक्षयानवस्थानाच्चेति। नित्यत्वमनन्तत्वम्। तच्चाकार्य्यत्वात्। अनित्यत्वं हि कार्य्यतया व्याप्तं सा च सामान्यादिभ्यो व्यावर्त्तमाना स्वव्याप्य मनित्यत्व मुपादाय निवर्त्तते। अकार्य्यमपि हि

---

रूपत्वात्। अनवस्थानादिति। (९५) सामान्यं यदि सामान्यवत् स्यात् द्रव्यादित्रयान्यतमत् स्यादिति। तद्भिन्नसामान्याव्यवस्थैवानवस्थेत्यर्थः। ततो नाप्रसिद्धिः। एवं विशेषादावपि। गुणत्वेति। विशेषो यदि कर्म्मान्यः कार्य्यानाश्रयश्च सन् सामान्यवान् स्याद् गुणः स्यादित्यर्थः। अनन्तत्वं ध्वंसाप्रतियोगित्वम्। न चैतद्घटोमादावतिव्याप्तम्। अनित्यावृत्तिपदार्थविभाजकोपाधिमत्त्वस्य विवक्षितत्वात्। तच्चेति। प्रागभावाप्रतियोगिनो भावस्यानन्तत्वादित्यर्थः। तदभाव इति। निरवयवपरमाण्वादिनाशे निराश्रयकार्य्यं नोत्पद्येत। सामान्याद्यभावे च तत्तज्जातीय-

---

(९५) नन्वनवस्थापादनमुत्तरोत्तरधर्म्मापादनमेव तच्चाप्रसिद्धेर्न सम्भवतीत्यत आह। सामान्यं यदीति। द्रव्ये कर्म्मणि च व्यभिचारादाह। विशेषो यदीति। एवञ्च समानजातीयत्वेऽत्यन्तव्यावृत्तबुद्धेरेव न स्वाश्रयव्यावृत्तत्वगन्तरेण तस्यैव

यद्याकाशपरमाण्वादि सामान्यादि वा निवृत्तं स्यात्। पुनस्तन्न स्यात्कारणाभावात्। ततस्तदभावे निराश्रयं किञ्चिदपि न स्यादिति। अर्थशब्दानभिधेयत्वं स्वसमयार्थशब्दानभिधेयत्वम्। चकारात्कारणानपेक्षत्वमिति। उपलक्षणञ्चैतत्। अन्यदप्यूह्यम्।

तद्यथा—अनित्यधर्म्मत्वमविशेषाणामेव। नित्यत्वमकर्म्मणामेव। अयोगिप्रत्यक्षत्वं द्रव्यादीनां चतुर्णा-

---

कार्य्यानुत्पत्तिः। पुनस्तदुत्पत्तौ कारणाभावादित्यर्थः। विनाशहेतुरपीति भावः। कारणेति। अत्रापि कारणवन्निष्ठात्यन्ताभावप्रतियोगिविभक्तोपाधिमत्त्वमभिप्रेतम्।

अनित्यधर्म्मत्वमिति। यद्यप्येतदवृत्तिव्योमादौ नित्यवृत्तिशब्दादौ चाव्यापकं तथापि नित्यमात्र (९६) धर्म्मावृत्तिविभक्तोपाधिमत्त्वे तात्पर्य्यम्। नित्यत्वमिति। नित्यवृत्तितद्विभाजकोपाधिमत्त्वमित्यर्थः। अयोगीति। यद्यप्येतद्व्योमाद्यव्यापकं तथा-

---

व्यावृत्तत्वानुपपत्तेः। विशेषस्यापि धर्म्मिग्राहकमानेन स्वव्यावर्त्तकत्वान्न दोष इति भावः। व्योमाद्यतिव्याप्तेराह। अत्रापीति। सकलकारणवन्निष्ठेत्यर्थः। विभक्तेति। साक्षाद्भावविभाजकोपाधिमत्त्वमित्यर्थः।

(९६) नित्यमात्रेति। न चाकाशवृत्तिशब्दवृत्तिगुणत्वमादाय गुणेऽव्याप्तिरिति वाच्यम्। नित्यवृत्तित्वानवच्छेदकभावविभाजकोपाधिमत्त्वस्य नित्यधर्म्माभाववृत्तिभावविभाजकोपाधिमत्त्वस्य वा विवक्षितत्वात्। अयोगीति। लौकिकप्रत्यक्षेत्यर्थः।

कार्य्यकारणभावेति। कार्य्यकारणभावरूपो यः सम्बन्धः तन्निरूपकसम्बन्धि

मेव। असमवायिकारणत्वं गुणकर्म्मणोरेव। असम-
वेतत्वं नित्यद्रव्यसमवाययोरेवेति।

इदानीं द्रव्याणामेव साधर्म्यं वैधर्म्यञ्चाह। पृथि-
व्यादीनामिति। कियतामित्यत आह। नवानामपीति।
अपिरभिव्याप्तौ। द्रव्यत्वयोगो द्रव्यसमवायः। द्रव्यत्व-

---

प्ययोगिवृत्तिविभक्तोपाधिमत्त्वं विवक्षितम्। असमवायीति।
कार्य्यकारणभावसम्बन्धनिरूपकसम्बन्ध्येकार्थसमवायनिरूपितकार-
णत्वयोगित्वमसमवायिकारणत्वं तद् यद्यपि न सकलगुणकर्म्म-
व्यापकं तथाप्यसमवायिकारणवृत्तिविभक्तोपाधित्वं विवक्षितम्।
असमवेतत्वं समवायवृत्त्यनाधेयत्वमित्यर्थः। उपलक्षणेति। उप-
लक्ष्यते व्यज्यते अनेनेत्युपलक्षणम्। जात्यभिव्यक्तिस्तन्नियमबोध-

---

कार्य्यं कारणञ्च तन्निरूपकसम्बन्धित्वेन तयोरनुगमात्। तदेकार्थसमवायित्वेन
निरूपितं यत्कारणत्वं तद्योगित्वमित्यर्थः। तथाच तत्सम्बन्धनिरूपकसम्बन्धि
यद्घटात्मकं कार्य्यं तदेकार्थसमवायित्वेन निरूपितं कपालद्वयसंयोगस्य कारणत्वम्।
एवं घटरूपं प्रति घटस्य कारणतया तत्सम्बन्धनिरूपकसम्बन्धि यद्घटात्मकं कारणं
तदेकार्थसमवायित्वेन निरूपितं कपालरूपस्य कारणत्वमिति तयोरसमवायि-
कारणत्वमिति।

ननु सम्बन्ध्यन्तं व्यर्थमिति चेन्न। स्वरूपकथनपरत्वादित्याहुः। तथैव कारण-
तावच्छेद्यत इति न वैयर्थ्यमित्यन्ये।

ननु सुखं प्रत्यदृष्टस्य स्मृतिं प्रति संस्कारस्य ज्ञानं प्रतीच्छादेरभिघातं प्रति
स्पर्शादेरेकार्थसमवायित्वेन जनकत्वादतिव्याप्तिः। न चात्र समानाधिकरणत्वेन
तथात्वं नतु समवायित्वेन गौरवादिति वाच्यम्। कपालद्वयसंयोगादेरपि

मित्येतावति वक्तव्ये योगग्रहणमुपलक्षणनियमार्थम् । अपरिच्छिन्नदेशत्वात् सामान्यसमवाययोः कथमत्रैवेदं नान्यत्रेति प्रत्यय इति केचिच्चोदयन्ति । तत्रेदमत्रैव

---

नार्थमित्यर्थः । तदपि यदर्थं तदाह । अपरिच्छिन्नेति । सामान्यस्यानियतदेशत्वात् समवायस्यैकत्वादित्यर्थः । न च द्रव्यत्वस्यात्यन्ताभावो यत्र नास्ति तत्र द्रव्यत्वमिति वाच्यम् । अभावाभावस्य भावतयानन्वयापत्तेरिति भावः ।

अभिव्यञ्जयेदिति । नन्वभिव्यक्तिर्न साक्षात्कारः । समवायस्यातीन्द्रियत्वात् । नाप्यनुमितिः व्यक्तिं विनापि द्रव्यत्वस्य (८७) जातित्वेन समवायानुमानात् । अत्राहुः गुणस्यात्यन्ता-

---

तथात्वापत्तेरिति चेन्न । पारिभाषिकोक्तासमवायिकारणत्वस्य तत्रापि सत्त्वे दोषाभावात् । गुणकर्म्मसाधर्म्म्यनिरुक्तेस्तावतापि सिद्धेः । यदा स्वसमवायिकारणपदप्रवृत्तिनिमित्तनिरुक्तौ प्रस्तावस्तदा तत्तदन्यत्वविशेषितमिदमेव बोध्यम् । अतएव गुणप्रकाशे आत्मविशेषगुणान्येति विशेषणं दत्तम् । न च तत्रापि तद्व्यर्थं लाघवेनास्यैव तत्प्रवृत्तिनिमित्तत्वादिति वाच्यम् । अदृष्टादौ कस्यचिदपि तथा व्यवहाराभावेन गौरवस्य प्रामाणिकत्वात् । अतएव प्रमापदप्रवृत्तिनिमित्तं अनुभवत्वगर्भं स्मृतौ तद्व्यवहारादिति दिक् ।

समवायेति । स्वातिरिक्तसमवायेत्यर्थः । भावत्वमपि बोध्यम् । सामान्यस्येति । अन्यथा घटस्य तत्तद्देशगमने घटत्वोपलम्भानुपपत्तिः तस्य क्रियाविरहादिति भावः । समवायस्येत्यत्र वैशेषिकनये इति शेषः ।

(८७) जातित्वेनेति । ननु जातित्वं व्यक्तिगर्भमिति तत्रापि न व्यक्तिं विना तज्ज्ञानमिति चेन्न । द्रव्यत्वस्य समवेतत्वे साध्ये तस्य लिङ्गत्वात् । लिङ्गोपस्थितभानस्य चानभ्युपगमात् । ननु पक्षीभूतद्रव्यत्वस्य समवेतत्वे भानाद्दोषतादवस्थ्यं

द्रव्यत्वं वर्त्तते नान्यत्र यत इत्युच्यते। अयमेव हि द्रव्यत्वस्य स्वभावो यदेतत्समवाय मभिव्यञ्जयेदेताभि र्व्यक्तिभिः सह न रूपादिव्यक्ति गुणत्वञ्च रूपादिव्यक्ती-रादाय पृथिव्यादिव्यक्तीरित्यादि वक्ष्यते।

---

भावो यत्र नास्ति तत्र द्रव्यत्वं वर्त्तते। अत्यन्ताभावस्य यद्यपि प्रतियोग्येव स च नोत्पत्तिकाले तथापि प्रध्वंसप्रागभावयोरप्य त्यन्ताभावाभावरूपत्वम्। अत्यन्ताभावाश्रयत्वमेव प्रतियोगितद्ध्वंस-प्रागभावानामनुगमकम्। अत्यन्ताभावश्च क्वचिदस्ति क्वचिन्नेत्य धर्म्मिस्वभाव एव नियामकः। यद्वा समवायस्यैकत्वेऽपि धर्म्मिता-धीन एव विशेषः। स च विशेषणताविशेषरूपो नान्यत्र।

---

इति चेन्न। द्रव्यपदस्य प्रवृत्तिनिमित्तत्वादिना पक्षत्वात्। व्यक्तेः पृथिवीत्वादिना विशेषरूपेणाभानमित्यन्ये। नोत्पत्तिकाल इति। यद्यपि व्यञ्जकगुणवत्त्वस्य कदाचित् सत्त्वादेव जातिव्यवस्थितौ न दोषस्तथापि यदा यत्र व्यञ्जकं वर्त्तते तदैव तद्व्यङ्गमित्यभ्युपगमेन ध्वंसादिसाधारणं तन्निर्वचनम्।

यत्तु लक्षणाभिप्रायेणेदम्। तथाचाद्यक्षणेऽव्याप्तिवारणाय तदिति। तच्चि-न्त्यम्। कदाचित् तत्सत्त्वेन तदभावादित्याहुः। अनुगमकमिति। ननु तद-भावाभावत्वमेव वानुगमकमिति व्यर्थमिदमिति चेत्। अत्राहुः। गुणादिसाधा-रणमभावत्वं विरोधित्वमेव वाच्यम्। तदेव किमित्याकाङ्क्षायामिदमुक्तमिति। यद्यपि गुणात्यन्ताभावासमानाश्रयत्वं पृथिवीत्वाद वप्यस्ति तथापि तद्गतत्वेऽपि नातिव्याप्त्यादिदोष इति कृत्वा तथोक्तमित्याहुः। एतदप्यनुगतव्यञ्जकाभ्युपगम-पक्षे। वस्तुतो व्यञ्जकस्याननुगमेऽप्यदोषः। प्रत्युत तदनुगतत्वेनैवान्यथासिद्धौ जात्य-सिद्धिरिति। केचित्तु अत्यन्ताभावाभावत्वमेव प्रतियोगित्वम्। ध्वंसप्रागभावयोरपि तत्प्रतियोगित्वात्। एवञ्च तत्प्रतियोगितावच्छेदकमनुगतमुक्तमिति वदन्ति।

द्रव्यत्वमेव नास्ति गोत्वादिवदनुपलब्धिरिति केचित् । नाकार्य्याश्रयतोपलक्षणेन साधर्म्म्यणाभि-

---

द्रव्यत्वमेवेति । ननु साधनविकलो दृष्टान्तः । न च व्यतिरेके दृष्टान्तः । (६८) अप्रतीतप्रतियोगिकस्याभावस्यानिरूपणात् । न । द्रव्यत्वं तावत् उभयसिद्धं न जातिरुपाधिर्व्वेति विवादः । द्रव्यत्वं न जातिः । अनुगतत्वेनाप्रतीतेः । व्यतिरेकेण गोत्ववदित्यर्थात् । पृथिव्यादिनवकं न पृथिवीत्वादिभिन्नसत्ता-साक्षाद्व्याप्यजातिमत् तद्वत्तयानुपलभ्यमानत्वात् । अन्वये दृष्टान्तो गोत्वमित्यन्ये ।

कार्य्याश्रयनेति । कार्य्यमात्रं प्रति समवायिकारणत्वमसति

---

ननु द्रव्ये गुणात्यन्ताभाव एव कुतो नेत्यत आह । अत्यन्ताभावश्चेति । नन्वस्य प्रतीतिनियामकत्वाभ्युपगमेऽपि नास्थितिनियामकत्वं तस्यैव स्थितिनियामकं किमित्यनुयोगापत्तेः । यदि च तत्र स्वभावो विशेषणताविशेषो वा तथा तदा द्रव्यत्वेऽपि तुल्यमित्यनुशयादाह । यद्वेति । विशेषणताविशेषो द्रव्यत्वविशेषणता-विशेषः स्वभावो वा नियामक इत्यपि बोध्यम् । विशेषणता च नातिरिक्ता अप-सिद्धान्तात् किन्तु स्वरूपसम्बन्धविशेष इत्याहुः ।

(६८) अप्रतीतेति । आश्रयासिद्धिरिति भावः । द्रव्यत्वमिति । द्रव्यपद-प्रवृत्तिनिमित्तं न जातिरित्यर्थः । अनुगतत्वेनेति । यद्यप्यत्राप्येतद्धर्मिसिद्धिस्तथापि स्वमतावष्टम्भेनेदम् । पृथिव्यादीति । अत्र गुणवत्त्वेन पक्षता तेन तन्मते पृथिवीत्वादेरेव सत्तासाक्षाद्व्याप्यतया भागबाध इत्यत उक्तम् । सत्ताव्याप्येति । घटत्वादिसत्त्वाद्बाध इत्यत उक्तं साक्षादिति । यद्यपि तन्मते सत्तानभ्युपगमात् साध्याप्रसिद्धिस्तथापि परमतावलम्बनेनेदम् । यद्वा एतदस्वरसादेवान्य इत्युक्त-मिति । गुणत्वाद्यभ्युपगमात् तत्र प्रतियोगिप्रसिद्धिरनुपलभ्यमानत्वात् । अप्रतीय-

**व्यक्तस्य सामान्यस्य सास्नादिसंस्थानाभिव्यक्तगोत्ववदेव प्रतीतेः। अन्यथा कार्य्याश्रयत्वमपि सामान्या-**

---

बाधके जातिनियतं पृथिवीत्वादेरननुगतत्वात्। न च गुणवत्त्वमुपाधिस्तदवच्छेदकं जातौ बाधके सत्येव उपाधिस्वीकारात्। उपाधिः क्लृप्तो जातिः कल्प्येति चेत्। न। साक्षात्सम्बद्धधर्म्मबाधे सत्येव परम्परासम्बन्धस्यावच्छेदकत्वात्। पृथिव्यादिचतुर्षु स्पर्शसमवायिकारणतया चैका जातिः स्यादिति चेत्। न। स्पर्शत्वद्रव्यत्वयोः कार्य्याकार्य्यवृत्तित्वेन कार्य्यतानवच्छेदकत्वात्। न चानित्यत्वेन स्पर्शद्रव्ये विशेष्ये जलादिपरमाणौ स्पर्शसमवायिकारणत्वाभावेनान्त्यावयविनि च द्रव्यसमवायिकारणत्वाभावेन तज्जात्योरनङ्गीकारे जलत्वादिना सङ्करापत्तेः। यद्वा द्रव्यमिति तावत् प्रत्यक्षं सर्व्वसिद्धं तच्च यथा पृथिव्यां तथा जलेऽपीति उभय-

---

मानत्वादेतच्चान्यतरासिद्धमित्यत्रास्वरसः। कार्य्यमात्रमिति। भावकार्य्यमित्यर्थः। साक्षादिति। अन्यथा गोत्वादेरपि विनयः स्यादिति भावः। कार्य्याकार्य्येति। अत्र कार्य्येति सम्पातायातम्।

ननु कर्म्मासमवायिकारणतावच्छेदकत्वेन मूर्त्तत्वं जातिरस्तु। न चैवं तत्रापि भूतत्वेन सङ्कर इति वाच्यम्। एवं शरीरत्वासङ्करेण पृथिवीत्वमपि जातिर्न स्यात्। यदि च गन्धसमवायिकारणतया तत्सिद्धौ सङ्करात् तत्र जातिः तदा प्रकृतेऽपि तुल्यम्। न च भूतत्वेऽपि कार्य्यतावच्छेदकसम्भवात् विनिगमनाविरहः। कर्म्मत्वस्य जातित्वेन लघुत्वादिति चिन्त्यम्। गुरुत्वमिति। गुरुत्वादीत्यर्थः। यद्यपि गुणत्वेनान्यथासिद्धिः सम्भवति तथापि साक्षात्सम्बन्धधर्म्मबाधे सत्येवानुगतमते परम्परासम्बन्धधर्म्मविषयत्वम्। तदिदमुक्तं मूले व्यञ्जकधर्म्मानुपादायेति।

नियतं नवस्वेव न स्यात्। कारणत्वं सामान्येन नियम्यते कार्य्यत्वञ्च। तच्च स्वाभाविकमबाधनात्। बाधनं त्वौपाधिकमिति विशेषः।

साधारणनिमित्तकं तच्च पृथिवीत्वादिकमेकदेशवृत्तित्वात्। व्योमवत् गुरुत्वं तदज्ञानेऽपि तद्बोधादिति द्रव्यत्वसिद्धौ व्योमादावपि संयोगादिना तत्साध्यम्। (९९) यद्वा आकाशादित्रयं सत्ताव्याप्यजातियोगि संयोगजनकत्वात् कर्म्मवदिति त्रितयमात्रवृत्तिजातिसिद्धौ पृथिव्यादिषट्कं कालवृत्तिसत्ताव्याप्यजातिमत् संयोगजनकत्वात् व्योमवत्। न च विभुत्वमुपाधिः। तद्ध्यनवच्छिन्नपरिमाणवत्त्वम्। तथाचानवच्छिन्नपदस्य पक्षमात्रव्यावर्त्तकतया पक्षेतरवदनुपाधित्वं। हेतोः साध्यव्याप्यतया तदव्यापकत्वेन साध्यव्यापकत्वञ्च। न चैवं द्रव्यत्वापरजात्यापत्तिः। अप्रयोजकत्वात्। प्रकृते च विपक्षबाधकस्योक्तत्वात्।

---

(९९) द्रव्यत्वसाधकं प्रकारान्तरमाह। यद्वेति। सत्ताव्याप्यत्वं भेदगर्भमतो न सत्तया सिद्धसाधनम्। न चैवं सत्ताभिन्नजातियोगि सत्ताभिन्नसत्तासमानाधिकरणजातियोगीति वास्त्विति वाच्यम्। तत्रैव तात्पर्य्यादित्येके। वस्तुतः सत्ताव्यापकजात्याप्युक्तसाध्यसिद्धेरुद्देश्यासिद्धिरिति व्याप्यत्वाभिधानम्। भावत्वेन हेतुविशेषणाच्च प्रागभावादौ व्यभिचारः। पृथिव्यादिषट्कमिति। घटत्वादिनार्थान्तरवारणाय कालवृत्तीति। अत्र संयोगजनकत्वादित्यस्य संयोगसमवायित्वादित्यर्थः। यथाश्रुते कर्म्मादौ व्यभिचारात् समवायिकारणविवक्षायां चोक्तस्यैव लघुत्वादिति। हेतोरिति। तथाचोपाध्यन्तरशङ्कापि नेति भावः। द्रव्यत्वापरेति। कालादित्रयं द्रव्यत्वव्याप्यजातियोगि संयोगसमवायित्वादिति त्रितयमात्रवृत्तिजात्यापत्तिरिति शङ्कार्थः। यत्तु प्रागुक्तक्रमेण पुनः पृथिव्यादिषट्केऽपि तत्साधनमिति तदर्थ इति तन्न। द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तिरिति।

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥

व्यञ्जकधर्म्मानुपादाय जातिनिराकरणे गोत्वादिक-
मपि न स्यात्। नहि सास्नासम्बन्धाद्यनवभासेनैकस्य
कस्यचिद्गौरिति प्रत्ययानुवृत्तिरस्ति। तस्मादस्ति द्रव्य-

जातौ बाधकमेव किमित्यत आह। व्यक्तेरभेद इति। अभिन्न-
व्यक्तिकान्यजात्या सहान्यूनानतिरिक्तव्यक्तिका च परस्परात्यन्ताभाव-
समानाधिकरणा चानवस्थादिपराहता च जातिर्न भवतीत्यर्थः।
तथाह्याकाशत्वं (१००) न जातिः एकव्यक्तिमात्रवृत्तित्वात्।
एतद्घटत्ववत्। अन्यथा जातिलक्षणव्याघातात्। बुद्धित्वं ज्ञान-
पदप्रवृत्तिनिमित्तं न ज्ञानत्वभिन्नजातिः। ज्ञानभिन्नवृत्तित्वे
सति सकलज्ञानवृत्तित्वात्। विषयित्ववत्। निष्क्रमणत्वप्रवेशनत्वे
न जाती परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसमा-
नाधिकरणत्वात्। भूतत्वमूर्त्तत्ववत्। सामान्यं यदि द्रव्यकर्म-
भिन्नं सत् जातिमत् स्यात् गुणः स्यादिति सामान्यरूपाव्यवस्थैवान-

(१००) आकाशत्वमिति। आकाशपदजन्योपस्थितिप्रकार इत्यर्थः। आकाश-
पदप्रवृत्तिनिमित्तमित्यर्थ इत्यन्ये। अन्यथेति। यद्यपि निःसामान्यत्वे विशेषान्यत्वे
च सति समवेतत्वमिति तल्लक्षणमस्तु तथाच व्यक्त्यभेदेऽपि जात्यभ्युपगमे न दोष-
स्तथापि समानानामेकधर्म्मस्यैव सामान्यतया सर्व्वसिद्धत्वात् तत्र तथा व्यवहाराभाव
इति भावः। बुद्धित्वमिति। बुद्धिपदप्रवृत्तिनिमित्तमित्यर्थः। तथाचोभयपद-
प्रवृत्तिनिमित्तत्वलाभान्नान्यतरप्रवृत्तिनिमित्तीभूताधुनिकसङ्केतसंख्याया विवक्षित-

नियतं नवस्वेव न स्यात्। कारणत्वं सामान्येन नियम्यते कार्य्यत्वञ्च। तच्च स्वाभाविकमवाधनात्। बाधनं त्वौपाधिकमिति विशेषः।

साधारणनिमित्तकं तच्च पृथिवीत्वादिकमेकदेशवृत्तित्वात्। व्योमवत् गुरुत्वं तदग्रानेऽपि तद्बोधादिति द्रव्यत्वसिद्धौ व्योमादावपि संयोगादिना तत्साध्यम्। (६९) यद्वा आकाशादित्रयं सत्ताव्याप्यजातियोगि संयोगजनकत्वात् कर्म्मवदिति त्रितयमात्रवृत्तिजातिसिद्धौ पृथिव्यादिषट्कं कालवृत्तिसत्ताव्याप्यजातिमत् संयोगजनकत्वात् व्योमवत्। न च विभुत्वमुपाधिः। तद्ध्यनवच्छिन्नपरिमाणवत्त्वम्। तथाचानवच्छिन्नपदस्य पक्षमात्रव्यावर्त्तकतया पक्षेतरवदनुपाधित्वं। हेतोः साध्यव्याप्यतया तदव्यापकत्वेन साध्यव्यापकत्वञ्च। न चैवं द्रव्यत्वापरजात्यापत्तिः। अप्रयोजकत्वात्। प्रकृते च विपक्षबाधकस्योक्तत्वात्।

(६९) द्रव्यत्वसाधकं प्रकारान्तरमाह। यद्वेति। सत्ताव्याप्यत्वं भेदगर्भमतो न सत्तया सिद्धसाधनम्। न चैवं सत्ताभिन्नजातियोगि सत्ताभिन्नसत्तासमानाधिकरणजातियोगीति वास्त्विति वाच्यम्। तत्रैव तात्पर्य्यादित्येके। वस्तुतः सत्ताव्यापकजात्याप्युक्तसाध्यसिद्धेरुद्देश्यासिद्धेरिति व्याप्यत्वाभिधानम्। भावत्वेन हेतुविशेषणाच्च प्रागभावादौ व्यभिचारः। पृथिव्यादिषट्कमिति। घटत्वादिनार्थान्तरवारणाय कालवृत्तीति। अत्र संयोगजनकत्वादित्यस्य संयोगसमवायित्वादित्यर्थः। यथाश्रुते कर्म्मादौ व्यभिचारात् समवायिकारणविवक्षायां चोक्तस्यैव लघुत्वादिति। हेतोरिति। तथाचोपाध्यन्तरशङ्कापि नेति भावः। द्रव्यत्वापरेति। कालादित्रयं द्रव्यत्वव्याप्यजातियोगि संयोगसमवायित्वादिति त्रितयमात्रवृत्तिजात्यापत्तिरिति शङ्कार्थः। यत्तु प्रागुक्तक्रमेण पुनः पृथिव्यादिषट्केऽपि तत्साधनमिति तदर्थ इति तन्न। द्रव्यत्वेनात्मनानतिरिक्तवृत्तित्वापत्तेरिति।

**व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः।**

**रूपहानिरसम्बन्धो जातिबाधकसंग्रहः॥**

**व्यञ्जकधर्म्मानुपादाय जातिनिराकरणे गोत्वादिक-मपि न स्यात्। नहि सास्नासम्बन्धाद्यनवभासेनैकस्य कस्यचिद्गौरिति प्रत्ययानुवृत्तिरस्ति। तस्मादस्ति द्रव्य-**

जातौ बाधकमेव किमित्यत आह। व्यक्तेरभेद इति। अभिन्न-व्यक्तिकान्यजात्या समान्यूनानतिरिक्तव्यक्तिका च परस्परात्यन्ताभाव-समानाधिकरणा चानवस्थादिपराहता च जातिर्न भवतीत्यर्थः। तथाह्याकाशत्वं (१००) न जातिः एकव्यक्तिमात्रवृत्तित्वात्। एतद्घटत्ववत्। अन्यथा जातिलक्षणव्याघातात्। बुद्धित्वं ज्ञान-पदप्रवृत्तिनिमित्तं न ज्ञानत्वभिन्नजातिः। ज्ञानभिन्नवृत्तित्वे सति सकलज्ञानवृत्तित्वात्। विषयित्ववत्। निष्क्रमणत्वप्रवेशनत्वे न जाती परस्परात्यन्ताभावसमानाधिकरणत्वे सति परस्परसमा-नाधिकरणत्वात्। भूतत्वमूर्त्तत्ववत्। सामान्यं यदि द्रव्यकर्म्म-भिन्नं सत् जातिमत् स्यात् गुणः स्यादिति सामान्यरूपाव्यवस्थेवान-

(१००) आकाशत्वमिति। आकाशपदजन्योपस्थितिप्रकार इत्यर्थः। आकाश-पदप्रवृत्तिनिमित्तमित्यर्थ इत्यन्ये। अन्यथेति। यद्यपि निःसामान्यत्वे विशेषान्यत्वे च सति समवेतत्वमिति तल्लक्षणमस्तु तथाच व्यक्त्यभेदेऽपि जात्यभ्युपगमे न दोष-स्तथापि समानानामेकधर्म्मस्यैव सामान्यतया सर्व्वसिद्धत्वात तत्र तथा व्यवहाराभाव इति भावः। बुद्धित्वमिति। बुद्धिपदप्रवृत्तिनिमित्तमित्यर्थः। तथाचोभयपद प्रवृत्तिनिमित्तत्वलाभाद्वान्यतरप्रवृत्तिनिमित्ताभिन्नताघुनिकसङ्केतसंख्यया विरोधित-

त्वम् । स्वात्मन्यारम्भकत्वं स्वसमवेतकार्य्यत्वं सम-वायिकारणत्वमित्यर्थः । गुणवत्त्वं गुणसमवायः । तदेतद्द्वयं निमित्तव्यवस्थापकद्रव्यत्वं द्रव्यव्यवहार-निमित्तमित्यवधेयम् ।

---

वस्था । विशेषो यदि द्रव्यकर्म्मान्यत्वे सति जातिमान् स्यात् गुणः स्यात्, तथाच व्यावृत्तधीहेतुर्न स्यात् । समवायो यदि प्राप्तित्वे सति समवायवान् स्यात् संयोगः स्यात् । न च प्राप्ति-त्वादात्मसमवायित्वं साध्यं साधनावच्छिन्नसाध्यव्यापकस्य संयोग-स्योपाधित्वादिति । परमते समवायनानात्वमभ्युपेत्योक्तम् । अस्माकं व्यक्तेरभेद एव तत्रापि बाधक इति क्रमेणापादनमिति भावः ।

व्यञ्जकेनान्यथासिद्धौ बाधकमाह । व्यञ्जकेति । द्रव्यत्वादिषु मध्ये द्रव्यपदप्रवृत्तिनिमित्तं विवेचयति । तदेतदिति । समवायि-कारणत्व गुणत्वयोरुपाधित्वे सखण्डतया द्रव्यत्वस्य जातित्वेना-खण्डतया लघुत्वादिति भावः ।

---

त्वेन नैकत्वोभयपदाधुनिकसङ्केताभावादिति वदन्ति । जातिपदं दृष्टान्तासिद्धि-वारणाय । सत्तायां व्यभिचारवारणाय सत्यन्तम् । अनुभवत्वे व्यभिचारादाह सकलेति । यद्यप्यवृत्तित्वस्यैव व्याप्यत्वं तथापि स्वरूपासिद्धिवारकसार्थकत्ववादि-मतेनेदम् । विषयित्ववादिति । न च सत्यन्तमत्रासिद्धमिच्छादेरपि विषयित्वा-दिति वाच्यम् । ज्ञानोपाधिकसविषयकत्वव्यवहारेण तत्र तदनभ्युपगमात् । ज्ञान-निष्ठविषयित्ववादित्यन्ये । परस्परेति । एकात्यन्ताभावसमानाधिकरणत्वं द्रव्यत्व-पृथिवीत्वद्वयोरपि इति परस्परपदम् । अपि च परस्परस्यैव सामानाधिकरण्यं

कार्य्यकारणविरोधित्वं कार्य्यकारणयोरन्यतरेणापि द्रव्यजातीयं न विरुध्यत इत्यर्थः।

कार्य्यकारणेति। यथा शब्दो गुणकार्य्येण शब्देन नाश्यते कर्म्म चोत्तरसंयोगेन तथान्त्यः शब्दः कारणेन शब्देन नाश्यते। नैवं द्रव्यजातीयं तद्धि क्वचित् समवायिकारणनाशेन क्वचिदसमवायिकारणनाशेन नश्यतीत्यर्थः। यद्यप्येतत् नित्यगुणेऽप्यस्ति कार्य्यकारणाभयानाश्यत्वं च कर्म्मण्यस्ति। (१०१) न चादृष्टेतरकार्य्यगुणनाश्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वमित्यर्थः। विनिगमकाभावात् समवायिकारणनाशमहत्कृतावयवविभागेन द्रव्यनाशोपगमात्।

—

भवतीति तदुपादानम्। सत्ताद्रव्यत्वादौ व्यभिचारादाह सत्यन्तम्। गोत्वाश्वत्वादौ व्यभिचारादपिसपदम्।

सामान्यमिति। यद्व्याप्यप्रयोजकं सामान्यं यदि सामान्यवत् स्यात् अनवस्था स्यादित्यवाप्रसिद्धिरित्यत आह। सामान्यं यदीति। तथापि पूर्व्वोक्तमनुसन्धेयम्। एवमग्रेऽपि। प्राप्तित्वे सतीति। यद्यपि प्राप्तित्वं सम्बन्धित्वं तदा वाच्यवाचकसम्बन्धादौ व्यभिचारः। संयोगसमवायान्यतरत्वं यदि तदा व्यर्थविशेषणतया न तद्व्याप्यत्वं तथापि तद्भिन्नत्वे सति सम्बन्धत्वं बोध्यम्। नचेति। तथाचोक्तं तर्कोऽप्यप्रयोजक इति भावः। प्राप्तित्वादिति। आधाराधेयभावधीजनकाविभक्तपदार्थत्वादित्यर्थः। इत्याहुः। रूपादौ साध्याव्याप्तेराह साधनेति। अभावेऽप्यसम्बन्धान्न जातिः। समवायाश्रयत्वे तस्य भावत्वापत्तिरिति ध्येयम्। अवयवाद्यनन्तरं तदपेक्षया द्रव्यत्वस्येति शेषः।

(१०१) सत्ताद्दृष्टेति। अदृष्टनाश्ये घटादौ द्रव्यत्वस्य वृत्तेरसम्भवधारणाया दृष्टेतरेति। ईश्वरज्ञानादिनाश्ये तत्र तद्वृत्तेः स एव दोष इत्यत आह। कार्य्येति। समवायिकारणनाशनाश्ये तत्र तद्वृत्तेर्दोषतादवस्थ्यमित्यत आह।

अन्त्यविशेषवत्त्वम्। एतत् द्रव्यजातीयस्यैव सम्भवतीत्यर्थः। अथवान्यत्रावयविद्रव्येभ्य इति भविष्यति। अनाश्रितत्वमाधारैकस्वभावता। नित्यत्वं द्रव्यत्वे सतीति बोद्धव्यम्। चकारादिपर्य्ययेण विशेषरहितद्रव्य-

तथापि कार्य्यकारणभावनिरूपकसम्बन्धिनाशावृत्तिजातिमद्वृत्ति-पदार्थविभाजकोपाधिमत्त्वमभिप्रेतम्।

अन्त्येति। अन्त्यरूपो विशेषो व्यावर्त्तको धर्म्म स्तद्वत्त्व

गुणेति। कर्म्मव्युदासायाह नाश्येति। गुरुत्वादिवारणाय सत्तासाक्षाद्व्याप्येति। उपाधेः साक्षाद्व्याप्यत्वाभावाज्जातिपदं स्वरूपनिर्वचनपरम्। केचित्तु तद्भिन्न तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वं साक्षाद्व्याप्यत्वमुपाधेरपि। तथाच स्नेह-द्रव्यान्यतरत्वमादायातिव्याप्तिरिति जातिपदमित्याहुः। तन्न। द्रव्यत्वव्याप्य-मूर्त्तत्वव्याप्येतरसत्तादौ द्रव्यत्वसाक्षाद्व्याप्यत्वापत्तेः। विनिगमकाभावादिति। यद्यप्यसमवायिकारणनाशकाले द्रव्यनाशाभावात् तस्यावश्यापेक्षणीयतया विभागस्य द्रव्यनाशकत्वे मानाभावः तेनैव चान्यथासिद्धत्वात तथापि नाश्यत्वं यदि तत्प्रयोज्यनाशप्रतियोगित्वं तदेवं बोध्यम। यदि तज्जन्यनाशप्रतियोगित्वं तत्तदा-कित्यादिनाशेऽस्मदादिप्रयत्नजन्यत्वाभ्युपगमाददृष्टवदात्मसंयोगस्य सर्व्वोत्पत्तिनिमित्तत्वेन तज्जन्यनाशप्रतियोगित्वात द्रव्यत्वस्यासम्भवो बोध्यः। कार्य्यकारणेति। यदि द्रव्यविभाजकेति पाठ स्तदा द्रव्यपदं पदार्थपरम। अन्यथा तत एव गुणादिवारणे व्यर्थविशेषणत्वापत्तेः। यद्यपि कार्य्यनाश्यावृत्तीत्येव युक्तं तथापि मूलानुरोधादेवमुक्तम्। यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यम। नाश्यावृत्तित्वमत्र विभाजकोपाधिविशेषणम्। न तु जातिविशेषणम। अन्यथा तादृशस्नेहत्व-जातिमात्रवृत्तितया गुणत्वस्यातिव्याप्त्यापत्तेः। तन्नाश्यत्वञ्च तदुत्पत्त्यव्यवहितोत्तरनाशप्रतियोगित्वम। तेन तच्छरीरकार्य्यखड्गादिना तन्नाशदर्शनान्नासम्भवः। अतएवादृष्टेश्वरज्ञानादिकारणनाश्यत्वात् द्रव्यस्य नासम्भवः। गुणकर्म्मवारणाया

त्वम्। आश्रितद्रव्यत्वम् अनित्यद्रव्यत्वञ्चान्यत्र नित्यद्रव्येभ्य
इति। पृथिवीत्यादि। अनेकत्वम्। बहुत्वसमवाया

मित्यर्थः। एतत् द्रव्येति। (१०२) अन्त्यविशेषवन्निष्ठसत्तेतर-
जातिमत्त्वमित्यर्थः। अथवेति। तदिहापि योजनीयम्। अतो
वा नाव्याप्तिरित्यर्थः। आधारेकेति। समवाये नाधारैकस्वभा-
वता। तेनेह परमाणुरिति प्रतीतिः तस्याश्रितत्वेऽप्यदोषः।
बहुत्वेति। यद्यपि घटपटाकाशा इति बहुत्वसंख्यातत्राप्यस्ति

वृत्तीत्यन्तम्। सामान्यादिवारणाय जातिमद्वृत्तीति। उत्पत्त्यादिस्पर्शविभाजको-
पाधिमादायातिव्याप्तिवारणाय पदार्थेति।

(१०२) घटादावव्याप्तिरित्यत आह। अन्त्येति। अन्त्यपदं विशेषपदार्थो-
पलक्षकम्। प्रमेयत्वादिकमादाय गुणेऽतिव्याप्तिवारणाय जातिपदम्। तदपि
समवेतमात्रपरमित्याहुः। समानाधिकरणेति। उक्तगत्याकाशादावतिव्याप्ति-
वारणाय व्याख्यानम्।

ननु यत्र बहुत्वसंख्या तत्र समानाधिकरणद्रव्यविभाजकोपाधिरिति सामा-
न्यतो व्याप्तिसत्त्वात् दोषतादवस्थ्यम्। न च तादृशोपाधेः प्रत्येकं व्याप्यता विव-
क्षिता। समानाधिकरणपदवैयर्थ्यापत्तेरिति चेदत्राहुः। प्रत्येकव्याप्यता न
विवक्षिता। तथाच सामान्यतो व्याप्तिसत्त्वादुक्तातिव्याप्तिवारणाय समानाधि-
करणेति। समानाधिकरणत्वमन्यूनाधिकरणत्वं विवक्षितमिति न दोषताद-
वस्थ्यम्। नचैवं व्याप्यपदार्थान्तर्गतनियमांशो व्यर्थ इति वाच्यम्। तस्यैव
तात्पर्यादिति। वस्तुतस्तु द्रव्यविभाजकोपाधिव्याप्यत्वं द्रव्यविभाजकोपाध्यत्यन्ता-
भावासमानाधिकरणत्वं विवक्षितम्। एवञ्चाभाववारणाय समानाधिकरणपद-
मिति। ईश्वरापेक्षाबुद्धिजन्यबहुत्वसंख्यायाः सर्वत्र सत्त्वात्तद्व्याप्तिप्रसङ्ग इति।

संस्कारवद्वृत्तीति। गुणकर्मणोरतिव्याप्तेराह संस्कारवद्वृत्तीत्यत्यन्ताभावविशेष-

अपरा जातिः पृथिवीत्वादिका। तद्वत्ता तत्समवायः संस्कारवत्ता चेति द्रष्टव्यम्।

क्षितीत्यादि। क्रिया स्पन्दः तद्वत्ता। मूर्त्तत्वमसर्व्वगतपरिमाणयोगः। परत्वापरत्वे गुणविशेषौ वक्ष्येते।

---

तथापि समानाधिकरणद्रव्यविभाजकोपाधिव्याप्यबहुत्वसंख्यावत्त्वमिहाभिसंहितम्। संस्कारवत्ता चेति। क्षित्यादिचतुर्णां वेगस्थितिस्थापकवत्त्वादात्मनो भावनावत्त्वात् मनसो वेगवत्त्वात्। न चेश्वरात्मन्यव्याप्तिः। संस्कारवद्वृत्तिद्रव्यत्वसमानाधिकरणात्यन्ताभावप्रतियोगिजातिमत्त्वस्य विवक्षितत्वात्।

धात्वर्थः क्रियातिव्यापिकेत्यन्यथा व्याचष्टे। स्पन्द इति। स्पन्दवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः। (१०२) एवं परत्वा-

---

णम्। गुणात्यन्ताभावस्य संस्कारवद्वृत्तित्वेऽप्यदोषः। संस्कारवद्वृत्तित्वञ्च संस्कारत्वावच्छिन्नवद्वृत्तित्वम्। तेनात्मत्वात्यन्ताभावस्य यत्किञ्चित्संस्कारवद्वृत्तित्वेऽपि नातिव्याप्तिः। सकलसंस्कारवद्वृत्त्यत्यन्ताभावप्रतियोगिसत्ताजातिमादाय गुणाद्यतिव्याप्तेराह। द्रव्यत्वसमानाधिकरणेति। सत्तात्यन्ताभावस्य न द्रव्यत्वसमानाधिकरण इति नोक्तदोषः। अत्यन्तपदं स्वरूपनिर्व्वचनम्। जातेः प्रागभावाद्यभावात्। तदन्योन्याभावस्य यावत्संस्कारवद्वृत्तित्वात्। आकाशजलान्यतरत्वमादायाकाशेऽतिव्याप्तेराह। जातीति। यदि संस्कारवद्वृत्तीति पाठः तदा तज्जातिविशेषण सन्यञ्च पूर्व्ववत्।

(१०२) एवमति। नन्वीश्वरापेक्षाबुद्धिसत्त्वे सर्व्वत्र तदुत्पत्तिसम्भव इति चेन्न। सर्गाद्यकालद्व्यणुकादावुत्पन्ने दैववशाददृष्टे प्रयोजनाभावात तदनुत्पत्तेरित्येके। अतद्गुणसंविधानबहुव्रीहिणा वेग एवोक्त इत्यन्ये। विभुवृत्तीति।

वेगः संस्कारविशेषः तद्वत्ता। आकाशेत्यादि। सर्व्वगतत्वं पूर्व्वोक्तेषु सर्व्वेषु गतत्वं सम्बन्धः। परम-महत्त्वं प्रकर्षकाष्ठाप्राप्तमहत्परिमाणयोगः। नन्वि-यत्ता परिमाणमिति चेन्न। संख्यागुरुत्वयोरपि तथा भावप्रसङ्गात्। ह्रस्ववितस्त्यादिपरिकल्पनाभावे पर-माणुषु तदभावप्रसङ्गाच्च। तदभावे परमसूक्ष्मत्वात् परिमित एव परमाणुरिति चेन्न। तदभावेऽपि परम-महत्त्वात्। परिमितमेवाकाशादीति न कश्चिद्विशेषः। तस्माद्ध्रस्ववितस्त्यादिप्रकर्षनिकर्षवानितरेभ्यो व्यावृत्तः परम्परमनुवृत्तश्च गुणविशेषः प्रत्यक्षसिद्धो दुरपह्नवः। तस्य यथा निकर्षकाष्ठया परममहत्त्वमपीति। सर्व्व-

---

दावपीति नोत्पन्नविनष्टाव्याप्तिः। असर्व्वगतेति विभ्ववृत्ति-परिमाणवत्त्वमित्यर्थः। परत्वापरत्वे व्याप्यव्यापकभावाति-व्याप्तेरित्यन्यथा व्याचष्टे। परत्वेति। वेगो निरन्तरगति-मत्तानुः क्रियावत्त्वेनैव प्राप्त इत्यन्यथा व्याचष्टे। संस्कारेति। तस्य गुणविशेषत्वान्न ततस्तल्लाभ इत्यर्थः। गतत्वं स्पन्दाभावा-दसम्भवीत्यन्यथा व्याचष्टे। सर्व्वेष्विति।

---

ननु विभुत्वमनवच्छिन्नपरिमाणवत्त्वं तथा चावच्छिन्नपरिमाणयोगित्वमेवास्तु लाघवादिति चेन्न। यथोक्तविशेषणविशेष्यभावे दोषाभावादित्येके। नित्य-

संयोगिसमानदेशत्वं सर्व्वेषां संयोगिनां मूर्त्तानां संयोगवृत्त्या आकाशादयो देशास्तेषां भाव स्तत्त्वम्। पूर्व्वमाकाशादय एव सर्व्वमूर्त्तेषु वर्त्तन्त इत्युक्तं सम्प्रति तु त एवाकाशादिषु वर्त्तन्त इत्यपौनरुक्त्यम्। अथवा पूर्व्वं मूर्त्तसंयोगा एवाकाशादिषु वर्त्तन्त इत्युक्तं सम्प्रति मूर्त्ता एव नभःप्रभृतिषु वर्त्तन्त इत्यपौनरुक्त्यम्। चकारात् क्रियापरत्वापरत्ववेगविरहः।

ननु प्रागुक्तयावन्निरूपितैकसम्बन्धाश्रयत्वमभिदम्। न च सर्व्वेषां मूर्त्तानां ये संयोगास्तद्वत्त्वम्। घटपटसंयोगादीनामिहाभावात्। नैवम्। संयोगित्वावच्छिन्नमूर्त्तनिष्ठात्यन्ताभावप्रतियोगित्वस्य यत् संयोगित्वं सर्व्वमूर्त्तेषु वर्त्तते तद्वत्त्वस्य वा विव-

महत्त्वाश्रयपरं विभुपदमित्यन्ये। य संयोग इति। योयः संयोग इत्यर्थः। संयोगित्वावच्छिन्नेति। संयोगित्वावच्छिन्नप्रतियोगिकेत्यर्थः। एतच्च सत्तादावतिव्याप्तिवारणाय। न च व्यधिकरणधर्म्मावच्छिन्नाभावानभ्युपगमादेवमपि दोषतादवस्थ्यमिति वाच्यम्। तदभ्युपगन्तृमतेनैवोक्तत्वादित्याहुः।

आकाशादिनिष्ठ तादृशात्यन्ताभावप्रतियोगित्वं तत्रापीत्यत उक्तं मूर्त्तनिष्ठेति। एतच्च संयोगसम्बन्धेनाकाशादयो वर्त्तन्त इत्येकदेशिमत मवलम्ब्यप्रसिद्धिश्च समवेतत्वाभावनिबन्धनेति बोध्यम।

तत्संयोगवृत्ताबप्याकाशादि न वर्त्तत इति मतमालम्ब्याह। यदिति। तथाच सम्बन्धस्यैकत्वं यावत्त्वं वा न विवक्षितम। किन्तु संयोगप्रतियोगिन एव यावत्त्वमितिभावः। सजातीयेति। घ्राणाद्यपेक्षया महत्त्वमपकर्षाश्रय इति मते सजातीयपदम्।

पृथिव्यादीनामिति। भूतत्वमौपाधिकं सामान्यम्। अथ जातिरेव तत् किं न स्यात्। न स्यात्। व्यञ्जकनियमाभावेन व्यक्तिनियमानुपपत्तेः। बहिरिन्द्रियग्राह्यगुणवत्ता तद्व्यञ्जिकेति केचित्। तदा मूर्त्तत्वमपि जातिरेव स्यात्। अवच्छिन्नपरिमाणस्य व्यञ्जकस्य सद्भावात्। एवमस्तु को दोषः। इति चेन्न। जातिसङ्करप्रसङ्गात्। तथाहि मनसि मूर्त्तत्वं नभसि च भूतत्वं परस्परपरिहारेण वर्त्तमानं पृथि-

च्चितत्वात्। प्रकर्षेति। सजातीयप्रतियोगिकापकर्षानाश्रयमहत्त्वस्य नित्यमहत्त्वस्य वा योग इत्यर्थः। शेषं सुगमम्।

औपाधिकमिति। (१०४) संस्कारत्वान्यबहिरिन्द्रियग्राह्यगुणत्वव्याप्यजातिमद्विशेषगुणवत्त्वम् आत्मभिन्नविशेषगुणवत्त्वं वेत्यर्थः। जातिसङ्करेति। न च नानैव भूतत्वं मूर्त्तत्वञ्च स्यात्। मूर्त्तत्वं यदि पृथिवीत्वव्याप्यजातिः स्यात् कान्यवृत्तिः स्यात्। सत्तावद्व्यवहारान्यथासिद्धौ मानाभावश्चेत्यर्थात्।

(१०४) संस्कारत्वान्येति। बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वमित्येव कृते परमाणवादावव्याप्तिरिति जातिगर्भम्। तादृशसंस्कारत्वजातिमद्भावनावत्यात्मन्यतिव्याप्तिवारणाय संस्कारत्वान्येति जातिविशेषणम्। ज्ञानत्वमादाय तत्रैवातिव्याप्तिरिति बहिरिन्द्रियग्राह्येति जातिविशेषणम्। गुणत्वादिकमादाय दोषतादवस्थ्यमिति गुणत्वव्याप्येति। गुणत्वशून्यान्योन्याभावस्य रूपादौ बहिरिन्द्रिय-

व्यादौ सङ्कीर्य्येत । अस्तु तर्हि पृथिवीत्वाद्यनेकनिव-
न्धनप्रवृत्तिरेव भूतशब्दोऽन्वादिवदिति चेत् । न । एक-
निमित्तत्वे सम्भवति अनेकार्थत्वकल्पनानवकाशात् ।
तस्माद्भोक्तृव्याश्रयतया भूतानि सिद्धानि प्रसिद्धानीति
भूतानीत्युच्यन्ते । इन्द्रियप्रकृतित्वमिन्द्रियोपादान-
कारणत्वम् । तच्च नभसोऽवच्छिन्नानवच्छिन्नभेदकल्पन-
योपपादनीयम् । अन्यथा भूतेभ्य इति पञ्चमी समान-
तन्त्रे स्वतन्त्रे च मनस एतद्वैधर्म्म्यं न स्यात् ।

अस्त्विति । तथाच न पञ्चमाधर्म्मात्मकं भूतत्वमिति भावः ।
श्रोत्रनित्यत्वादाकाशे स्वरूपासिद्धिं निराकरोति तच्चेति । अन्य-
थेति । घ्राणरसनचक्षुस्त्वक्श्रोत्राणि इन्द्रियाणि भूतेभ्य इति
न्यायसूत्रे पञ्चेन्द्रियाणां भूतोपादेयत्वम् । इह तु पृथिव्यादिपञ्चा-
नामिन्द्रियोपादानत्वं मनोवैधर्म्म्यमुक्तं तन्न स्यात् । मनसोऽपि
आकाशतुल्यत्वादित्यर्थः ।

पाह्यस्य ज्ञानादावपि वृत्तेरात्मन्यतिव्याप्तिवारणाय जातिपदं समवेतमात्रपरम
संयोगत्वमादायातिव्याप्तेराह विशेषेति । नन्वेतदप्रयोजकमत आह व्यवहारेति
यद्यप्येवं घटत्वमपि नाना न स्यात्तथापि मेरुघटादिसाधारणोपाधिनैव व्यवहार
स्यथासिद्धेः तथाप्येतन्मते तत्वापोहापत्तिरेव । अतएव संस्थानविशेषैकार्थसम
वायि द्रव्यत्वमेव घटत्वमित्युक्तं कुसुमाञ्जलिप्रकाशे । केचित्तपाध्यप्रतिसन्धानेऽपि
घटोऽयमिति धीरस्ति तद्धीतिसन्धाने नतोऽयं ... धानाशीति विशे... दित्याहुः ।

प्रकृतिशब्दः स्वभावार्थो वा। तथाच मनोव्यव-
च्छेदाय सन्निधिसिद्धं वाह्यपदमनुसञ्जनीयम्। वाह्यै-
कैकेन्द्रियग्राह्यविशेषगुणवत्त्वम्। वाह्यनानात्मगुणग्रा-
हिणा एकैकेन प्रतिनियतेनेन्द्रियेण साक्षात्कारिज्ञान-

नन्ववच्छेदिका कृतिगच्छन्ती नेन्द्रियमवच्छेद्यज्ञानजन्यमित्यत
आह। प्रकृतिशब्द इति। यद्यप्येतद्घटाद्यव्यापकं तथापि
वहिरिन्द्रियवृत्तिद्रव्यविभाजकोपाधिमत्त्वमभिप्रेतम्। अनात्मेति।
(१०५) अनात्मगुणग्राहकत्वं मनस्यपीत्यात्मगुणाग्राहकेणेत्यर्थः।

(१०५) आत्मगुणेति। अत्र गुणपदमनावश्यकम्। यथाश्रुतस्य परमाण्वा-
द्यतिव्याप्तेराह। द्रव्यग्राहकेति। संयोगत्वादिजातिमादायात्माद्यतिव्याप्तेराह
ग्राह्यान्तम् जातिविशेषणम्। गुणविशेषणत्वे तादृशत्वसरणसंयोगवृत्तिसंयोग
त्वादिजातिनिवेशेनातिव्याप्तितादवस्थ्यात्। द्रव्यग्राहकेत्यपि तदर्थमेव। द्रव्य-
ग्राहकेन्द्रियाणि चक्षुस्त्वङ्मनांसि तदग्राह्यत्वं न रूपत्वादावित्यव्याप्तिरित्यत उक्तं
यावदिति। तत्र विशिष्टाभावस्य प्रत्येकग्राह्यत्वेऽपि सत्त्वान्नाव्याप्तिः। द्रव्य-
ग्राहकयावदग्राह्यत्वं संयोगत्वेऽपि तस्य द्रव्यग्राहकसन्निकर्षव्यक्तिविशेषग्राह्य-
त्वात्। एवञ्च पूर्ववत् आत्मादौ धर्मत्वादिजातिमादायातिव्याप्तेराहेन्द्रिय
ग्राह्येति। ज्ञानत्वादिकमादायातिव्याप्तेराह वहिरिति। प्रमात्वजातिनिवेश-
नातिव्याप्तेराह गुणत्वव्याप्येति। गुणपदं त्विदं यदास्ति तदा स्वरूपनिर्वचनम्।
जातिपदञ्चागुरुविनाशिविशेषगुणत्वव्याप्यान्यत्वमादाय ज्ञानादिसंग्रहादतिव्याप्ति
वारणाय। तस्येश्वरज्ञानादिमात्रवृत्तित्वेनोक्तरूपत्वात्। यद्यप्येवमप्यविभुगुणपदं
व्यर्थमेव तथापि तादृशगुणत्वव्याप्यजातिमत्त्वं तादृशजातिमद्गुणवत्त्वं चेति
साधर्म्यद्वयं बोध्यम्।

परमाण्वाद्यव्याप्तेराह। महत्त्वाश्रयेति। आत्मन्यतिव्याप्तिवारणाय ग्राह्यान्तं

साधर्म्येन ग्राह्या ग्रहणयोग्या ये गुणा गन्धादयः परस्परं विशेषा व्यवच्छेदहेतवः तद्वत्त्वम् । अत्र विवक्षाभेदेन बाह्यैकैकेन्द्रियग्राह्यगुणवत्त्वं बाह्येन्द्रियग्राह्यविशेषगुणवत्त्वं वेति बोद्धव्यम् । चतुर्णां पृथिव्यप्तेजोवायूनां द्रव्यारम्भकत्वं द्रव्यसमवायिकारणत्वम् । स्पर्शवत्त्वं स्पर्शसमवायः । उपलक्षणञ्चैतत् । अवा-

नन्वेकैकेति विशेषणं व्यर्थं विशेष्यस्यैव प्रकृतोपयोगादित्यत आह । अत्रेति । द्रव्यग्राहकयावदिन्द्रियाग्राह्यबहिरिन्द्रियग्राह्यगुणवृत्तिगुणत्वव्याप्यजातिमद्गुणत्वमित्यर्थः । बाह्येन्द्रियेति । महत्त्वाग्रयेन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वव्याप्यजातिमद्गुणवत्त्वमित्यर्थः । द्रव्यजनकत्वमदृष्टादावतिव्याप्तमित्यत आह । द्रव्यसमवायीति । न चान्त्यावयविन्यव्याप्तिः द्रव्यसमवायिकारणवृत्तिद्रव्यविभाजकोपाधिमत्त्वमित्यर्थात् । अवान्तरेति । जन्यानुत्व-

गुणविशेषणम् । न तु पूर्वेण जातिविशेषणम् । संस्कारत्वमादाय भावनासाधारण्येनात्मन्यतिव्याप्तेर्महत्त्वाश्रयग्राह्यत्वमिच्छादावपीति दोषतादवस्थ्यमित्यत आह । इन्द्रियेति । संयोगत्वमादाय दोषतादवस्थ्यादाह विशेषेति । सत्तामादायातिव्याप्तेराह गुणत्वव्याप्येति । गुणत्वन्यूनान्यत्वमादाय ज्ञानादिसाधारण्यादात्मन्यतिव्याप्तिवारणाय जातिपदम । गुणपदञ्च पूर्ववत् ।

द्रव्यसमवायीति । संयोगादिसमवायित्वं कालादावपीति प्रथमद्रव्यपदम । द्रव्यनिमित्तकारणं तत्रैवेति समवायीति । तादृशद्रव्यत्वसत्त्वात् तत्रैवातिव्याप्तेरिति चरमद्रव्यपदं व्यर्थम् । तथापि द्रव्यसमवायिकारणत्वं द्रव्यनिमित्तकारणासमवायिकारणभिन्नकारणत्वमित्यदोषः । घटाव्याप्तेर्जातिगर्भमाह । जन्यानु-

न्तराणुत्वमहत्त्वं स्थितस्थापकसंस्कारयोगः शरीरारम्भकत्वञ्चेति द्रष्टव्यम् ।

त्रयाणां पृथिव्यप्तेजसाम् । प्रत्यक्षत्वं वाह्येन्द्रियग्राह्यत्वम् । रूपवत्त्वं रूपसमवायः । द्रवत्ववत्त्वं द्रवत्वसमवायः । सम्भाव्यते चैतत् द्वयोः पृथिव्युदकयोः । गुरुत्वं तत्कार्य्यं पतनञ्च, रसवत्त्वं रसो माधुर्य्यादिः

वद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । एवमवान्तरमहत्त्वमपि निर्व्वाच्यम् । शरीरेति । शरीरारम्भकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः ।

आत्मवृत्त्यर्थमाह वाह्येति । (१०६) वाह्येन्द्रियप्रत्यक्षवृत्तिद्रव्यत्वापरजातिमत्त्वमित्यर्थः । घटाद्यव्याप्तिनिरासायाह । सम्भाव्यते इति । द्रव्यत्ववद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थः । तत्कार्य्यमिति ।

त्येति । यद्यपि जन्यवृत्ति-तादृशजातिमत्त्वमित्येवास्तु तथापि यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यम । जन्यपदं मनस्यतिव्याप्तिवारणाय ।

द्रव्यत्वमादायातिव्याप्तेराह । द्रव्यत्वव्याप्येति । द्रव्यत्वकालान्यतरत्वमादाय कालातिव्याप्तेराह जातीति । घटाद्यव्याप्तेरन्यथाह । शरीरेति । शरीरसमवायिकारणवृत्तीत्यर्थः । यद्यपि शरीरवृत्तीत्येव युक्तं तथापि तत्रैव तात्पर्य्यमित्येके । यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यमित्यन्ये । एतच्चोपलक्षणम् । इन्द्रियारम्भकवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यपि ध्येयम ।

(१०६) परमाण्वाव्याप्तेरन्यथा व्याचष्टे । वाह्येन्द्रियेति । वाह्यपदमात्म-

तद्वत्त्वम्। आलोकप्रकाश्यत्वम् अभास्वररूपत्वञ्चेति चार्थः। भूतात्मनां पृथिव्यादीनां पञ्चानामात्मनाञ्च वैशेषिकगुणवत्त्वं स्वाश्रयव्यवच्छेदोपयिकावान्तरसामान्यविशेषवतो वैशेषिका गुणा रूपादयो बुद्ध्या-

ननु पतनमधःसंयोगफलिका क्रिया यदि तदा तेजस्यतिप्रसङ्गः। अथ गुरुत्वासमवायिकारणिका क्रिया तदा गुरुत्वस्यैव साधर्म्यं व्यर्थमधिकम्। मैवम्। गुरुत्वप्रयोज्यपतनत्वव्याप्यजातिमतः पतनस्य विवक्षितत्वात्। आलोकेति।

नन्वेतदालोकेऽतिव्यापकं विषयतया तत्प्रत्यक्षे तस्यापि हेतुत्वात्। न चालोकान्यत्वेन विशेष्यं परमाण्वाद्यव्यापकत्वात्। न। (१०७) आलोकान्यत्वे सति तज्जन्यप्रत्यक्षविषयद्रव्यवृत्तिद्रव्यत्वापरजातिमत्त्वस्याभिप्रेतत्वात्। स्वाश्रयेति। स्वाश्रयसमानाधि-

न्यतिव्याप्तिवारणाय। विशेषगुणत्वादिकमुपाधिमुपादायातिव्याप्तेराह। जातीति। प्रत्यक्षपदं लौकिकप्रत्यक्षपरम्। द्रव्यत्ववृत्तीति। गुरुत्वेति। न चात्रापि गुरुत्वस्यैव गमकत्वे शेषवैयर्थ्यमिति वाच्यम्। पतनत्वव्याप्यजातिविशेषवतः पतनस्य विवक्षितत्वात्। तत्परिचयार्थं गुरुत्वप्रयोज्येत्युक्तम्। ननु तस्यापि हेतुप्रवेश इति। यद्यपि तादृशमपि पतनमव्यापकं तादृशपतनसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं लक्षणम्।

(१०७) आलोकान्यत्वे सतीति। सत्यन्तमालोकवारणाय। आत्मवारणाय तज्जन्येति। आलोकजन्येत्यर्थः। आलोकपदञ्चात्र न तेजःपरं किन्तु प्रभामात्रपरम्। तेन तैजसशरीरजन्यप्रत्यक्षविषयात्मनि नातिव्याप्तिः। प्रत्यक्षपदं लौकिक-

दयश्च तद्वत्त्वम्। उपलक्षणञ्चैतत्। प्रत्यक्षगुणवत्त्व-ञ्चेत्यपि द्रष्टव्यम्। क्षित्युदकात्मनां चतुर्दशगुणवत्त्वम्। संख्यामात्रेण साधर्म्यमेतत्। न तु गुणा विशे-

करणद्रव्यविभाजकोपाध्यत्यन्ताभावसमानाधिकरणगुणवृत्तिगुण-त्वव्याप्यजातिमद्गुणवत्त्वमित्यर्थः। प्रत्यक्षेति। प्रत्यक्षगुणवद्-वृत्तिद्रव्यविभाजकोपाधिमत्त्वमित्यर्थः।

प्रत्यक्षपरम्। द्रव्यपदं व्यर्थम्। सत्तामादायातिव्याप्तेराह। द्रव्यत्वव्याप्येति। स्पर्शवत्त्वादावतिव्याप्तेराह। जातीति।

स्वाश्रयेति। स्वं गन्धत्वादि तदाश्रयो गन्धादिः तत्समानाधिकरण तादृशो-पाधिः पृथिवीत्वादिस्तदत्यन्ताभावो जलादौ तत्समानाधिकरण गुणावृत्ति गन्ध-त्वादि तद्वत्त्वं विशेषगुणत्वं तदाश्रयत्वञ्च वैशेषिकगुणवत्त्वं क्षित्यादीनां साधर्म्य-मित्यर्थः। रूपादेश्च यद्यपि रूपत्वादिना तथात्वं तथापि नीलत्वादिना तथात्वम्। जलादिरूपेऽपि रूपत्वव्याप्यजातिविशेषस्य सत्त्वात्। गुणवृत्तीति गुणपदं व्यर्थम्। गुणवृत्तिगुणत्वव्याप्यपदयोरन्यतरान्तर्भावेन लक्षणद्वयम्। मनोयोगत्वाद्युपाधिमादा-यातिव्याप्तेराह। जातीति।

ननु निविडसंयोगे सुवर्णद्रवत्वमात्रनिष्ठजात्यभ्युपगमात् सुवर्णद्रवत्वे पतन-वैलक्षण्यानुमेयजातिविशेषवति गुरुत्वे च विशेषगुणलक्षणमतिव्याप्तमिति चेत्। भ्रान्तोऽसि। न ह्यत्र विशेषगुणलक्षणं प्रकृतं किन्तु पृथिव्यादिषट्केतरभेद-साधकतया विशेषगुणवत्त्वं निरुक्तं तत्र नोक्तदोषः। प्रत्युत तद्व्यावर्तकविशेषणो-पादाने व्यर्थविशेषणत्वापत्तेः। यदा तु विशेषगुणलक्षणजिज्ञासा तदा तद्भिन्नत्व-विशेषितमेतदेव लक्षणं सुवचमिति। परमाणवव्याप्तेराह। प्रत्यक्षगुणवद्वृत्तीति। प्रत्यक्षपदं सर्वत्र [illegible] प्रत्यक्षपरम् पदार्थविभाजकद्रव्यत्वमादायातिव्याप्तेराह। द्रव्येति।

षतो विवक्षिताः। सम्भावितश्चैतत् साधर्म्यं न तु व्यापकम्। परमेश्वरात्मन्यसम्भवात्। तानग्रे गणयिष्यति। आकाशात्मनां क्षणिकैकदेशवृत्तिविशेषगुणवत्त्वम्। क्षणिका आशुतरविनाशिनः एकदेशवृत्तयो व्याप्यवृत्तयो विशेषा ये स्वाश्रयव्यवच्छेदाय गुणा स्तद्वत्त्वम्। अत्रापि विवक्षाभेदादेकदेशवृत्तिविशेषगुणवत्त्वम्। क्षणिकविशेषगुणवत्त्वञ्चेत्यपि द्रष्टव्यम्। आकाशे तादृशो गुणः शब्दः। आत्मनि बुद्ध्यादिः।

संख्यामात्रेणेति। (१०८) उष्णस्पर्शसमानाधिकरणप्रत्यक्षद्रव्यवृत्तिद्रव्यत्वव्याप्यजातिसमानाधिकरणगुणत्वमित्यर्थः। यथाश्रुते दोषमाह। नत्विति। सम्भावना योग्यता सा च निरुक्तरूपैव। क्षणिकत्वस्यानङ्गीकारादाह। आशुतरेति। क्षणचतुष्टयाव्यापका इत्यर्थः। यद्वा विभुप्रत्यक्षगुणवत्त्वं निरवयवेन्द्रियग्राह्यगुणवत्त्वं वा विवक्षितम्। द्वित्वाद्याशुतरविनाशिगुणवत्त्वं क्षित्यादेरपीत्यत उक्तम् एकदेशेति। एकदेशवृत्तिसंयोगवत्त्वमन्यत्रापीत्यत उक्तं क्षणिकेति। अव्याप्येति। स्वसमानाधिकरणात्यन्ताभावप्रतियोगिन इत्यर्थः। समुदितविवक्षायामन्य-

(१०८) गुणे संख्या नास्तीत्यन्यथा व्याचष्टे। उष्णेति। तेजोवारणायोष्णस्पर्शासमानाधिकरणेति तादृशजातिसमानाधिकरणगुणविशेषणम्। नतु तादृशजातिविशेषणम्। तादृशजातिमत्त्वस्यैव विशेषगुणत्वे विशेषणवैयर्थ्यापत्तेः। द्रव्यत्व-

दिक्कालयोः पञ्चगुणवत्त्वम्। सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागाः पञ्चैव गुणाः दिशि काले च सर्वोत्पत्तिमतां निमित्तकारणत्वम्। तत्सर्वतद्भिन्न-

तरविशेषणवैयर्थ्यमाशङ्क्याह। अतएवेति। क्षणिकविशेषेति। न चेश्वरात्मन्यव्याप्तिः। क्षणिकविशेषगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वस्य विवक्षितत्वात्। संख्यादिपञ्चवत्त्वं द्रव्यमात्रस्येत्यत आह। पञ्चैवेति। विशेषगुणशून्यविभुत्वमित्यर्थः।

व्याप्यपदवैयर्थ्यापत्तेश्च। यथोक्तविशेषणविशिष्टाभावे न वैयर्थ्यम्। वाय्वाद्यतिव्याप्तेराह। प्रत्यक्षद्रव्यवृत्तीति। द्रव्यपदमत्र व्यर्थम्। सत्तामादायातिव्याप्तेराह। द्रव्यत्वव्याप्येति। घटाकाशान्यतरत्वमादायाकाशेऽतिव्याप्तिवारणायाह। जातीति। तादृशघटत्वजातिसमानाधिकरणघटाकाशान्यतरत्वसत्त्वादाकाशेऽतिव्याप्तेराह। गुणेति। अद्विगुणेत्यर्थः। तेन घटाकाशसंयोगादिकमादाय न दोषतादवस्थ्यम्। निरुक्तस्य तत्र सत्त्वादाह। यथाश्रुत इति। चतुर्थक्षणवृत्तिध्वंसप्रतियोगिन इत्यर्थः।

विभ्विति। विभुत्वे सति प्रत्यक्षगुणवत्त्वमित्यर्थः। तस्मान्नास्यात्र घटाद्यतिव्याप्तिवारणाय। कालाद्यतिव्याप्तिवारणाय प्रत्यक्षेति। सत्तामादाय दोषतादवस्थ्यादुक्तं गुणेति। प्रत्यक्षगुणवद्वृत्तिद्रव्यविभाजकोपाधिमत्त्वं अयमभागतात्पर्यम्। तेन न परमेश्वरात्मन्यव्याप्तिः। एवमग्रेऽपि। निरवयवेति। इन्द्रियत्वेन ग्राहकत्वं विवक्षितम्। तेन मनोग्राह्यरूपादिकमादाय नातिव्याप्तिः।

क्षणिकेति। क्षणिकत्वावच्छेदकजातिमद्विशेषगुणवद्वृत्तीत्यर्थः। तेन चतुर्थक्षणे रूपादिनाशसम्भवेऽपि नातिव्याप्तिः। द्वित्वादिकमादायातिव्याप्तेराह। द्रव्येति। गुणे पञ्चत्वं नास्त्येव सत्त्वे वा व्यक्तिभेदानामनन्तत्वात् पञ्चत्वव्यवधारणमयुक्तमित्यन्यथा लक्षणमाह। विशेषेति। नित्यविभोरिति। दैशिककालिकान्वयव्यतिरेकाभावादिति भावः।

पृथक्त्वादि संयोगविभागवर्जं सर्व्वाण्युत्पत्तिमन्ति गृह्णन्ति तेषां निमित्तकारणं दिक्कालौ। न हि दिक्कालानपेक्षं किञ्चिदुत्पद्यते। तथाच व्यपदिश्यन्ते इहेदानीं जात इति। गृहे जातो गोष्ठे जात इत्यनिमित्तमपि

तथाचेति। नन्वेतावता न कारणत्वसिद्धिः। इह गवि गोत्वमित्यादौ व्यभिचारादिदानीमित्यनेन कालावच्छेदकसूर्य्यस्पन्दादेरेव विषयीकरणात्। न चेहेदानीं जात इत्युत्पत्तिं प्रत्याधारताप्रतीतेर्बाधकं विना कारणत्वमिह कपाले घटो जात इतिवदिति वाच्यम्। उपाधेरेव तथात्वे नित्यविभोः कारणत्वे मानाभावात्। नैवम्। उपाधेरनुगतत्वेनानुगतकारणोल्लेखिप्रत्ययस्य दिक्कालयोरेव विश्रान्तेः। न चाकाश एव तदापत्तिः। (१०९) अभिन्नतन्तुहेतुकद्रव्यगुणकर्म्मभिन्नं यावत्कार्य्यं निरवयवेन्द्रियग्राह्य-

उपाधेरिति। ननु नित्यविभोः कालस्य कारणत्वेऽपि कालोपाधीनामवश्यं कारणत्वमित्यावश्यकत्वाल्लाघवाच्च तेषामेव हेतुत्वमस्तु। न चाननुगमः कालोपाधित्वेनानुगमात्। अन्यथा तदवच्छिन्नकालत्वमप्यनुगतं न स्यादिति चेन्न। उत्पन्नाधिकरणत्वेन प्रतीयमानतया उभयत्रापि विशेषादुभयोरपि कारणत्वादित्याहुः।

(१०९) अभिन्नेति। भिन्नान्तमत्र पक्षभिन्नस्यैव दृष्टान्तत्वमिति मते दृष्टान्तार्थम्। न चाभिन्नतन्तुहेतुकं द्रव्यमसिद्धमसमवायिकारणसंयोगादिति वाच्यम्। अंशुद्वयसंयोगस्यैव कारणैकार्थप्रत्यासत्त्यासमवायिकारणत्वमिति मतावलम्बनाय वा घटमात्रसमवेतरूपादिमात्रपक्षत्वे घटजन्यत्वेन सिद्धसाधनवारणाय याव-

गेहादि व्यपदिश्यत इति चेन्न। तस्याप्यधिकरणतया निमित्तत्वात्। न ह्यधिकरणमकारणकमिति।

विशेषगुणजातीयशून्यसाधारणद्रव्यजन्यं कार्य्यत्वात् सम्मतवदित्यनुमानात्। दिक्समवेतभिन्नं कार्य्यं पक्षीकृत्य कार्य्यत्वाद् दिग्जन्यत्वं साध्यमित्याहुः।

दिति। आत्माकाशजन्यत्वेनार्थान्तरवारणाय शून्यान्तम्। दृष्टान्तासिद्धिवारणाय निरवयवेन्द्रियग्राह्येति। इन्द्रियत्वेनाग्राहकता विवक्षिता। तेन तन्तुगन्धादेर्मनोग्राह्यतया न दोषतादवस्थ्यम्। मनोग्राह्यात्मैकत्वजातीयगुणकाले सत्त्वाद्धर्मे दृष्टान्तासिद्धिश्चेत्यत उक्तं विशेषेति। ईश्वरेणार्थान्तरवारणाय जातीयेति। साजात्यञ्च गुणत्वव्याप्यजात्या बोध्यम्। मनसार्थान्तरवारणाय साधारणेति। एकत्वगर्भः अनन्यत्वेनैकमिति नोक्तदोषः। न चैवमप्येकेन केनचिन्मनसार्थान्तरं विनिगमनाभावेन प्रमाणाभावेन च जनकत्वे बाधात्। इह तत्पत्त्यधिकरणतया प्रतीयमानत्वेन बाधाभावादित्याहुः। ईश्वरज्ञानेनार्थान्तरवारणाय द्रव्येति।

ननु च तत्तद्द्रव्यादित्वयस्य तत्तद्द्रव्यजन्यतयार्थान्तरमिति वाच्यम्। लाघवेन पक्षीभूततावत्कार्य्यजनकीभूतस्यैकस्य सिद्धेः। न चैवं दृष्टान्तीभूतद्रव्यादित्वयजनकत्वं तस्य न स्यादिति वाच्यम्। अन्तरङ्गकार्य्यत्वेन तत्रापि तज्जन्यत्वानुगमात्। यद्यैवमपि दिक्कालयोरन्यतरसिद्ध्याप्यन्यथासिद्धिरित्युभयोरप्यसाधारण्यासिद्धिस्तथापि दिगभिन्नेति विशेषणात् दिगस्तत्कारणत्वं साध्यम्। न चैवमुभयभिन्नत्वविशेषणात् तदतिरिक्तसिद्धिरेवास्तु तदतिरिक्तसिद्धिरपीति वाच्यम्। विपक्षे बाधकाभावात्। प्रकृते त्विदानीं जातमित्यधिकरणताप्रतीतिरेव विपक्षबाधिकेति।

दिक्समवेतभिन्नमिति। पक्षभिन्नमिति पक्षभिन्नदृष्टान्तलाभाय। सम्प्रदायमते वंशतः सिद्धसाधनवारणाय च भिन्नान्तं पक्षविशेषणम्। अत्र च दिक्समवेत-

यद्येवं सम्प्रदानत्वेनादृष्टद्वाराधिष्ठातृतया चात्मनामपि सर्व्वोत्पत्तिमन्निमित्तकारणत्वमप्यस्ति तत्कथमनयोरिवोपन्यास इति चेत् सत्यम् । अधिकरणतया तु सर्व्वोत्पत्तिनिमित्तत्वं विवक्षितम् । यथा हि दिक्कालोपाध्यधिकरणा सर्व्वस्योत्पत्तिः नैवमात्मौपाध्यधिकरणेति । परत्वापरत्वानुमेयत्वञ्चेति चार्थः । क्षिति-

सम्प्रदानत्वेनेति । क्वचित् सम्प्रदानत्वेन क्वचिददृष्टद्वारा(११०) क्वचिदधिष्ठातृतयेत्यर्थः । परत्वेति । परत्वासमवायिकारणसंयोगाश्रयविभुत्वमित्यर्थः । एवमपरत्वेऽपि । नैमित्तिकं यदि स कारणमुच्येत तदा सांसिद्धिकमपि द्रवत्वं तथेत्यन्यथा व्याचष्टे । अग्नीति । तेज इत्यर्थः । तेजःसंयोगासमवायिकारणद्रवत्ववद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमत्र विवक्षितम् । अतो नाव्याप्तिव्याप्ती ।

त्वमुपाधिः । न च दिगजन्ये तद्वृत्तिसंयोगध्वंसादौ साध्याव्याप्तिः, दिगवृत्तित्वस्योपाधित्वे वा कार्य्यमात्रस्यैव तथात्वेन साधनव्यापकत्वमिति वाच्यम् । समवेतत्वरूपपक्षधर्म्मावच्छिन्नसाध्यव्यापकत्वाच्च ।

किञ्च यथाश्रुत संयोगादिध्वंसपक्षांशतः सिद्धसाधनम् । दिगवृत्तित्वभिन्नत्वविवक्षया पक्षतावच्छेदकाप्रसिद्धिरित्यपि नास्वरसोद्भावनमिति । तच्चोपलक्षणमेव । कालजन्यत्वमपि साध्यमित्यपि बोध्यम् ।

(११०) क्वचिदधिष्ठातृतयेति । ईश्वरात्मनीत्यर्थः । परत्वानुमेयत्वं तत्सामग्र्यादावतिव्याप्तमित्यन्यथा व्याचष्टे । परत्वेति । परत्वकारणादृष्टवदात्मसंयोगाश्रयत्वमात्मनीत्यत उक्तमसमवायीति । पिण्डेऽतिव्याप्तिवारणाय विभुपदम् ।

तैजसोर्नैमित्तिकद्रवत्वयोगः। अग्निसंयोगात् निमित्तादुत्पद्यते यत् द्रवत्वं तत्समवायः। सुवर्णादौ तैजसे घृतादौ पार्थिवे एवं विपर्य्ययात् सर्व्वत्र साधर्म्म्यं वैधर्म्म्यञ्च वाच्यमिति। एवमनेन न्यायेन साधर्म्म्यं यत् तदेव विपर्य्ययाद्व्यावृत्तेर्वैधर्म्म्यं वैधर्म्म्यं यत् तदेव विपर्य्ययादनुवृत्तेः साधर्म्म्यम्। अथवा साधर्म्म्यविप-

नन्वभिधेयत्वादेः साधर्म्म्यस्य केवलान्वयित्वात् न विपर्य्यय इत्यत आह व्यावृत्तेरिति। यदन्यतो व्यावृत्तं साधर्म्म्यं तदेव स्वाश्रयाव्यावृत्तधर्म्महेतुत्वात् वैधर्म्म्यं वाच्यमतो नोक्तदोष इत्यर्थः। वैधर्म्म्यं तु विपर्य्ययादित्यत्र नायमर्थ इत्याह। अनुवृत्तेरिति। वैधर्म्म्यं यदनेकवृत्ति तदेवानुगतधर्म्महेतुत्वात् साधर्म्म्य

संयोगपदं स्वरूपनिर्वचनम्। न च दैशिककालिकोभयपरत्वाद्यनुगतजात्यनभ्युपगमादननुगम इति वाच्यम्। उभयापरत्वान्यनिमित्तनाश्यमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वम्। उभयपरत्वान्यतादृशजातिमदपरत्वमिति विवक्षितत्वात्। यदि च परत्वानुमेयत्वमेकमेव साधर्म्म्यमभिमतं तदा अपरत्वादिव्यावर्त्तकमन्यत्वपर्य्यन्तं न देयम्। तेजःसंयोगेति। अत्र तेजःपदं व्यर्थमित्येके। तेजःसंयोगासमवायिकारणत्वेन तत्संयोगत्वजातिरेवोपलक्षितेत्यन्ये। अदृष्टवदात्मसंयोगकारणकं सांसिद्धिकद्रवत्वेऽव्याप्त्यतिव्याप्तिवारणाय असमवायीति। यदि तेजःपदं संयोगस्तदा असमवायीति न देयम्। एवञ्च लक्षणद्वये तात्पर्य्यम्। संयोगजसंयोगमादायातिव्याप्तिवारणाय द्रवत्वेति। साक्षात्त्वं यद्यस्ति तदा भेदेन व्याप्यत्वबोधनायातो नाव्याप्त्यतिव्याप्ती इति। यदि तादृशद्रवत्ववत्त्वमुच्यते तदा घटाद्यव्याप्तिः स्यात्। यदि च द्रवत्ववृत्तीत्वादिकमेव क्रियेत तदा जलेऽतिव्याप्तिः स्यादित्यर्थः।

र्य्ययोऽप्यन्यस्मात् साधर्म्म्यम्। वैधर्म्म्यविपर्य्ययोऽप्यन्यस्माद्वैधर्म्म्यम्। स्वयमूहित्वा वाच्यमध्यापकेन ग्राह्यं शिष्यैरिति।

तद्यथा गन्धवती वैधर्म्म्यं वक्ष्यति। तद्विपर्य्ययान्निर्गन्धत्वमबादीनां साधर्म्म्यम्। उक्तं जलभूम्योः साधर्म्म्यं गुरुत्वं रसवत्त्वञ्च। तद्विपर्य्ययादितरेभ्यो वैधर्म्म्यम्। विपर्य्ययस्त्वितरेषां तेजःप्रभृतीनां साधर्म्म्य

मित्यर्थः। अतो नैकव्यक्तिके वैधर्म्मे व्यभिचारः। प्रायिकत्वेनैतदुक्तमित्यप्याहुः। साधर्म्म्यविपर्य्ययोऽप्यन्यस्मात् साधर्म्म्यमित्यत्र वैधर्म्म्यञ्चेत्यपि द्रष्टव्यम्। अन्यस्मादिति ल्यप्लोपे पञ्चमी। अन्यं प्राप्य साधर्म्म्यमित्यर्थः। वैधर्म्म्यविपर्य्ययोऽप्यन्यस्मात् वैधर्म्म्यमित्यत्र साधर्म्म्यमित्यपि द्रष्टव्यम्।

तत्र वैधर्म्म्यं यत् तदेवेत्यत्रोदाहरति। तद् यथेति। तद्गन्धवत्त्वं वैधर्म्म्यं विपर्य्ययादनुवृत्तेः पृथिवीनां साधर्म्म्यं वाच्यमित्यर्थः। वैधर्म्म्यविपर्य्ययोऽपीत्यत्रोदाहरति। निर्गन्धत्वमिति। अत्रापि तद्विपर्य्ययादिति योज्यम्। विपर्य्ययात् पृथिवीतो व्यावृत्तेः। तदपेक्षया वैधर्म्म्यमेव निर्गन्धवत्त्वं जलादीनां साधर्म्म्यमित्यर्थः। साधर्म्म्यं यत् तदेवेत्यत्रोदाहरति। उक्तमिति। गुरुत्वादिकं यत्साधर्म्म्यमुक्तं तदेवान्यापेक्षया वैधर्म्म्यं वाच्यमित्यर्थः। साधर्म्म्यविपर्य्ययोऽपीत्यत्रोदाहरति। विपर्य्ययस्त्विति। गुरुत्वा-

गुरुत्वं नीरसत्वञ्च। एवमात्मानं विहाय परार्थत्वमचेतनत्वम्। मनो विहायानन्तःकरणत्व मननुकरणत्वञ्च। अम्भो विहाय निःस्नेहत्व मक्लेदत्वञ्च। तेजो विहायानुष्णत्व मदाहकत्वञ्च। जलज्योतिरनिलानामपाकजस्पर्शवत्त्वम्। जलज्योतिषोरपाकजरूपवत्त्वम्। दिक्कालमनसां वैशेषिकगुणविरहः। वाय्वाकाशदिक्कालमनसा

देरक्तसाधर्म्मस्य विपर्य्ययो यदगुरुत्वादिकं तदेवेतरेषां जलभूम्यपेक्षया वैधर्म्मं वाच्यमित्यर्थः। परार्थत्वं (१११) भोगानधिकरणत्वमित्यर्थः। अनन्तरिति। आत्मग्राहकेन्द्रियान्यद्रव्यत्वमित्यर्थः। अक्लेदत्वमिति। सांसिद्धिकद्रवत्वविरहि द्रवत्वमित्यर्थः। वाय्वाकाशेति। प्रत्यक्षद्रव्यावृत्तिद्रव्यत्वमात्रावाप्यजातिमत्त्वमित्यर्थः।

(१११) ननु परार्थत्वं परप्रयोजनत्वं यदि तदा कालादावव्याप्तिः। परप्रयोजनहेतुत्वं चेत्, तदात्मन्यतिव्याप्तिरित्यन्यथा व्याचष्टे। भोगेति। भोगासमवायित्वमित्यर्थस्तेन शरीरे नाव्याप्तिः। न चेश्वरेऽतिव्याप्तिः। भोगाधिकरणवृत्तिद्रव्यत्वव्याप्यजात्यनधिकरणत्वस्य विवक्षितत्वादित्येके। भोगपदं सुखादिसाक्षात्कारपरं स चेश्वरेऽपीति नोक्तदोष इत्यपरे। वस्तुतो व्यर्थविशेषणताभयेन साक्षात्कारमात्रपरमेव तदिति नोक्तदोषः। अचेतनत्वमित्यत्र च ज्ञानानधिकरणत्वं विवक्षितम्। ज्ञानत्वसाक्षात्कारत्वजात्योश्च भेद इति नाविशेष इति। यत्त्वात्मानं विहायेत्यत्रात्मपदं संसारिपरमितीश्वरस्यापि लक्ष्यत्वान्नोक्तदोष इति। तन्न। एवमप्यचेतनत्वमित्यत्राव्याप्त्यापत्तेः।

नन्वन्तःकरणं मनस्तथाच मनोऽन्यस्य साधर्म्म्ये मनोऽन्यत्वं इति हेतुपक्षतावच्छेदकयोरभेदे केतरभेदानुमानमित्यन्यथा व्याचष्टे आत्मेति। पृथिव्यापर-

मतीन्द्रियत्वम् । आत्ममनसोः शरीरावच्छेदेनैव वृत्ति-

आत्ममनसोरिति । शरीरावच्छेदः शरीरसंयोगविशेषः वृत्ति-लाभो भोगजनकत्वं तच्चासमवायिकारणत्वम् । तेन भोगासम-वायिकारणसंयोगाश्रयत्वमित्यर्थः । शरीरतत्संयोगौ च निमित्त-कारणे इति नातिव्याप्तिः । यद्वा निरवयवत्वे सति ज्ञानहेतु शरीरसंयोगवत्त्वमित्यर्थः ।

ननु वैधर्म्यं विपक्षव्यावृत्तो धर्म्मो लक्षणमित्युच्यते । तत्र कालान्यपदार्थलक्षणानि जात्युपाधिरूपाणि सर्व्वाणि कालेऽति व्यापकानि अलक्ष्ये काले गतत्वात् । न हि पृथिवीत्वादयो रूपा-दयो वा न काले इदानीं पृथिवीत्यादिकमित्यनुभवात् । यदि कालावच्छेदका उपाधय एवेदानीं इति गृह्यन्ते तदा तत्रैवाति-

---

माप्त्यादावतिव्याप्तेराह । प्रत्यक्षेति । प्रत्यक्षाश्रितीत्येव विवक्षितम् । द्रव्यपदम-किञ्चित्करम् । अत्र द्रव्यत्वसाक्षाद्व्याप्यजातिपदं द्रव्यसाक्षाद्विभाजकोपाधिपरम् । तेन कालादौ तादृशजात्यभावान्नाव्याप्तिः ।

भोगासमवायीति । भोगपदं ज्ञानपरमतो न व्याप्त्योर्विशेषणत्वमित्येके । भोगत्वं जातिरिति नोक्तदोषः इत्यन्ये । संयोगपदं स्वरूपनिर्वचनम् । ईश्वरात्म-लक्ष्यत्वे तादृशसंयोगाश्रयवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वे तात्पर्य्यम् । एवमग्रेऽपि । कार्य्यैकार्थसमवायासत्तया शरीरात्मसंयोगोऽप्यसमवायिकारणमेवेति यदि ब्रूयात् तदा लक्षणान्तरमाह । यद्वेति । प्राणाद्यतिव्याप्तेराह सत्यन्तम् ।

ननु शरीरपदं व्यर्थम् । न च मनःसंयोगवति श्रोत्रेऽतिव्याप्तिवारणाय तदिति वाच्यम् । शरीरेन्द्रियसंयोगस्य ज्ञानहेतुत्वेन दोषतादवस्थ्यापत्तेरिति चेन्न । यन्मते शरीरेन्द्रियसंयोगस्य न हेतुत्वं तन्मतेनोक्तत्वादित्येके । श्रोत्रा-व्याप्त्ये सतीति विशेषणाच्च तत्रातिव्याप्ति रेवञ्च शरीरपदमुपरञ्जकमित्यन्ये ।

लाभः। वाय्वादीनां नीरूपत्वम्। आकाशादीनां स्पर्श शून्यत्वम्। कालादीनाममूर्त्तत्वमित्यादि।

तदेवमुक्तैर्द्रव्यत्वादिभिर्द्रव्यमितरेभ्यो विवेचितम्। नतु मध्यवृत्तिभिरन्त्यविशेषवत्त्वादिभिरव्याप्तिः। नापि

व्याप्तिः। नैव तेषां कालसमवायादिति चेन्न। तस्यापि तत्र भावात्। इदानीं समवाय इत्यनुभवात्। प्रत्युत। समवायादि स्तत्र वृत्तावपि पृथिवीत्वादिभिः कालस्य न समवायरूपः सम्बन्धः। पृथिवीत्वादिसमवाययोर्हि काले वृत्तिः न तु पृथिवी त्वादिकालयोः समवाय सम्बन्धः। प्रतीतिर्वैलक्षण्यस्य (११२) सर्व्वसिद्धत्वात्।

न च काललक्षणं तल्लक्षणाभाववति काल एव गतत्वादति व्याप्ति र्वेत्यान्यवृत्त्या ह्यतिव्याप्ति र्भवति अतएव संयोगादौ साध्य द्रव्यत्वादिना नैकान्तिक मित्यत्र विस्तरः।

साधर्म्यवैधर्म्याभ्यां षट्पदार्थज्ञानं सत्युत्तरप्रबन्धोपयोगार्थ-माह। तदेवमिति। आदिपदाद् गुणवत्त्वादिपरिग्रहः। मध्य-वृत्तिभिरेकदेशवृत्तिभिरित्यर्थः। अन्त्यविशेषवत्त्वादिभिरित्यत्रा-दिपदेन मूर्त्तत्वादिग्रहणम्। अव्याप्तेः। भागासिद्धतया सर्व्वद्रव्या

(११२) प्रतीतिर्वैलक्षण्यस्येति। अन्यथा पृथिवीतिवत् कालः पृथिवीत्यपि धीः स्यादितिभावः। तल्लक्षणेति। काललक्षणेत्यर्थः। लक्ष्यान्येति। न च लक्ष्यान्यत्वं लक्ष्यान्योन्याभाववत्त्वम। अन्योन्याभावश्च कालेऽप्यस्तीति वाच्यम्। यत्र विशेषणताविशेषेण वर्त्तमानोऽन्योन्याभावो भेदव्यवहारं करोति तस्य तत्रा

परम्परतोऽतिव्याप्तिः। किन्तु कियानपि विवेकः सम्भवति। न चैतावतैव कृतकृत्यत्वम्। अविवेकस्य तदवस्थत्वात्। तत्कुतो विवेक इत्यपेक्षायामाह। इहेदानीमिति। इह प्रकरणे इदानीमवसरप्राप्तौ

व्यावर्त्तकत्वादित्यर्थः। नापि नित्यद्रव्याणां (११३) मिथो व्यावर्त्तकमन्त्यविशेषवत्त्वम्। आकाशस्य कालादिभेदसाधने कालादावतिव्याप्तिः। विरुद्धत्वादित्याह। नापीति।

नन्वेवं तद्वचनं व्यर्थमेवेत्यत आह। किन्त्विति। अन्त्यविशेषवत्त्वमूर्त्तत्वाभ्यामिति स्वाश्रयव्यावर्त्तनादित्यर्थः। अविवेकस्येति। पृथिव्यादीनां मिथो भेदस्याप्रमितेरित्यर्थः। विवेक इति। प्रत्येकद्रव्याणामिति शेषः।

पृथिवीत्वमिति। ननु घृतादिसाधारणः पृथिवीव्यवहारो

भावादन्यथा घटः कालो नेतिवत् कालः कालो नेत्यपि धीः स्यादिति भावः। अत एवेति। तथाच यथा प्रतियोगिसमानाधिकरणसाध्याभाववत्त्वामित्वेऽपि न तत्र व्यभिचारस्तथा प्रतियोगिसमानाधिकरणलक्षणाभाववति लक्षणगमनेऽपि नातिव्याप्तिरित्यर्थः।

(११३) मिथो व्यावर्त्तकमिति। परमाणव आकाशादिभ्यो भिद्यन्ते अन्त्यविशेषवत्त्वादिति नेतिभावः। अनुमेयमिति विप्रतिपन्नबोधाभिप्रायम्। वस्तुतो योग्यव्यक्तिवृत्तिजाति व्यञ्जकपक्षे प्रत्यक्षनियम इति गन्धवत्त्वात् तत्प्रत्यक्षमेवाशङ्कितुमुचितमिति भावः। कार्य्याकार्य्येत्यत्र कार्य्यपदं सम्पातायातम्।

ननु नित्यत्वेन रसविशेषणान्नोक्तदोष इत्यनुशयादाह। जलत्वेनेति। गुरुत्वेति। रसस्य प्रागभावावृत्तित्वमपि न सिद्धमतोऽपि बोध्यम्।

एकैकमित्येतावतैव चरितार्थत्वे शसप्रत्ययोपादानं वीप्सायां भूयस्त्वज्ञापनार्थम्। पृथिवीत्वाभिसम्बन्धात् पृथिवीति। पृथिवीत्वं नाम सामान्यविशेषः। तेनाभि-

---

नानुगतः। गन्धवत्त्वात् तत्र तदनुमेयमिति चेत्। न। उपलादौ तदभावात्। अनुद्भूते च गन्धे मानाभावात्। घर्षणात् तत्रापि तत्प्रतीतिरिति चेन्न। अतोऽपि कर्पूरविजातीयगन्धाननुभवात्।

न च मधुररससमवायिकारणतावच्छेदकतया तत्सिद्धिः। तस्य जलपरमाणावपि वृत्तेः कार्य्याकार्य्यवृत्तितया कार्य्यत्वानवच्छेदकत्वात्। जलत्वेन सङ्कराच्च। जलत्वं तत्परिहारेण परमाणौ तद्रसस्य नित्यत्वात्। तच्च जलत्वपरिहारेण पृथिव्यामिति। अत एव न गुरुत्वरूपस्पर्शसमवायिकारणतयापि तत्सिद्धिः। नापि गन्धसमवायिकारणतया। उपलादौ तदभावात्। अनुभूतगन्धे मानाभाव इत्युक्तम्। तस्य जलादेरपि सुवचत्वात्।

अत्राहुः। पाकाद्रूपादीनां परावृत्तिरुत्पत्तिश्च दृश्यते। जलादौ नियमेन न दृश्यते। इत्याश्रयविशेषप्रयुक्तोऽयमिति परिशेषे घटत्वादीनां(११४) व्यभिचारात्। सकलघटादिव्यापकजलादि

(११४) घटत्वादीनामिति। यद्यपि घटादौ पाकानभ्युपगमात् घटत्वादीनां नावच्छेदकत्वशङ्का न वा घटत्वादिसाधारणपृथिवीत्वस्य तदवच्छेदकत्वं तथापि न्यायमतमभ्युपेत्यैवमित्येके। पिठरेऽपि पाकस्वरूपयोग्यत्वमस्त्येव। किन्तु यादृश-पाकेन रूपाद्युत्पत्तिस्तादृशपिठरं न तिष्ठत्येवमत्यन्तदरतादित्यन्ये।

प्रस्तुतस्तदनुशयादेव प्रकारान्तरमाह। एवमिति। रूपपरादित्यनेन स्पर्शस्याया

मतः सम्बन्धः समवायलक्षण स्तस्मात्। नत्वेकार्थ-संयुक्तसमवायादित्यर्थः।

---

व्यावृत्ततद्योग्यताघटकरूपसिद्धिः। तच्च बाधकाभावाज्जातिः। एवं रूपवतोऽनुष्णाशीतस्पर्शनीलादिरूपाम्लादिरसमवायिकारण-तावच्छेदकतया स्वाभाविकधर्म्मसिद्धिः। तथा लाघवाद् य एवा वयवा उपलादारब्धवन्त स्त एव तद्भस्माप्यारभन्ते। तत्र च गन्ध उपलभ्यत एव।

एवञ्च गन्धवदारम्भकत्वात् परमाणुर्गन्धवानिति गन्धवदारब्ध-त्वेनोपलादावपि गन्धवत्त्वेव। स चोद्भूतो नास्ति इत्यनुद्भूतः कल्प्यते। न चोद्भूतगन्धेनानुद्भूतगन्धानारम्भोऽतितसत्वादावनुद्भूतरूपतेजसो-द्भूतरूपवदारम्भवदविरोध इति गन्धसमवायिकारणतया तत्सिद्धिः।

न चैवं सर्वसमवायिकारणसंसाध्यात्मनिष्ठात्मत्वव्याप्या जातिः कल्प्यते। गुरुत्वापत्तेः। न चैवं नवद्रव्याणीति व्याघातः। ज्ञानव त्त्वेन विभागकरणात्। सर्वसमवायिकारणत्वमात्मत्वावच्छेदा मेव। अदृष्टाभावान्नेश्वरे तत्त्वमित्यपि वदन्ति।

---

त्तरजातिरुपपन्ना तथा। गुणान्तरसमानाधिकरणगुणव्याप्तिप्रसङ्गेन जात्यन्तरस्याव-च्छेदकत्वादित्याहुः।

नीलादीति। शुक्लपटादावपि तद्योग्यत्वादितिभावः। गन्धवदारब्धत्वेनेति। अविरुद्धगन्धवदारब्धत्वेनेत्यर्थः। तेन विरुद्धगन्धवदारब्धे निर्गन्धे न व्यभिचारः। तस्यापि तद्योग्यत्वात् तदारब्धत्वम्। अतितसेति। अदृष्टभेदस्य प्रयोजकत्व-मिति भावः। तत्तु स्फुटमेवेत्यास। वस्तुतः कालभेदेन परमाणौ प्रादुर्भूतानुद्भूत-गन्धोत्पादसम्भवान्नोक्तदोषः। ज्ञानत्वेनेत्युपलक्षणम्। ईश्वरसाधारणात्मत्वेनेत्यपि

ननु पृथिवीस्वरूपसिद्धौ किं लक्षणेन सिद्ध साधनवैयर्थ्यात्। तदसिद्धावाश्रयासिद्धेः। न। स्वरूपसिद्धावपि व्यवच्छेदस्य साध्यत्वात्। तथाहि

स्वरूपसिद्धावपीति। ननु पृथिवीरूपसिद्धिर्न किञ्चित् पृथिवीव्यक्तिसिद्धिः। (११५) भागासिद्धिः। नापि सामस्त्येन तद्व्यक्तिसिद्धिः। तत्सिद्धौ साधनवैयर्थ्यात्। नाप्येतद्रूपोदासीन-तत्सिद्धिः। जलादिसङ्कीर्णोपस्थितावव्याप्त्यतिव्याप्त्यापत्तेः। सैवम्। पृथिवीत्वेन रूपेण समस्ततदुपस्थितावव्याप्त्यतिव्याप्तिशङ्कानवकाशात्। पृथिवीपदं सर्वनियतगन्धवत्त्वोपलक्षकम्। पृथिवीत्वं जातिः लिङ्गम्। अन्यथा नियतसामानाधिकरण्यरूपव्याप्तिग्रह-दशायामिव साध्यसिद्धेः किमनुमेयं स्यात्।

द्रष्टव्यम्। न चैतन्मते तदनभ्युपगमः। आत्मत्वव्याप्यजातिविशेषानिराकरणेन तदभ्युपगमान्नयनानीत्यस्य स्वरूपयोग्यस्य फलोपधाननियमादीश्वरे कदाचित् सुखोत्पत्तिरित्यस्वरस सद्भावयन्नाह यदन्नीति।

(११५) भागेति। यत्किञ्चित् पृथिवीज्ञानेऽपि भागाज्ञानादित्यर्थः। साधन-वैयर्थ्यादिति। स्वरूपभेदः साध्य इत्यभिप्रायेणेदम्। एतदिति। यत्किञ्चित् सामस्त्येत्यर्थः। तत्सिद्धेरपि जलादिभिन्नत्वेन तत्तादात्म्येन वा। आद्ये तत-सिद्धावित्ति। आन्त्ये जलादीति। तत्रापि तत्तादात्म्येनोपस्थितिपक्षे सर्वत्र यदि पृथिवीत्वं न ज्ञातं तदा भागासिद्धिरव्याप्तिः। यदि च सर्वत्र ज्ञातं तदा पक्षवस्तुतादात्म्येन ज्ञाते जलेऽपि पृथिवीत्वं ज्ञातं जलभेदस्य नास्तीत्यतिव्याप्ति-र्व्यभिचारज्ञानमतो नानुमितिरित्यर्थः।

न चाजलादिभिन्नत्वेन न वा तत्तादात्म्येन तदुपस्थितिः। किन्तु पृथिवीत्वेन रूपेण सकलतदुपस्थिताविति तरभेदसाधने न कोऽपि दोष। इत्याशयेनाह। सैव-

पृथिव्यबादिभ्यो भिद्यते पृथिवीत्वात् यत् पुनरितरेभ्यो न भिद्यते नासौ पृथिवी यथाबादि। नचेयं पृथिवी। तस्मादितरेभ्यो भिद्यते। तथाप्यप्रसिद्ध-

---

ननु भेदः साध्यः स च न स्वरूपम्। अधिकरणप्रतियोगिनोः प्रागेव प्रतीतेः। नापि वैधर्म्यम्। तद्धि पृथिवीत्वादिकं तच्च सिद्धमेव।

न च जलादिनिष्ठात्यन्ताभावप्रतियोगित्वेन तत्र सिद्धं जलादौ पृथिवीत्वात्यन्ताभावग्रहदशायां पृथिवीत्वेऽपि तत्प्रतियोगित्वग्रहात्। नाप्यन्योन्याभावः। तस्य जलादिप्रतियोगिकस्यैवाभावप्रतियोगिनोऽपि भिषाधयिषितत्वेन तत्प्रतियोगिनोऽधिकरणभिन्नस्य तस्यानभ्युपगमात्। शब्दसाम्ये चानुमानाप्रवृत्तेः।

---

मिति। न ह्रीति। पृथिवीत्वेनोपस्थिते पक्षे न भागासिद्धिशङ्का न वा जले पृथिवीत्वं ज्ञातं न व्यभिचारज्ञानं स्यात्। भ्रान्तस्य कस्यचित् तथा भाने न दोष इति भावः।

पृथिवीपदमिति। न चैवं विरुद्धगन्धारब्धनिर्गन्धस्य पक्षवहिर्भावापत्तिः। गन्धवत्त्वेन तद्योग्यतोपलक्षणात्। अन्यथेति। एतच्च व्यतिरेकसहचारेणान्वयव्याप्तिग्रहपक्षे। अन्यथा तत्सामानाधिकरण्याभानात्। अधिकरणेति। यद्यपि तन्निष्ठत्वेऽपि स्वरूपभिन्नत्वेनासिद्धिरित्यनुमानवैयर्थ्यं, अन्यथा अभावात् स्वरूपस्य भेदत्वं भेदप्रतीतिजनकत्वं तच्चाभावान्तरासम्भवे कल्पते। नवेह ह्यतत्स्वरूपस्य भेदत्वस्य साधनं बाधितम्। नत्वभावभेदसाधनमपीति भावः। इत्याहुः।

नन्वेवमथ भाववैधर्म्यं न सिद्धम्। तन्निष्ठभावान्तराभ्युपगमादिति चेन्न। भावमात्रभेदसिद्ध्यर्थं तथा शङ्कितत्वादित्याहुः।

विशेषणः पक्षः। इतरव्यवच्छेदस्य क्वचिदप्यप्रसिद्धेः। सिद्धौ वा साधनवैयर्थ्यात् इतरव्यवच्छेदस्य घटादावेव प्रत्यक्षसिद्धत्वात्। किन्त्वा परमाणो राच भूगोलकं पृथिवीत्वनिमित्ताक्रान्ते व्याप्त्यावच्छेदभेदव्यावृत्त्या व्यावृत्ति र्न सिद्धेति साध्यत इति न दोषः।

---

मेवम्। इतरभावान्योन्याभावस्य साध्यत्वात्। न चाभावादविवेकतादवस्थ्यम्। अभावात् स्वरूपभेदस्यानुमानान्तरेण साध्यत्वात्। तथापीति। विशेषणं साध्यम्। साध्याप्रसिद्धौ न तद्व्यतिरेकज्ञानम्। न वा पक्षत्वम्। साध्याप्रसिद्धौ तत्सन्देहादेरभावात्। न वा साध्यविशेषणिका पक्षविशेष्यिकानुमितिः। विशेषणज्ञानं विना विशिष्टज्ञानाभावादिति भावः। इतरेति। ननु घटे प्रत्यक्षप्रतियोगिकाभावप्रमायामपि अयोग्यप्रतियोगिकस्य तस्याप्रमितिः। स्तम्भः पिशाचो न भवतीति प्रतीतेरयोग्यान्योन्याभावो योग्य एवेति चेत्। न। ततः करणमात्रसिद्धावपि प्रत्यक्षतत्कारणासिद्धेः। उभयसिद्धायोग्यतत्संसर्गाभावदृष्टान्तेन

---

अनुमानान्तरेणेति। यद्यपि पृथिवीतरत्वावच्छिन्नसामान्यान्योन्याभावस्यैकस्य साधनेनानुमानान्तरापेक्षा नहि भावसाधारणप्रतियोगितावच्छेदकसत्त्वेऽपि नाभावस्याभावान्तराभ्युपगम। तथा सति मेयत्वस्य कार्य्यत्वव्याप्यत्वापत्तेः। कार्य्यत्वध्वंसवृत्तित्वेन मेयत्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वादभावस्वरूपभेदकत्वे सति जलाद्यन्योन्याभावत्वस्य विशिष्टस्य साधनेऽपि न तदपेक्षा। तथानुमानप्रकाशोक्तमनुसन्धेयम्। विस्तरभयान्नात्र बहु लिखितम्।

अथ किमेतल्लक्षणमित्युच्यते। केवलव्यतिरेकिहेतुविशेषो लक्षणम्। तथाचाचार्य्याः। समानासमानजातीयव्यवच्छेदो लक्षणार्थ इति। एवं तर्हि तदन्योन्याभावस्याप्ययोग्यत्वानुमानात्। अत्राहुः। अधिकरणं प्रतियोगिसत्त्वविरोधिन्या अनुपलब्ध्यैवाभावग्राहकत्वात्। अस्ति चेहापि घटस्य चतुर्द्दशात्मकतया सत्त्वं तदीयतयानुपलब्धिविरोधि।

ननु घटस्यापि पक्षत्वादंशतः सिद्धसाधनमित्यत आह। किन्त्विति। पक्षत्वावच्छेदकनानात्व एव तस्य दोषत्वादतएवानित्ये वाङ्मनसे इत्यत्रानित्या वागिति बुद्धेरुद्देश्याया: सिद्धत्वेनांशत: सिद्धसाधनम्। अत्र तु सर्व्वा पृथिवी इतरभिन्नेत्युद्देश्यप्रतीतेरभाव इत्यर्थः। तथापि घटः कथं पक्षः साध्यनिश्चयेन तत्सन्देहसिषाधयिषयोरभावादिति चेन्न। सर्व्वा पृथिवी इतरभिन्ना न वेति संशयस्य तत्प्रकारसिषाधयिषायाश्च घटविषयत्वात्। घटत्वेन विशेषदर्शनं सिद्धिर्वा तेन रूपेण संशयसिषाधयिषे न भवतः पृथिवीत्वेन भवत इति भावः।

ननु लक्षणमुपक्रम्यानुमाने पर्य्यवसानं मयुक्तमित्यत आह। अथेति। केवलेनेति। इतरभेदसाधकत्वं व्यवहारसाधकत्वं वा विशेषः। पक्षसम्बन्धितयैव प्रसिद्धं साध्यमनुमीयत इति मन्वानः

चतुर्द्दशेति। अभावपदाय चतुर्द्दशत्वं बोध्यम। पृथिवीत्वेनेति। अन्यथा धूमवान् वह्निमानिति सामान्यलक्षणया वह्निनिश्चयात् पर्व्वतेऽग्निसंशयो न स्यादिति भावः। एतच्च संशयादिघटितं बोध्यम्।

| Title | | |
|---|---|---|
| *Mim[illegible] Fasc. [illegible] /10/ each | [illegible] | [illegible] |
| *Nyāya[illegible], Fasc. 1-6 @ /10/ each | 3 | 12 |
| *Nirukta, Vol. IV, fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nitisāra, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Nityācārapaddhatih, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Nityācārapradīpah Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1-3. @ /10/ each | 6 | 14 |
| Nyayabindutīkā, Fasc. 1 @ /10/ each | 0 | 10 |
| *Nyāya Kusumāñjali Prakarana Vol. I, Fasc. 2--6 ; Vol. II, Fasc. 1--3 @ /10/ each | 5 | 0 |
| Nyayasarah | 2 | 0 |
| Padumawati, Fasc. 1--5 @ 2/ | 10 | 0 |
| *Pariçista Parvan, Fasc. 3--5 @ /10/ each | 1 | 14 |
| Prākrita-Paingalam, Fasc. 1--7 @ /10/ each | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc 1--5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II, Fasc. 1 @ 1/- | 1 | 0 |
| Prākrta Laksanam Fasc. 1 @ 1/8/ each | 1 | 8 |
| Parāçara Smṛti, Vol. I, Fasc. 1--8 ; Vol. II, Fasc. 1--6 ; Vol III, Fasc. 1--6 @ /10/ each | 12 | 8 |
| Parāçara, Institutes of (English) @ 1/- each | 1 | 0 |
| Pariksamukha Sutram | 1 | 0 |
| Prabandhacintāmani (English) Fasc. 1--3 @ 1/4/ each | 3 | 12 |
| Rasarnavam, Fasc. 1-3 | 3 | 12 |
| Saddarsana-Samuccaya, Fasc. 1-2 @ /10/ each | 1 | 4 |
| Samaraieca Kaha Fasc. 1-3, @ /10/ | 1 | 14 |
| Sāṅkhya Sūtra Vṛtti, Fasc. 1-4 @ /10/ each | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vijaya, Fasc. 2-3 @ /10/ each | 1 | 4 |
| Six Buddhist Nyaya Tracts. | 0 | 10 |
| Srāddha Kriyā Kaumudī, Fasc. 1-6 @ /10/ each | 3 | 12 |
| Sragdharā Stotra ( Sanskrit and Tibetan ) | 2 | 0 |
| Suçruta Samhita, (Eng) Fasc. 1 @ 1/- each | 1 | 0 |
| Suddhikaumudī, Fasc 1-4 @ /10/ each | 2 | 8 |
| Sundarananandam Kavyam | 1 | 6 |
| Sūryya Siddhanta fasc. 1 | 1 | 4 |
| Syainika Sastra | 1 | 0 |
| *Taittreya Brahmana, Fasc. 11-25 @ /10/ each | 9 | 6 |
| [illegible] Pratisakhya, Fasc 1-3 @ /10/ each | 1 | 4 |
| [illegible] Samhitā, Fasc 27-45 @ /10/ each | 11 | 14 |
| [illegible] Brāhmana, Fasc 10-19 @ /10/ each | 6 | 14 |
| Tantra Vārtika (English) Fasc. 1-8 @ 1/4/ each | 10 | 0 |
| *Tattva Cintāmani, Vol. I, Fasc. 1-9, Vol II, Fasc. 1-10, Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V, Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 24 | 6 |
| Tattva Cintamani Didhiti Vivriti, Fasc, 1, @ /10/ each | 0 | 0 |
| Ditto Prakas, fasc. 1-2, @ /10/ each | 1 | 4 |
| Tattvārthadhigama Sutram, Fasc. 1-3 @ /10/ each | 1 | 14 |
| Tīrthacintamoni, fasc, 1, @ /10/ each | 0 | 10 |
| Trikāṇḍa-Maṇḍanam, Fasc 1-3 @ /10/ each | 1 | 14 |
| Tul'si Satsai, Fasc. 1--5 @ /10/ each | 3 | 2 |
| *Upamita-bhava-prapañca-kathā, Fasc 1-2, 5 13 @ /10/ each | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1--6 @ 1/- each | 6 | 0 |
| Vallāla Carita, Fasc 1 @ /10/ | 0 | 10 |
| Varṣa Kriyā Kaumudī, Fasc 1--6 @ /10/ each | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 3--6 ; Vol. II, Fasc 1--7, @ /10/ each | 6 | 14 |
| Vidhāna Pārijata, Fasc. 1-8, Vol. II, Fasc. 1 @ /10/ each | 5 | 10 |
| Ditto Vol. II, Fasc. 2-4 @ 1/4/ | 3 | 12 |
| Vivādaratnākara, Fasc. 1--7 @ /10/ each | 4 | 6 |
| Vṛhat Svayambhū Purāṇa, Fasc. 1--6 @ /10/ each | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 3-5 @ /10/ each | 1 | 14 |
| Yogaśāstra of Hemchandra Vol. I. Fasc. 1-3 | 3 | 12 |
| *Tibetan Series.* | | |
| Baudhyastotrasangraha, Vol. I ( Tib. & Sans. ) | 2 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Nyayabindu of Dharmakirti, Fasc. 1 | 1 | 0 |
| Pag-Sam S'hi Tiñ, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Rtogs brjod dpag hkhri S'iñ ( Tib. & Sans. Avadāna Kalpalata ) Vol. I, Fasc. 1--8 ; Vol. II. Fasc. 1--7 @ 1/- each | 15 | 0 |
| Sher-Phyin, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc 1-6, @ 1/- each | 14 | 0 |
| *Arabic and Persian Series.* | | |
| Ālamgīrnāmah, with Index, (Text) Fasc. 1--13 @ /10/ each | 8 | 2 |
| Al-Muqaddasi (English) Vol. I, Fasc. 1--4 @ 1/- each | 4 | 0 |
| Akbarnāmah, with Index, Fasc. 1--37 @ 1/8/ each | 55 | 8 |

* The other Fasciculi of these works are out of stock and complete copies [illegible]

| | Rs. | As. |
|---|---|---|
| Ditto [illegible] | [illegible] | 0 |
| Ditto (English) Vol. I, Fasc. 1-[illegible] @ [illegible] each | [illegible] | 0 |
| Arabic Bibliography, by Dr. A. Sprenger, @ /10/ | [illegible] | 10 |
| Badshahnamah, with Index, Fasc. 1-19 @ /10/ each | 11 | 14 |
| Conquest of Syria, Fasc. 1-9 @ /10/ each ... Rs. | 5 | 10 |
| Catalogue of Arabic Books and Manuscripts, 1-2 @ 1/- each | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... | 3 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix, Fasc. 1-21 @ 1/8/ each | 31 | 8 |
| Farhang-i-Rashidi, Fasc. 1-14 @ 1/8/ each ... | 21 | 0 |
| Fihrist-i-Tusi, or, Tusy's list of Shy'ah Books, Fasc. 1-4 @ 1/- each ... | 4 | 0 |
| Futuh-ush-Sham of Waqidi, Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Ditto of Azadi, Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| History of Gujarat ... | 1 | 0 |
| Haft Asman, History of the Persian Masnawi, Fasc. 1 @ /12/ each ... | 0 | 12 |
| History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... | 7 | 8 |
| Iqbalnamah-i-Jahangiri, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Isabah, with Supplement, 51 Fasc. @ 1/- each ... | 51 | 0 |
| Ma'asir-i-Alamgiri, Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Maa'asir-ul-Umara, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-9; Vol III, 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12 @ /1/ each ... | 35 | 0 |
| Maghazi of Waqidi, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| Marhamu 'L-Ilali 'L-Mu'Dila ... | 1 | 0 |
| Muntakhabu-t-Tawarikh, Fasc. 1-15 @ /10/ each ... | 9 | 6 |
| Ditto (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc 1 @ 1/ each ... | 16 | 0 |
| Muntakhabu-l-Lubab, Fasc. 1-19 @ /10/ each ... | 11 | 14 |
| Ditto Part 3, Fasc. 1 ... | 1 | 0 |
| Nukhbatu-l-Fikr, Fasc. 1 @ /10/ ... | 0 | 10 |
| Nizami's Khiradnamah-i-Iskandari, Fasc. 1-2 @ /12/ each ... | 1 | 8 |
| Qawaninu 's-Sayyad of Khuda Yar Khan 'Abbasi, edited in the original Persian with English notes by Lieut. Col. D. C. Phillott ... | 5 | 0 |
| Riyazu-s-Salatin, Fasc 1-5 @ /10/ each ... | 3 | [illegible] |
| Ditto (English) Fasc. 1-5 @ 1/ ... | 5 | 0 |
| Tadhkira-i-khushnavisan ... | 1 | 0 |
| Tabaqat-i-Nasiri, (English), Fasc. 1-14 @ 1/- each ... | 14 | 0 |
| Ditto Index. ... | [illegible] | 0 |
| Tarikh-i-Firuz Shahi of Ziyau-d-din Barni Fasc. 1-7 @ /10/ each ... | 4 | 6 |
| Tarikh-i-Firuzshahi, of Shams-i-Siraj Aif. Fasc 1-6 @ /10/ each ... | 3 | 12 |
| Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... | 3 | [illegible] |
| Tuzuk-i-Jahangiri, (Eng) Fasc. 1 @ 1/ ... | 1 | [illegible] |
| Wis-o-Ramin, Fasc. 1-5 @ /10/ each ... | 3 | [illegible] |
| Zafarnamah, Vol. I, Fasc. 1-9, Vol. II, Fasc. 1-8 @ /10/ each ... | [illegible] | 10 |

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. XIX and XX @ 10/ each ... 20
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7), 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members

*N. B.—The figures enclosed in brakets give the number of Nos. in each Volume.*

4. Journal and Proceedings, N. S., 1905, to date (Nos. 1-4 of 1905 are out of stock), @ 1-8 per No. to Members and Rs. 2 per No. to Non-Members.
5. Memoirs, 1905, to date. Price varies from number to number. Discount of 25% to Members
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 [illegible]
7. Catalogue of the Library of the Asiatic Society, Bengal, 1910, ... 3 [illegible]
8. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I-III, with 8 coloured Plates, 4to. @ 6/ each ... 18 [illegible]
9. Kacmiracabdamrta, Parts I & II @ 1/8/ ... 3 [illegible]
10. Persian Translation of Haji Baba of Ispahan, by Haji Shaikh Ahmad-i-Kirmani, and edited with notes by Major D. C. Phillott ... 10 [illegible]

---

Notices of Sanskrit Manuscripts, Fasc. 1-34 @ 1/ each ... 34 [illegible]

Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra ... [illegible]

N. B.—All Cheques, Money Orders, &c. must be made payable to the [illegible]

BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL

NEW SERIES No. 1342.

किरणावली ।




# KIRAṆĀVALĪ

BY

## UDAYANACARYYA

WITH THE COMMENTARY OF VARDHAMANOPADHYAYA

EDITED BY

MAHĀMAHOPĀDHYĀYA SIVA CHANDRA SĀRVVABHOUMA.

FASCICULUS III

Calcutta:

PRINTED BY UPENDRA NATHA CHAKRAVARTI, AT THE SANSKRIT PRESS.

No. 5 Nandakumar Chawdhuri's 2nd Lane

AND PUBLISHED BY THE

ASIATIC SOCIETY, 1 PARK STREET

1912.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL.

No. 1, PARK STREET, CACUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS, MR. BERNARD QUARITCH, 11, GRAFTON STREET, NEW BOND STREET, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied.—some of the Fasciculi being out of stock*

## BIBLIOTHECA INDICA.

*Sanskrit Series*

| | Rs. | |
|---|---|---|
| Advaitachintā Kaustubha, Fasc. 1-3 @ /10/ each .. | 1 | 14 |
| Aitareya Brahmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc 1-5; Vol. III, Fasc 1-5, Vol. IV, Fasc 1-8 @ /10/ each ... | 14 | 6 |
| Aitereya Lochana ... | 2 | 0 |
| Amarkosha, Fasc 1 ... | 2 | 0 |
| *Aṇu Bhāṣhya, Fasc 2-5 @ /10/ each .. | 2 | 8 |
| Anumana Didhiti Prasarini, Fasc. 1 @ /10/- | 1 | 1 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Atmatattaviveka, Fasc I ... | 0 | 10 |
| Açvavaidyaka, Fasc 1-5 @ /10/ each | 3 | 2 |
| Avadana Kalpalatā, (Sans and Tibetan) Vol I, Fasc 1-10; Vol II, Fasc 1-10 @ 1/ each | 20 | 0 |
| Bālam Bhatti, Vol I, Fasc 1-2, Vol II, Fasc 1 @ /10/ each ... | 1 | 14 |
| Baudhāyana S'rauta Sūtra, Fasc 1-3 Vol II, Fasc 1-5 @ /10/ each | 5 | 0 |
| Bhāsavritty ... | 0 | 10 |
| Bhatta Dipika Vol 1, Fasc 1-6 Vol 2, Fasc 1, @ /10 each .. | 4 | 6 |
| Bauddhastotrasangraha .. | 2 | 0 |
| Bṛhaddevata Fasc 1-4 @ /10 each ... | 2 | 8 |
| Bṛhaddharma Purana Fasc 1-6 @ /10 each ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntideva, Fasc 1-6 @ /10/ each .. | 3 | 12 |
| Cri Cantinatna Charita, Fasc 1-3 ... | 1 | 14 |
| Çataduṣaṇī, Fasc 1-2 @ /10/ each | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2 each | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I, Fasc 1-7, Vol II, Fasc 1-5, Vol. III, Fasc 1-7 Vol V, Fasc 1-4 @ /10/ each | 14 | 6 |
| Ditto Vol. VI, Fasc 1-3 @ 1/4/ each .. | 3 | 2 |
| Ditto Vol VII, Fasc 1-5 @ /10/ .. | 3 | 2 |
| Ditto Vol IX, Fasc 1-2 ... | 1 | 4 |
| Çatasāhasrikā Prajnāpāramitā Part I, Fasc 1-17 @ /10/ each | 10 | 10 |
| *Caturvarga Chintamani, Vol II, Fasc 1-25, Vol III Part I, Fasc 1-18 Part II, Fasc 1-10 Vol IV Fasc 1-6 @ /10 each .. | 36 | 14 |
| Ditto Vol IV, Fasc 7-8, @ 1/4 each | 2 | 8 |
| Ditto Vol IV, Fasc 9-10 @ /10/ | 1 | 4 |
| Çlockavartika (English) Fasc 1-7 @ 1/4/ each | 8 | 12 |
| *Çrauta Sūtra of Çānkhāyana, Vol I, Fasc 1-7, Vol. II, Fasc 1-4; Vol III, Fasc 1-4, Vol 4, Fasc 1 @ /10/ each | 10 | 0 |
| Çri Bhāshyam, Fasc 1-3 @ /10/ each | 1 | 14 |
| Dāna Kriyā Kaumudi, Fasc 1-2 @ /10/ each .. | 1 | 4 |
| Gadadhara Paddhati Kālasāra Vol I, Fasc 1-7 @ /10/ each | 4 | 6 |
| Ditto Āchārasārah Vol II, Fasc 1-4 @ /10/ each .. | 3 | 2 |
| Gobhiliya Grihya Sutra, Vol I @ /10 each ... | 3 | 2 |
| Ditto Vol II Fasc. 1-2 @ 1/4 each ... | 2 | 8 |
| Ditto (Appendix) Gobhila Parisista ... | 2 | 0 |
| Ditto Grihya Sangraha ... | 0 | 10 |
| Haralata ... | 1 | 14 |
| Karmapradipā, Fasc I ... | 1 | 4 |
| Kāla Viveka, Fasc 1-7 @ /10/ each .. | 4 | 6 |
| Kātantra Fasc 1-6 @ /12 each ... | 4 | 8 |
| *Kurma Purāṇa, Fasc 3-9 @ /10 each ... | 5 | 10 |
| Kiranavali, Fasc 1-2 @ /10 each ... | 1 | 4 |
| Madana Pārijāta, Fasc 1-11 @ /10 each | 6 | 14 |
| Mahā-bhāṣya-pradipōdyōta, Vol. I, Fasc 1-9; Vol II, Fasc. 1-12 Vol III, Fasc 1-10 @ /10/ each ... | 19 | 6 |
| Ditto Vol IV, fasc 1 @ 1/4 .. | 2 | 8 |
| Manutikā Sangraha, Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Mārkaṇḍēya Purāṇa, (English) Fasc. 1-9 @ 1/- each .. | 9 | 0 |
| *Mimāmsā Darçana, Fasc. 10-19 @ /10 each ... | 6 | 4 |
| *Mugdhabodha Vyakarana, Fasc. 1-4 @ /10/ each ... | 2 | 8 |

पृथिवीत्वनिमित्ताक्रान्ते व्याप्यावच्छेदभेदव्यावृत्त्या व्यावृत्तिः क्वचिन्न सिद्धेति पुनरप्रसिद्धविशेषणत्व मायातमिति चेन्न। पक्षसम्बन्धिनो विशेषस्य सर्व्वत्राप्रमितस्यैव साध्यत्वात्। प्रसिद्धो हि धर्म्मो धर्म्मिणा सन्वेति। न तु धर्म्मान्विततयैव प्रसिद्धः साध्यते। तथासति साधनवैयर्थ्यादिति। तथापि घटादौ चेदितरव्यावृत्तिः प्रत्यक्षसिद्धा ततः दृष्टान्तवर्त्तिनान्वयादेव परमाणवादौ साध्यता किं घटादिकमपि पक्षे निक्षिप्य

आह। एवमिति। व्याप्तत्वस्यैव व्याख्यानमवच्छेदेति। अवच्छेदो भेदो घटत्वपटत्वादिरित्यर्थः। तस्य व्यावृत्त्या राहित्येन लक्षिता व्यावृत्तिरित्यर्थः।

ननु पृथिवी इतरभिन्ना, पृथिवीत्वात घटवदित्यन्वयिनैवेतरभेदसिद्धे व्यतिरेकिवैयर्थ्यमित्याह। तथापीति। घट साधारण्येन पक्षत्वे पक्षस्याभेदानुमानवत् दृष्टान्तत्वाविरोधः। पक्षान्यत्वं हि तत्रातन्त्रम्। साध्यसाधनवत्तया निश्चितत्वस्यैव तत्र प्रयोजकत्वादितिभावः। अन्वयिसम्भवेऽन्वयव्याप्तेरग्रहे (२१६) केवल

(२१६) अन्वयव्याप्तिग्रह इति। अग्रह इत्युपलक्षणम्। यद्यप्यनुमितया व्यतिरेकिप्रवृत्तेरन्यत्र तत्सामर्थ्यावधारणात्। यद्यप्यत्र व्यतिरेकसहचारादन्वय व्याप्तिग्रहपक्षतावच्छेदनादन्वयव्याप्त्यप्रतिसन्धानमशक्य तथापि व्यतिरेकव्याप्तिग्रहसकृतापक्षसाधर्म्यैस्तदुक्तम्। उक्तसाध्यप्रकारस्याकाशादावनुभवात् सर्व्वव्यापकं

व्यतिरेक्याद्रियत इति चेत् । आस्तां तावदयं सुहृदुपदेशः । केवलव्यतिरेकिलक्षणं निर्व्यूढम् । व्यवहारसिद्धिर्वा लक्षणप्रयोजनम् । तथाहि विवादाध्यासितं द्रव्यं पृथिवीति व्यवह्रियते लोकेन पृथिवीत्वात् ।

व्यतिरेकिणोऽन्यत्र सामर्थ्यावधारणे नानुमानप्रवृत्तिरित्याह । आस्तामिति ।

अस्मत्पितृचरणास्तु जलादीनां त्रयोदशान्योन्याभावा स्त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते । अतएवाकाशे मिलितजलादिप्रतियोगिकान्योन्याभावप्रतीतावपि व्यतिरेकिणा त्रयोदशान्योन्याभावाः साध्या इति नान्वयित्वात् साधारण्ये वस्तुतस्त्वभावसाध्यके व्यतिरेकिण्यप्रसिद्धमेव साध्यं सिद्ध्यति । यस्याभावस्य हेत्वभावो व्यापको गृहीत स्तस्याभावः पक्षे व्यापकाभावाभावरूपेण साधनेन सिद्ध्यति । व्यापकाभाववत्तया ज्ञाते व्याप्याभावावश्यम्भावात् । तथाहि जलादिव्यापकः पृथिवीत्वाभावो ज्ञात इति तदभावाभावात्मकेन पृथिवीत्वेन पृथिव्यामन्योन्याभावोऽप्रसिद्ध एव सिद्ध्यति । प्रतियोगिज्ञानस्य वृत्तत्वादित्याहुः ।

ननु केवलव्यतिरेकि नानुमानं व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यानुमितिकारणत्वात् । अत्र च व्यतिरेकव्याप्तिरन्वयस्य पक्षत्वात् । न च व्यतिरेकव्याप्त्यान्वयव्याप्तिरनुमीयत इति

---

प्रकारमाह । जलादीनामिति । अत्र प्रत्येकं साध्यतायामसाधारण्यं मिलितसाध्यतायामप्रसिद्धिरित्यादि दूषणं यथा न भवति तथोक्तमनुमानप्रकाशे ।

वाच्यम्। व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः। अन्वयव्याप्तेरेव गमकत्वात्। अन्वयव्याप्त्यनुकूलतया च तदुपन्यासे अन्वयव्याप्तिमनुपन्यस्य व्यतिरेकव्याप्तेरप्राप्तकालत्वात्। मैवम्। व्यतिरेकसहचारेणान्वयव्याप्तेरेव ग्रहात्। प्रतियोग्यनुयोगिभावस्य नियामकत्वात्। अन्यथान्वयव्यतिरेकिणि का गतिरिति संक्षेपः।

व्यवहारसिद्धिर्वेति। ननु पृथिवीव्यवहारः पृथिवीपदप्रयोगविषयत्वं पृथिवीपदजन्यज्ञानविषयत्वं पृथिवीपदवाच्यत्वं वा पृथिवीत्वेऽप्यस्तीति ततो हेतुव्यावृत्तावसाधारण्यम्। मैवम्। पृथिवीत्वेन निमित्तेन पृथिवीशब्दाभिधेयत्वस्य तद्व्यवहारार्थत्वात्।

जलादेरिति जलत्वादेरित्यर्थः। एवञ्च यथान्योन्याभावसिद्धिस्तथोक्तमनुमानप्र...े। प्रतियोगीति। ययोः सहचारग्रहस्तदभावयोर्व्याप्तिग्रह इत्यर्थः। न तु यदभावयोः सहचारग्रहस्तयोरिति। अन्यथा यत्रेतरभेदाभावस्तत्र पृथिव्यन्योन्याभाव इति सहचारग्रहेण पृथिव्यन्योन्याभावाभावात्मकपृथिवीत्वस्येतरभेदव्याप्यत्वं न स्यादित्याहुः।

यद्येवमुपन्यस्तासिद्धिसाध्यकोऽनुमानविरोधः। साध्याप्रसिद्धावन्वयव्याप्तिग्रहासम्भवात्। तथापि व्यतिरेकव्याप्तिगमकत्वपक्षमाश्रित्य तदुक्तमिति मन्तव्यम्।

अन्वयेति। यदि व्यतिरेकव्याप्तेरन्वयपक्षतासहकारित्वेन मानान्तरानुकूलत्वं तदा परस्परविरोधिनान्वयव्यतिरेकिणि फलासिद्धिप्रसङ्गः। कार्य्यस्य एवान्योन्यसहकारित्वात्। तस्मात् तत्रापीयमेव गतिरनुसरणीयेति भाव इत्येके।

व्यतिरेकसहचारस्यान्वयव्याप्तिग्राहकत्वे धूमसहचारमात्रदर्शनदशायां साध्य-

यत् पुनः पृथिवीति न व्यवह्रियते न सा पृथिवी यथा वाय्वादि । न चेयं न पृथिवी तस्मान्न तथा व्यवह्रियते इति । अत्रापि व्यवहारविषयस्य स्वरूपतः सिद्धे नाश्रयासिद्धिः । पृथिवीव्यवहारस्य सम्मुग्धस्य सिद्धेः नाप्यसिद्धिविशेषणत्वम् । व्याप्त्या निमित्त-विशेषणवतः साध्यत्वान्न साधनवैयर्थ्यम् । सर्व्व-पृथिवीपक्षीकरणे च नान्वयित्वम् । यद् यस्यान्वय-व्यतिरेकावनुविधत्ते तत्तद्धेतुकं यथा घटादि मृदादि-हेतुकम् । अनुविधत्ते च पृथिवीव्यवहारः पृथिवी-त्वस्यान्वयव्यतिरेकाविति चेत् । न । पृथिवीत्व-निमित्तकत्वे पृथिवीव्यवहारस्य साध्ये अन्वयाभा-वात् । केवलं सर्व्वनामशब्देन व्यवहारमात्रेण वक्रो-

क्तित्वं तद्ग्राहकाभावात् । न व्यतिरेकित्वमसत्प्रतिपक्ष इति मते सत्प्रतिपक्षता-दशायां तदभावात् । तस्मात् तत्र व्यतिरेकसहचारेणैवान्वयव्याप्तिग्रहादन्वय व्यतिरेकित्वमिति भाव इत्यन्ये ।

पृथिवीत्वेनेति । यद्यपि पृथिवीत्वं प्रवृत्तिनिमित्तकं पृथिवीशब्दाभिधेयत्वं पृथिवीत्वेऽप्यस्तीति दोषतादवस्थ्यं तथापि पृथिवीत्वांशे न पृथिवीत्वं प्रवृत्तिनिमित्त-मिति भावः । न च साध्याप्रसिद्धिः । घटादौ पृथिवीपदप्रयोगः किञ्चिन्निमित्तक इत्यनुमानेन घटत्वादेरननुगततया द्रव्यत्वादेरतिप्रसक्तितया गन्धवत्त्वादेश्चोपाधि-तया गुरुत्वेन बाधात् पक्षधर्म्मताबलात् पृथिवीत्वनिमित्तकसिद्धेः । न चैवं व्यतिरेकिवैयर्थ्यं पृथिवीत्वावच्छेदेन तत्प्रकारकबुद्धेरुद्देश्याया असिद्धे-रिति भावः ।

ऽयमन्वयः। स च व्यतिरेकान्न भिद्यते विवक्षाभेदादिति। यत् पुनराह भूषणो लक्षणं चिह्नं लिङ्गमिति पर्य्यायाः तदसद्व्यावृत्तौ व्यवहारे च साध्येऽन्वयिनोऽनवकाशात्। व्युत्पन्नस्य स्वयमेव व्यवहारात्। अव्युत्पन्नस्य सपक्षपरिचयाभावात्। कथं तर्हि शास्त्रे क्रियावत् द्रव्यमिति द्रव्यलक्षणेषु पठ्यते। द्रव्यस्यैवाय मसाधारणो धर्म्मः समवायिकारणत्ववत् गुणवत्त्ववच्चेति प्रतिपादनार्थम्। न

केवलमिति। न हि यत्त्वं तत्त्वं वानुगतमिति व्यतिरेकव्याप्तिग्रहमुपजीव्य सर्व्वनाम्नान्वयाभिधानमेव वक्तव्यार्थः। लक्षणस्य केवलव्यतिरेकित्वमविदुषा भूषणेनान्वयव्यतिरेकित्वमभ्युपेत्यापादितं दूषण(११७)मुपन्यस्यति। यत्पुनरिति। यद्यप्यास्तां तावदित्यादिना घटान्यपक्षीकरणे घटदृष्टान्तेनान्वयी स्वीकृत एवेति विरोध स्तथापि पृथिवीत्वावच्छिन्नयावत्पक्षीकरणे नान्वयिनोऽवकाश इति भावः।

(११७) दूषणमिति। धूमादिनिरूपकदृष्टान्ताभावान्नानुमानमित्यादि दूषणमित्यर्थः। यद्यप्येतद्दूषणं मूले नोपन्यस्तमितीदं दूषणमुपन्यस्यतीत्ययुक्तं तथापि तात्पर्य्यार्थकीर्त्तनेन तदभिप्रेतमिति कृत्वा तथोक्तम।

अवकाश इति। यद्यपि पक्षे दृष्टान्ततायाः व्यवस्थापितत्वान्नानवकाशस्तथापि पक्षातिरिक्तस्यैव दृष्टान्तत्वमिति मतेनेदम्। अन्वयास्फुरणदशायामिदमुक्तमित्यन्ये।

तु लक्षणत्वेन द्रव्यमात्रं पक्षीकृत्य व्यावृत्तिसाधने भागासिद्धत्वात्। मूर्त्तद्रव्यमात्रपक्षीकरणेऽप्यसाधारणत्वात्।

तस्माद्वायुमनसोरप्रत्यक्षत्वेन द्रव्यत्वविप्रतिपत्तौ क्रियावत्त्वेन तत्प्रसाध्य भागासिद्धिः परिहरणीयेति तस्य तात्पर्य्यम्। ये तु प्रमाणमेव सर्व्वस्य व्यवस्थापकं न तु लक्षणं तदपेक्षायामनवस्थामाहुः तेषां निन्दामि च पिबामि चेति न्यायः। यतोऽव्याप्त्यतिव्याप्तिविर-

असाधारण्यादिति। गुणादिभ्यो व्यावृत्तिसाधने गगनाख्य सपक्षाद्व्यावृत्तत्वादित्यर्थः।

तदपेक्षायामिति। लक्षणेऽपि लक्षणापेक्षयामित्यर्थः। स इति (११८)। लक्षणरूपोऽर्थोऽनुवादो न त्वपूर्व्वार्थप्रापको मानान्तरप्रमितार्थप्रापकत्वादित्यर्थः। नात्र सर्व्वधर्म्माव्युत्पन्न एव व्युत्पाद्यः किन्तु मानान्तरेण ज्ञातो लक्षणत्वेनोपदिश्यते। वैद्यक-

(११८) लिङ्गामङ्गति मुद्गरात। लक्षणरूप इति। अगृहीतप्राहित्व एव प्रमाणत्वात्र प्रमाणमिति भावः। अस्माकमपीति मूलम्। तथाच गृहीतग्राहित्वेऽपि धारावाहिकादिवन्नाप्रामाण्यम। किन्त्वसदर्थग्राहित्वेनैव तथात्वम्। तच्च प्रकृते नास्तीति नाप्रामाण्यमिति भावः। तदेवाह। न ह्यलौकिकमिति। अप्रमितमित्यर्थः।

मानान्तरेणेति। ननु लक्षणान्तरेणैव ज्ञातो येन तत्रापि तदपेक्षा स्यादिति भावः।

हेण तत्तदर्थव्यवस्थापकं तत्तद्व्यवहारे व्यवहारव्यवस्थापकं प्रमाणमुपादत्ते तदेव लक्षणम्। अनुवादः स इति चेत्। अस्माकमप्यनुवाद एव। न ह्यलौकिकमेव किञ्चिदुच्यते। न चानवस्था वैद्यकशास्त्रादौ रोगादिलक्षणवत्। व्याकरणादौ शब्दादिलक्षणवच्चेति व्यवस्थोपपत्तेः। तत्रापि सम्बन्धव्यवहारमाश्रित्य लक्षणेनैवोत्पत्तेरिति। क्षित्युदकात्मनां चतुर्दशगुणवत्त्वमिति साधर्म्म्यमुक्तम्। तत्र के ते चतुर्दशगुणाः पृथिव्या मत आह। रूपेत्यादि। न तु गन्धसाहचर्य्याद्रूपादयोऽप्यसाधारणतामापन्ना इति युक्तम्। केवलस्यैव गन्धस्यासाधारणत्वे विशेषणसामर्थ्यात्। एतच्चानुपदमेव स्फुटयिष्यति।

---

वहा व्याकरणवहा। तच्छास्त्रादेव ज्ञातेन धर्म्मेण तत्र व्यवस्था स्यादेवेति नानवस्थेत्याह। न चेति। यः खलु शिष्यः स्वयं लक्षणं जानन्नपि इतरव्यावृत्तिं न जानाति तं प्रति लक्षणोपदेशो न तु सर्व्वथैवानभिज्ञं प्रति इत्याह। तत्रापीति। के ते इति। तथाच शिष्यशिक्षानुरोधादेतदुक्तं न तु लक्षणत्वेन रूपादेरतिव्यापकत्वादित्यर्थः। न च गन्धसमानाधिकरणं विशेषणं विशेष्यवैयर्थ्यादित्याह। न त्विति। विशेष्यत इति व्युत्पत्त्या रूपाद्येव

एष सूत्रकारसम्मतिमाह। एते चेति। गुणानां विनिवेशो द्रव्येषु समवायः। स प्रतिपाद्यत्वेनाधिक्रियते अस्मिन्निति गुणविनिवेशाधिकारो द्वितीयोऽध्यायः। तथाच सूत्रम्। तत्र रूपरसगन्धस्पर्शवती पृथिवी इति सूत्रकारवचनात् रूपादयः सिद्धाः। संख्यादौ सूत्रकारसम्मतिमाह। चाक्षुषवचनात् सप्त संख्यादय इति। संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म्म च रूपिद्रव्यसमवायात् चाक्षुषाणि इति सूत्रे संख्यादीनां चाक्षुषत्वे हेतुत्वेन रूपिद्रव्यसमवाय उक्तः। न चासिद्धस्य हेतुत्वमतस्तेऽपि रूपवत्यां पृथिव्यां सप्त सिद्धाः। एतेनोपदेशाद्गुरुत्वमिति संयोगवेगप्रयत्नाभावे गुरुत्वात् पतनमिति पतने गुरुत्वस्य हेतोरुपदेशात्। पतनवत्यां पृथिव्यां गुरुत्वमपि सिद्धम्। न ह्यसिद्धस्य हेतुत्वं नापि व्यधिकरणस्य कर्म्मासमवायिकारणत्वम्। नोदनादिषु विपर्य्यासदर्शनादिति। अद्भिः सामान्यवचनात् द्रवत्वमिति सर्पिर्जतुमधूच्छिष्टानां पार्थिवाना-

विशेष्यं विशेषणमुक्तम्। अनुपदमिति। च्छिताविव गन्धो वर्त्तते इत्यन्वेत्यर्थः।

मग्निसंयोगात् द्रवत्वमद्भिः सामान्यमिति सूत्रे सर्पि- रादीनां द्रवत्वमद्भिः समानो धर्म्म इत्युक्तम्। अतो द्रवत्वं सिद्धम्।

उत्तरकर्म्मवचनात् संस्कार इति। नोदनाद्य- मिषोः कर्म्म। तत्कर्म्मकारिता च संस्कारादुत्तरम्। तथोत्तरमुत्तरञ्चेति सूत्रे। इषुकर्म्मोपदेशेन पार्थिव- द्रव्यस्य उत्तरस्मिन् कर्म्मणि संस्कारः कारणतयोक्तः। अतः सोऽपि सिद्धः। उपलक्षणञ्चैतत्। आद्यकर्म्म- कार्य्यतयाप्युक्तः। तत्रैव सिद्ध इत्यपि द्रष्टव्यम्। तदनेन सूत्रकारसम्मतिप्रदर्शनव्याजेन सर्व्वत्र प्रमाणं दर्शितम्। तथाहि रूपादिष्वेकादशसु प्रत्यक्षं पतन- लिङ्गकमनुमानं गुरुत्वे। अग्निसंयोगान्वयव्यतिरेका-

नोदनादिष्विति। व्यधिकरणत्वस्य विपर्य्यासः सामानाधि- करण्यमित्यर्थः।

पतनलिङ्गकमिति। (११८) गन्धवत्वधःसंयोगफलिका क्रिया सा समवायिकारणिका क्रियात्वात्। सम्प्रतिपन्नवदिति। न च तेजस्यगुरुण्यपि तद्दर्शनात् व्यभिचारः। न च रसेनार्थान्तरम्। रसोत्कर्षेण पतनोत्कर्षाभावात्। ननु क्षीरे पार्थिवे संयुक्तसमवायात्

(११८) ननु पतनलिङ्गकमित्युक्तम्। गुरुत्वस्य साध्यस्याप्रसिद्धेः। तेजसि व्यभिचाराच्चेत्यतो व्याचष्टे। गन्धवतीति। अधःसंयोगफलिका क्रियायाः सम-

नुविधायितया नेदमिह चीरादिवत्संयुक्तसमवायेनान्यस्येति प्रत्यक्षमेव सोपपत्तिकं द्रवत्वे । निरन्तरगतिमन्तान एव वेगव्यवहारहेतुरिति दृढरूढविप्रतिपत्तिव्युदासायाकार्य्यलिङ्गकमनुमानं संस्कार इति । एवं गुणवत्त्वेन द्रव्यत्वे व्यवस्थिते पृथिवीत्वव्यवस्थाहेतून्

---

द्रवत्वे प्रत्यक्षघृतादिष्वपि तदुपपत्स्यत इत्यत आह । सोपपत्तिकमिति । तथात्वे तद्देवाग्निसंयोगान्वयव्यतिरेकानुविधानात तत्र न स्यादित्यर्थः । कार्य्यलिङ्गकमिति । नोदनाभिघाताजन्यद्वितीय कर्म्मासमवायिकारणकं कर्म्मत्वात् । आद्यकर्म्मवत् । न च

वायिकारणत्वेनार्थान्तरवारणाय गन्धवतीत्युक्तम् । यदि वेगेनाप्यधःसंयोगफलिका क्रिया जन्यते तदा तदजन्यत्वमपि क्रियाविशेषणम । तेन न तेनार्थान्तरम् । रसेनेति रसादिनेत्यर्थः । रसोत्कर्षेणेति रसाद्युत्कर्षेणेत्यर्थः । तथाच परिशेषाद्गुरुत्वसिद्धिरितिभावः ।

नोदनेति । गुरुत्वादिनार्थान्तरवारणाय द्वितीयमिति । गुरुत्वद्रवत्वाद्यजन्यमित्यर्थः । कर्म्मवतीति । न च पूर्व्वकर्म्मनाशकाले तदुत्पादोऽस्तु पूर्व्ववर्त्तितामात्रेण हेतुत्वादिति वाच्यम् । असमवायिकारणस्य कार्य्यसहभूतस्य हेतुत्वादिति ।

ननु कर्म्मवति कर्म्मोत्पादे को विरोधः । अथ नानाविधपुरुषसाधारणकार्य्यमात्रस्य स्वसमानजातीयोत्पत्तिप्रतिबन्धकत्वमत एव रूपादौ तथा नियमो न द्वित्वादाविति चेत् । एवं सति शब्दवति शब्दोत्पादो न स्यादिति तत्रापि गुणान्तरं कल्पेत । एवं संयोगादिमति तदुत्पादो न स्यात् । न च शब्दस्य स्वकर्णावच्छेदेनोत्पन्नस्यैव ग्रहणान्नानापुरुषसाधारणत्वम् । एकस्यापि शब्दस्य नानापुरुषकर्णावच्छेदेनोत्पादसम्भवात् । तस्मादत्र बीजं चिन्त्यमिति ।

गुणविशेषानाकृष्य दर्शयति। क्षिताविव गन्धो वर्त्तते न द्रव्यान्तरे । तेन गन्धसमवायः पृथिवीत्वव्यवस्थाहेतुरित्युक्तं भवति। यत्तु सुगन्धि सलिलं सुरभिः समीरण इति तत्पार्थिवकुसुमाधिवासनिबन्धनम् । तदन्वयव्यतिरेकानुविधानात् । न तु स्वभावत इत्यवधेयम् ।

ननु तथाप्यव्यापको गन्धः क्षितेः । वक्ष्यमाणेषु मणिवज्रादिष्वनुपलब्धेः । तत्कथं तद्व्यवस्थाहेतुः । न । पाकेन पूर्व्वरूपनिवृत्तौ रूपान्तरोत्पत्तौ च पाकजरूपस्य च गन्धसहचारतया तत्रापि तदनुमानात् । अनुभवात् तदनुपलम्भः । तत्र घ्राण इवेत्यभिप्रायवानाह । रूपमनेकप्रकारं शुक्लादि क्षिताविव इत्यनु-

कर्म्मणार्थान्तरम् । कर्म्मवति कर्म्मान्तरानुत्पत्तेरित्यर्थः । तदन्वयेति । तथाच तेनैव गन्धधो रन्यथासिद्धेत्यर्थः । विवादपदं गन्धः पृथिवीवृत्तिः गन्धत्वात् पुष्पगन्धवदिति तत्र मानमाहुः ।

नन्विति । तथात्वे उपाध्यन्वयाद्यनुविधानं न स्यादित्यर्थः ।' (१२०) पृथिवीपदप्रवृत्तिनिमित्तञ्च पृथिवीत्वं जातिरेव न तु गन्धवत्त्वं गौरवात् । गन्धेति । गन्धसहचरितता गन्धव्याप्यत्वं

(१२०) नन्वेवं गन्धस्य पृथिवीमात्रवृत्तित्वे गन्धवत्त्वमेव पृथिवीपदप्रवृत्तिनिमित्तं स्यान्न पृथिवीत्वं इत्यत आह । पृथिवीपदेति । केचिन्त्विदमि पृथिवीत्वस्य जातित्वसाधकमित्यभिप्रायेणैतदुक्तमित्याहुः ।

वर्त्तते । यद्यपि शुक्लादिरूपं समुच्चयेन सम्भवति । स हि जातिसमुच्चयो विरोधादेवानुपपन्नः । व्यक्ति-समुच्चयोऽपि न । व्याप्यानुपलम्भबाधितत्वात् । नाप्य-व्याप्या । व्याप्यवृत्तिजातीयताविरोधात् । किमेत-

---

च्चिताविव इति तोयतेजसोः शुक्लरूपनियमादित्यर्थः । स हीति । एकत्र रूपे शुक्लत्वनीलत्वजातिसमुच्चय इत्यर्थः । व्याप्येति । नाना-रूपव्यक्तयो नैकद्रव्यव्यक्तौ व्याप्यवृत्तय इत्यर्थः । व्याप्यवृत्तीति । न चाव्याप्यवृत्तिभावनास्मदादिज्ञानादौ व्याप्यवृत्तिवेगस्थिति-स्थापकेश्वरज्ञानादौ वर्त्तमानाभ्यां संस्कारत्वज्ञानत्वादिभ्यां व्यभि-चारः शुक्लत्वादिसामान्यं यद्यव्याप्यवृत्तिमूर्त्तगुणवृत्तिगुणत्वव्याप्य-जातिः स्यात् व्याप्यवृत्तिः न स्यात् । संयोगवत्त्ववदित्यर्थात् । न चाप्रयोजकत्वम् । एकं चित्रं रूपमित्यनुभवात् । न चायं भ्रमो बाधकाभावात् । न च गुणविरोधादनारम्भो बाधकः ।

---

संस्कारत्वेति । एतदुभयमादाय तदुभयाधिकरणे व्यभिचार इत्यर्थः ।

शुक्लत्वादिति । गन्धत्वे व्यभिचारादाह । व्याप्यवृत्तीति गुणविशेषणम् । संस्कारत्वज्ञानत्वयोर्व्यभिचारादाह । मूर्त्तेति । सत्तागुणत्वव्यभिचारादाह । गुणत्वव्याप्येति । संयोगान्यतरत्वे व्यभिचारादाह । जातीति । न च गुण-विरोधादिति शुक्लेन शुक्लमेव नीलेन नीलमेवारभ्यते इत्यत्र दर्शनादत्रापि शुक्ला-दिना सजातीयमेवारभ्यमित्यवयविनि नानारूपासिद्धौ सिद्धमव्याप्यवृत्तित्वमिति शङ्कार्थः । अनारम्भो विजातीयानारम्भः । विजातीयेति । विजातीयरूपसहकृतस्य च विजातीयचित्ररूपारम्भकत्वं स्यादेवेत्यर्थः ।

त्तर्हि रूपमिति। यथा शुक्लमिति शुक्लजातीयं तथा चित्रमिति चित्रजातीयं व्याप्यवृत्त्येव। प्रत्येकञ्च न

विजातीयरूपासहकृतत्वैव नीलादे र्नीलाद्यारम्भकतया गुणविरोधाभावात् अधिकन्तु न्यायचतुर्थाध्यायप्रकाशे उक्तम्।

किमेतदिति। यद्यनेकरूपसमवायित्वं न चित्रत्वमिति शेषः। यथेति। चित्रशब्दो न नानावर्णवचनः किन्तु शुक्लत्वादिवच्चित्रत्वमप्येकरूपव्यक्तिवृत्तिजातिरिति कर्ब्बुरार्थे इत्यर्थः। ननु यथा गुणविरोधेन गन्धवन्निर्गन्धाभ्यां नैकं द्रव्यमारभ्यते तथा नीलपीताभ्यामप्येकरूपानारम्भे नीरूप एवावयव्यस्तु। न चावयविनो प्रत्यक्षत्वापत्तिः। महत्त्वे सत्युद्भूतरूपसमवेतत्वस्यैव द्रव्यचाक्षुषत्वे प्रयोजकत्वात्। मैवम्। यत्र चित्ररूपादवयवारब्ध एवावयवी तत्र रूपवत्त्वसमवेतत्वाभावे तत्त्वाभावात्। न च

ननु नीलादेर्नीलाद्यारम्भकत्वे विजातीयरूपासहकृतत्वं विशेषणगुर्वित्यनुशयेनाह। अधिकन्त्विति। शुक्लत्वाञ्चित्रजातिरनुभूयमानत्वादवयविनि नाव्याप्यवृत्तिनानारूपसम्भवः। एवञ्च गौरवमपि न्याय्यं प्रामाणिकत्वात्। न च तत्र तदनुभवो भ्रमः। अन्यत्रापि तज्जात्यनभ्युपगमेन तदारोपसम्भवात्। न च नानावर्णत्वमेव चित्रत्वप्रत्ययविषयः। एकत्वनानात्वयोर्विरोधे एकं चित्रं रूपमिति प्रत्ययानुपपत्तेरितिदिक्।

निर्गन्धेति। गन्धेति गन्धयोग्यतारहितजलादिपरमन्यथा गन्धास्वीकारे निर्गन्धरूपाशेनारम्भो न स्यात् इतिभाव इत्याहुः। ननु रूपवदाश्रितत्वं रूपवत्सम्बद्धत्वापेक्षयेत्यपि बोध्यम्। तत्रावयविगतत्वेन चित्ररूपानुभवाच्चावयवी नीरूप इति भावः।

**चितिरवच्छेदहेतु र्भागासिद्धत्वात् । तथापि क्रमेण शुक्लाद्यनेकरूपसमवायलक्षणः समुच्चयः चितावेव ।**

---

तत्रापि रूपवत्परम्पराश्रितत्वमस्तीति युक्तम् । परम्पराया अननुगमात् । रूपसमवेतत्वापेक्षया रूपवत्त्वस्य लघुत्वाच्च । अपिच (१२१) यत्र नीलपीततन्तुभ्यां द्वितन्तुकपटो जन्यते न तत्र तावदेकमेव तन्तुरूपं पटरूपजनकं एकस्याजनकत्वात् । मिथः सहकारित्वं न कार्य्यैकत्वमन्तरेणेति सिद्ध मवयविनि विजातीय-रूपारभ्यमेकं रूपं गुणविरोधादनारम्भस्य निरस्तत्वात् । न चैवं षड्रसा हरीतकीति व्यवहाराच्चित्ररसस्याप्यापत्तेः । तत्रावय-विनो गुणविरोधेन नीरसत्वे बाधकाभावात् । रसनस्य द्रव्या-ग्राहकत्वात् । षड्रसवत्त्वव्यवहारस्य तत्तद्रसजन्योपकारजनकत्व-गुणयोगेनाप्युपपत्तेरिति सङ्क्षेपः ।

नन्ववयविनि क्रमेणापि नानारूपसमवायः । तत्र पाकान-भ्युपगमात् । परमाणौ तत्सम्भवे भागासिद्धेरपरिहारात् । मैवम् । शुक्लनीलादिरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य वि-वक्षितत्वात् ।

---

(१२१) अपि चेति । यद्यप्येतदव्यवहितपूर्व्वपक्षे न लगति तथाप्यव्याप्यवृत्ति-नानारूपसमवायिनीत्यत्र बाधकान्तरमिति मन्तव्यम् ।

एकस्येति । एकस्य रूपादेः रूपाद्यसमवायिकारणत्वाभावादित्यर्थः । तथैव निरुपाधिव्याप्तेरवधारणादिति भावः । न चैकतन्तुकपटे का गतिः तस्यानभ्युप-गमात् । अभ्युपगमे वा अंशुद्वयसंयोगस्यैव तत्रासमवायिकारणत्वाद्रूपद्वयमेव तथेत्यदोषात् । तत्रेति । अतश्च प्रत्यक्षत्वापत्तिर्बाधिकेति भावः । एतेन चित्र

किञ्च शुक्लशुक्लतरशुक्लतमाद्यवान्तरजातिमद्रूपं क्षितावेव नान्यत्र। जलस्य हि शुक्लत्वेऽपि नावान्तरतारतम्यमस्ति। पार्थिवद्रव्यसंसर्गात् तथा प्रतिभासः। एवं तेजसोऽपि शुक्लभास्वरैकस्वभावत्वे स्वाभाविकविशेषाभावः। ये पुनराहुः शुक्लत्वादिकमेव सामान्यं नास्ति कुतस्तदवान्तरतारतम्यम्। एकैका एव

तथापि शुक्लरूपमात्रस्य न लक्षणत्वमित्यत आह। किञ्चेति। (१२२) यद्यपि पृथिवीरूपापेक्षया जलरूपस्य जलरूपापेक्षया पृथिवीरूपस्यातिशयो गृह्यत एव तथापि समानाधिकरणरूपनिष्ठातिशयप्रतियोगिरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजाति-

स्पर्शोऽभ्युपगम्यत इति ध्वनितम्। त्वगिन्द्रियस्य द्रव्यग्राहकतया तज्जन्यद्रव्यप्रत्यक्षतायां उद्भूतस्पर्शवत्त्वस्य प्रयोजकत्वात्। न च तत्राप्युद्भूतरूपत्वमेव तथेति अवयविनो निस्स्पर्शत्वेऽप्यदोष इति वाच्यम्। चन्द्रमादेस्त्वगिन्द्रियप्रत्यक्षत्वापत्तेरिति भावः। एतदेवाभिप्रेत्याह। संक्षेप इति। शुक्लनीलादीति। शुक्लपदं योग्यशुक्लपरम्। प्रत्येकगर्भ नानालक्षणेऽतात्पर्यमिति न वैयर्थ्यम्। साक्षात्पदं न भेदेन व्याप्यतावबोधनपरम्। क्षित्यादिकमादायातिव्याप्तिरिति जातिपदम्।

(१२२) यद्यपीति। यद्यपि जलादिरूपापेक्षयोत्पादिकमफलम्। तथापि दृष्टान्तार्थं तदुक्तमित्याहुः। समानाधिकरणेति। द्रव्यत्वव्याप्यजात्या सामानाधिकरण्यं बोध्यम्। वाय्वादावतिव्याप्तेराह रूपसमानाधिकरणेति। जलेऽतिव्याप्तेराह निष्ठान्तम्। जलरूपस्य पृथिवीनिष्ठातिशयप्रतियोगीति तद्व्युदासः।

हि शुक्लारुणादि-व्यक्तयो ऽनित्याभि र्द्रव्य-व्यक्तिभि र्व्यज्यन्ते। तारतम्यममूषाम् आश्रयमिश्रतया। यथा यथाहि धवले कृष्णद्रव्यानुप्रवेशः तथा तथा तारतम्यावभास इति। तदयुक्तम्। तेषामाश्रयस्थितावपि पावकसंयोगात् पूर्व्वं रूपनिवृत्तिरुत्तररूपोत्पादश्च न स्यात्।

---

मत्त्वमभिप्रेतम्। ये पुनरिति। शुक्लादिव्यक्तिरेकैकैव नित्या तत्र तारतम्यधीश्च नीलाद्यनुषङ्गतद्विरहनिबन्धना तदन्वयाद्यनुविधानात्। नानाव्यक्तय एवानित्यास्तद्धीविषया इत्यर्थः। तेषामिति। न च समवायः पट उत्पद्यते नश्यति चेति वाच्यम्। घटादाविवोत्पादविनाशप्रत्ययस्य शुक्लरूपादावविशेषात्। समवायोत्पादविनाशयोरप्रतीतेश्च। एवञ्च मधुराम्ललवणकटुतिक्तकषायाणां रसानां सौरभासौरभानां गन्धानामेकैकत्वं स्यात्। नीलादितुल्यत्वात्। न चेष्टापत्तिः। एकत्वे मधुरतरतमत्वाद्यनुपपत्तेः। सत्कार्य्यवादावतारापत्तेश्च।

---

सत्तादिकमादाय जलेऽव्याप्तेराह। द्रव्यत्वव्याप्येति। पृथिवीजलाद्यन्यतरमादाय जलेऽव्याप्तेराह जातीति। जातित्वापत्तिभिया कल्पान्तरमाह मानेति।

ननु रसान्तरानुषङ्गात् तथा स्यादित्यत आह। सत्कार्य्येति। एवं सर्व्वनित्यताङ्गीकारे साङ्ख्यमतप्रवेशस्तवेतिभावः। यद्यपि समवायनाशोत्पादस्वीकारादेव न सर्व्वनित्यतारूपस्य तस्यावतारः तथापि तदन्य घटपटादिसकलकार्य्यनित्यत्वापत्तिरेव तदवतारो बोध्य इत्याहुः।

अनेकव्यक्तिसमवेतस्य निरतिशयस्य नित्यस्य सामान्यादन्यत्वं नोपपद्यते। अस्तु शुक्लादिकं सामान्यमेवेति चेत्। न। गोत्वादिना परापरभावानुपपत्तौ जातिसङ्करप्रसङ्गादिति। रसः षड्विधो मधुरादिरिति। अस्यापि व्याप्तिं सगयादिषु गन्धवत्। पाकजरूपेणानुमानात्। अतोऽप्यवान्तरानेकसामान्यविशेषवान्स पृथिव्यामेवेति वाक्यार्थः। अपामव्यक्त

अनेकेति। ननु जातेः (१२३) संस्थानमात्रव्यङ्ग्यत्वात् गोत्वादिना परापरभावानुपपत्तेश्च जातित्वं न स्यात्। सामान्य रूपत्वापादने आपाद्यापादकयोरभेदश्च। मैवम्। यदीदं शुक्लं रूपं नित्यं सदनेकव्यक्तिः स्यात् गुणो न स्यात् इत्यापादनार्थं त्वात्। पाकेन श्यामं रूपं नष्टं रक्तमुत्पन्नमित्यनुभवात्। न चासौ भ्रमो बाधकाभावात्। अस्त्विति। प्रतीतिस्तथैवोपपत्तेः।

(१२३) संस्थानमात्रेति। परस्य स्वमतावष्टम्भेनेदम्। नचैवं सक्तजाति लक्षणं तत्रैवाव्याप्तमिति वाच्यम् तस्मात् चान्यथैव तल्लक्षणकरणादित्या शयात। आपाद्येति। यद्यपि नित्यत्वादिघटितमापादकं निःसामान्यत्वे च सति समवेतरूपसामान्यमापाद्यमिति नाभेदस्तथापि अप्रयोजकत्वं तात्पर्यम्।

यदीदमिति। हित्वादौ व्यभिचारादाह नित्यमिति। नित्यरूपादौ व्यभिचारादाह। नैकवृत्तीति। न चाप्रयोजकत्वं नित्यानेकसमवेतस्यापि गुणत्वे घटत्वादेरपि गुणत्वापत्तेरिति भावः। अनुभवादिति। यद्यपि नाश्यविनाश पाकेन रूपोत्पत्तिध्वंसौ तथाच न प्रत्यक्षौ तथापि न्यायनयेनेदम्। आनुमानिकत्वं ह्यभिप्रेत्योक्तमित्यप्याहुः।

मधुर एव हि स्वाभाविको रसः। अवान्तरभेदास्तु नारिकेलादिजलगताः पार्थिवद्रव्योपाधिकाः। तेन गन्धवती पृथिवी अवान्तरानेकसामान्यविशेषवद्रूपवती अवान्तरानेकसामान्यविशेषवद्रसवती चेति लक्षणार्थः।

स्यादेतत्। यथा रूपवत्त्वाविशेषेऽपि त्रयाणामनेकविधरूपवती पृथिवी। स्वच्छधवलरूपवज्जलम्। शुक्लभास्वररूपवत्तेजः। तथा गन्धावान्तरप्रकारभेदमाश्रित्य द्रव्यभेदहेतुः स्यादित्यत आह। गन्धो द्विविधः।

किं गुणेनान्तर्गडुनेत्यर्थः। गोत्वादिनेति। शुक्लत्वादिजातिमद्गुणवत्त्वं द्रव्येऽनुभूयते न तु शुक्लादिजातिमत्त्वमेवेति भावः। अवान्तरेति। नानाजातीयरससमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वावान्तरजातिमन्मधुरवद्वृत्तितज्जातिमत्त्व वेत्यर्थः। पार्थिवेति। अनन्यथासिद्धान्वयाद्यनुविधानादित्यर्थः।

ननु गन्धमात्रस्येतरभेदसाधकत्वात् तद्भेदकथनमर्थान्तर-

ननु नानैव गोत्वादिव्याप्यमस्त्वित्याशङ्क्यानुभवं प्रमाणयति। शुक्लत्वादीति। अवान्तरेति। अवान्तरजातिमान् मधुरो यस्येति द्रव्यस्योक्तत्वात् तद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वं वेत्यर्थः। यद्यप्यवान्तरजातिमत्त्वं मधुरत्वव्याप्यजातिमत्त्वं तच्च जलरसेऽप्यस्तीत्यतिव्याप्तिस्तथापि समानाधिकरणमधुरनिष्ठजातिप्रतियोगित्वं विवक्षितम्।

सुरभिरसुरभिश्चेति । चितावित्यनुवर्त्तते । न द्रव्यान्तरं । पाकजः खल्वयमेकस्मिन्नेव द्रव्ये कालभेदेन वर्त्तमानः प्रकारभेदवानपि न द्रव्यान्तरव्यवस्थाहेतुरितिभावः । स्पर्शोऽस्याः पाकजः । पाकजस्पर्शवती पृथिवीति लक्षणार्थः । अत्र हि स्पर्शवतीत्युच्यमाने तेजसा पाकद्रवत्ववतातिव्याप्तिः । अतः पाकजस्पर्शवतीति । अत्र च गन्धरूपरसानां पाकजत्वं सदपि नोक्तं स्फुटत्वात् । स्पर्शस्य तथात्वे विप्रतिपत्तिः । न हि गन्धादिवद्विशेषतः स्पर्शः पाकस्यान्वयव्यतिरेकावनुविधत्ते । पार्थिवत्वमात्रेण तथाकल्पने परिमाणादिष्वपि तथाप्रसङ्गात् । तदेतद्विप्रतिपत्तिवीज मपनिनीषन्निदमुक्तवान् पाकजः स्पर्श इति ।

यदि पाकजो न स्यात् संख्यापरिमाणादिवद-

मित्यत आह । यथेति । अत इति । यद्यपि पाकजत्वं परमाणुस्पर्श एवेति भागासिद्धिस्तथापि पाकजस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमतीत्यर्थः ।

अविशिष्ट इति । ननु चाविशिष्टं (१२४) सकलद्रव्यवृत्ति-

(१२४) सकलेति । यद्यपि परिमाणादेरपि न सकलद्रव्यवृत्तित्वं तथापि सकलद्रव्यनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वं सकलद्रव्यवृत्तित्वं बोध्यम । तत्रापि वीजानुपपत्तिमाह । अन्यथेति । स्पर्शस्यैव तद्विषय इत्यर्थः ।

विशिष्टः स्यात्। तथाचाशीविषवृश्चिककीटादिदंशेषु शूकशिम्बिवृश्चिकपत्त्रिकादिषु च स्पृष्टेषु दृष्टो दुःख-

गुणत्वमात्रव्याप्यजातिमत्त्वं विशेषगुणवृत्तिविरहो वा। आद्ये गुरुत्वेन व्यभिचारः। न हि गुरुत्वं पाकजं संख्यादिवदविशिष्टं वा। अन्त्ये पाकजानामपि स्नेहबुद्ध्यादीनां विशेषगुणत्वाद्व्यभिचारः। आशीविषदंशादौ संयोगविशेषस्यैव दुःखविशेषहेतुत्वम्। मण्यादिसंयोगस्य च तदुपशमहेतुत्वम्। एवं गवादिसंयोगस्य च। स्पर्शोऽपि न प्रयोजकः। संयोगभेदस्यैव तत्त्वात्। स्पर्शविधिनिषेधावपि संयोगविषयावेव। अन्यथा स्पर्शस्य ज्ञायमानस्य तत्त्वमिति तज्ज्ञानस्य तथात्वे संयोगे वृत्तेऽपि व्यासङ्गेन तदज्ञाने आचमनाद्यकरणप्रसङ्गः। तीर्थजले म्लेच्छजले चैवं विधिनिषेधनात् पाकजप्रसङ्गश्च। अस्तु वाश्रयाधीन एव विशेषोऽस्तु पाकजत्वेन। अथायमाशयः। तेजःसंयोगोत्पाद्यस्य विनाश्यत्वे तावद्रूपादीनां सम्प्रतिपन्ने तत्र न तद्व्यक्तिवृत्तित्वमेव प्रयोजकम्। अन-

तत्त्वमिति। अदृष्टजनकत्वमित्यर्थः। तज्ज्ञानस्येति साक्षात्कारस्येत्यर्थः। स्वरूपसन् स्पर्शो नादृष्टं प्रति कारणं स्पर्शस्य सर्वदा सत्त्वेन सर्वदादृष्टोत्पादापत्तेः। तस्य च ज्ञानं संयोगे सत्येवेत्यावश्यकत्वात् संयोग एव तत्कारणम्। अन्यथा संयोगे सत्यपि व्यासङ्गेन स्पर्शाज्ञाने चादृष्टानुत्पत्तौ तन्नाशकाचमनादेरकरणप्रसङ्ग इति भावः। संयोग इति चाण्डालादिसंयोग इत्यर्थः। जले जलस्पर्शे। आश्रयेति। स्नेहवदिति भावः। पार्थिवविशेषगुणवत्त्वमेवेति। पार्थिवपरमाणुविशेषगुणवत्त्वमेवेत्यर्थः। यथाश्रुतस्याश्रयनाशरूपादावतिप्रसक्तत्वेन कार्यतानवच्छेदकत्वात्। एवमग्रेऽपि।

विशेषो नोपपद्यते। मणिमूलादिविशेषेषु च स्पृष्टेषु तदुपशमो न स्यात्। गवादिचाण्डालादिस्पर्शविधि-

नुगमात्। नापि रूपादित्वं जलादिरूपसाधारण्यात्। अतः पार्थिवविशेषगुणत्वमेव तत्र प्रयोजकम्। अतः पृथिवीस्पर्शः पाकजः। पृथिवीविशेषगुणत्वात्। गन्धवत्। विपक्षे बाधकन्तु कार्य्यकारणभावानुपपत्तिः। अवैशिष्ट्यन्तु पाकजत्वावच्छेदकरूप-राहित्यम्। आशीविषादिदंशेषु दुःखविशेषः कुतश्चिद्द्वारागतः केनचित् साधारणोऽनुभूयते इत्यविवादम्। तत्र परापरव्याप्तं साधारणञ्च कारणमावश्यकम्। अन्यथाकस्मिकत्वापत्तेः। न च तत्तद्द्रव्यसंयोग एव तथा अप्रौढकपिकच्छुसंयोगेऽपि तथा दुःखानुत्पत्तेः। न च प्रौढसंयोगस्तथा प्रौढिर्न जात्यादिरूपा। अनुपलम्भात्। रूपादिकन्तु साधारणमेवेति परिशेषेण स्पर्शविशेषस्यैव तत्त्वात्। एवं गवादिसंयोगेऽपि भेदो द्रव्यविशेषात् वाच्यो। द्रव्ये च विशेषो न कारणविशेषमवधूय। तत्र रूपादीनां साधा-

अनुपलम्भादिति। न च महत्त्वविशेष एव प्रौढिपदार्थः। स चानुभवसिद्ध इति वाच्यम्। अननुगमादित्याशयः। साधारणमेवेति। अप्रौढकपिकच्छुसाधारणमेवेत्यर्थः। द्रव्ये इति। यद्यपि गोत्वादिजातिकृत एव विशेषः सम्भवति तथापि कपिकच्छुस्थले स्पर्शस्य पाकजत्वसिद्धेरन्यत्रापि तथात्वमिति पूर्व्वापरस्मेनेदमुक्तम्। स्पर्श एवेति। अवयविस्पर्शस्य परम्परया पाकप्रयोज्यत्वं बोध्यम्।

जले त्विति। यद्यपि तत्र स्पर्शादेरविशेषे कथं विधिनिषेधौ। यदि च कृष्ण-त्वादिजातिविशेषाश्रयविशेषिते तथात्वं तदा प्रकृतेऽपि तुल्यम्। तथाप्यापातत इदमुक्तम्। अत एव सिद्धान्तेऽप्युपेक्षितं न तु दूषितम्।

निषेधौ न स्याताम्। न च द्रव्यमात्रे तावुपपद्येते। दर्शनस्पर्शनाघ्राणास्वादनभेदेन मातङ्गमदिरादिप्राय-

रणत्वात् स्पर्श एव विशेषः कल्प्यते जले तु बाधकात् त्यज्यते। मैवम्। विशेषगुणत्वेन च विशेषगुणत्वमिति परस्पराश्रयात्। कपिकच्छस्पर्शे च वैजात्यमस्त्। तेन च पाकजत्वं पाकजस्पर्शस्य क्वचित् तेजःसंयोगात् क्वचित् कारणगुणप्रक्रमेणोत्पादेनाननुगमः। कार्य्यवैजात्यकल्पने च गौरवम्। पाकजस्पर्शश्च नेतरभेदसाधकः। वैशेषिकनयेऽवयविनि भागासिद्धेः। उच्यते। अस्ति चापरामृष्टेषु तत्तद्वस्तुस्पर्शेषु पाकानन्तरं सुकुमारकठिनतरतमादिधीः सार्व्वलौकिकी। तत्रान्वयव्यतिरेकाभ्यां तेजःसंयोग एव प्रयोजकः। न चावयवानां निविड़ः संयोगः संग्रहाख्य एव तद्विषयात् तस्य द्वीन्द्रियग्राह्यतया च चक्षुषापि तद्ग्रहापत्तेः। न चेष्टापत्तिः। चक्षुषा तद्ग्रहेऽपि स्पर्शविशेषसंशयादन्धकारेऽपि तत्प्रतीतेः। अवयवसंयोगस्यावयविन्यवृत्तेः तद्गतत्वेन प्रतीतेरनुपपत्तेश्च। एकार्थसमवायेन तदुपपत्तिरिति चेन्न। साक्षात्-

तेन चेति। ननु यदि पाकजत्वेनैव विशेषगुणत्वं तदा जलादिरूपादौ कथं विशेषणत्वम्। यदि च जलादिरूपादिमात्रवृत्तिजातिमादायैव तथात्वं तदा पाकप्रयोज्यजात्यनभ्युपगमेऽपि पृथिवीस्पर्शमात्रवृत्तिजातिमादायैव तथात्वमिति चेत्। न। पृथिवीविशेषगुणत्वे पाकजत्वमेव नियामकमित्याशयेनोक्तत्वादित्येके। पृथिवीगुणत्ववत् पृथिवीविशेषगुणत्वमपि तत्राप्रयोजकं, किन्तु पृथिवीरूपत्वादिकमेव तथेत्यत्र तात्पर्य्यमित्यन्ये। एतदस्वरसादेवाह किञ्चेत्यप्याहुः। गौरवमिति। रूपादिवैजात्यस्यानुभूयमानत्वात् प्रामाणिकं तदिति भावः।

श्चित्तभेदानुपपत्तिप्रसङ्गात्। तस्मात् पार्थिवः स्पर्शोऽपि पाकजः। पार्थिवविशेषगुणत्वात्। गन्धवदित्यवधेयम्।

सम्बन्धे बाधकाभावात्। अन्यथातिप्रसङ्गादिति स्पर्शविशेष एव तद्विषय इति स्थितं अन्यत्र प्रयुज्यते। (१२५) पृथिवीस्पर्शः तेजःसंयोगजन्यः प्रतिनियतेन्द्रियग्राह्यपृथिवीगुणत्वात्। गन्धवत्। न च त्वगवेद्यत्वमुपाधिः। तेजोऽवयविनि साध्याव्यापकत्वात्। न च साधनावच्छिन्नसाध्यव्यापकः। पक्षेतरत्वात्। अथवा पृथिवीपरमाणुस्पर्शः तेजःसंयोगजन्यः द्रव्यग्राहकयावदिन्द्रियाग्राह्यप्रत्यक्षगुणत्वावान्तरजातिमत्पृथिवीपरमाणुगुणत्वात्। रूपवत्। न च रूपवदिन्द्रियग्राह्यगुणत्वव्याप्यजातिमत्त्वं साधनावच्छिन्नसाध्यव्यापकत्वमुपाधिः। तुल्ययोगक्षेमत्वात्। नापि सन्दिग्धो

दोषान्तरमाह। पृथिवीस्पर्शस्येति। पाकजस्पर्शो न लक्षणमितीतरभेदसाधनेऽवयविनि भागासिद्धेरित्यर्थः। अन्धकारेऽपीति। तत्प्रतीतेः नैविड्यप्रतीतेः। तथाच यदि नैविड्यात्मकं काठिन्यं तदा तज्ज्ञानाद्घनं निविडं तमः इति व्यवहारवत् कठिनं तम इति व्यवहारः स्यादिति भावः।

केचित्तु प्रसङ्गमुखमिदम्। यद्यवयवसंयोग एव कठिनत्वादिकं तदान्धकारे बहुतरकालमवस्थितं गुडामलकादि कठिनमनुभूयेत। तावत्कालं रौद्रादिस्थितवत्। अवयवसंयोगस्य स्पर्शवत् तेजःसंयोगापेक्षत्वादित्याहुः। एवञ्च गुणप्रकाशे सौकुमार्य्यकाठिन्ययोः संयोगत्वेन यदभिधानं तदेकदेशिमतेन लक्षणया वेति मन्तव्यम्।

(१२५) पृथिवीस्पर्श इति। सन्न्यवयविनि पाकानभ्युपगमात् तदीयस्पर्शांशे बाधः। परमाणुस्पर्शांशेत्वसिद्धिः। अतएव वायवीयस्पर्शमात्रं परमाणुस्पर्शमात्रं

ये तु मन्यन्ते पृथिव्यां स्पर्शो नास्त्येव उष्णाशैत्ये विहाय स्पर्शान्तरस्यानुपलम्भबाधितत्वात्। शैत्यमेव

पाधिः। विपक्षबाधकेनोक्तेन हेतोः साध्यव्याप्यत्वेनैवोपाधेः साधनाव्यापकत्वात्। पाकजस्पर्शवृत्तिगुणत्वव्याप्यजातिमदुपाधित्वमेवेतरभेदे हेतुरतो न भागासिद्धिः।

शैत्यमेव हीति। अनुष्णाशीतव्यवहारस्यानोष्णाशैत्यविषयत्वात् तस्यावश्यकतयाभ्युपगमात् तत एव व्यवहारोपपत्तेर्नाति-

वा पक्ष इति प्रत्युक्तम्। बाधादसिद्धेश्चेति चेत्। अत्र पृथिवीस्पर्श एव पक्षः। साध्ये च जन्यपदं प्रयोज्यपरम्। तेन नोक्तबाधः। तज्जन्यजातीयमन्त्यं साध्यमित्यप्याहुः। प्रतिनियतेन्द्रियग्राह्यजातिमत्पृथिवीगुणत्वादिति हेत्वर्थः। तेन न भागासिद्धिः। अत एवालोकत्रणुकसंयोगे चक्षुर्मात्रग्राह्ये न व्यभिचारः। पक्षेतरत्वादिति। यद्यपि स्पर्शत्वादेरपि व्यावर्त्तनात् न पक्षेतरत्वं तथापि साधनावच्छिन्नं पक्षमेव व्यावर्त्तयतीति पक्षेतरत्वमुक्तम्। वस्तुतः साध्यव्यापकताग्राहकानुकूलतर्कमात्रोपलक्षणपरमिदम्। द्रव्येति। अत्र पृथिवीपरमाणुस्पर्शस्यैव पक्षत्वं संयोगजन्यत्वं यथाश्रुतमेव साध्यम्। अत एव पिठरगुणव्यभिचारवारणाय परमाणुपदम्। संयोगादौ व्यभिचारवारणाय अग्राह्यान्तं गुणविशेषणम्। न तु जातिविशेषणम्। गुणत्वावान्तरपदवैयर्थ्यापत्तेः। न चैवमपि परमाणुवृत्ति संख्यादिव्यक्तौ व्यभिचारः। द्रव्यग्राहकयावदिन्द्रियाग्राह्यजातिशून्ये तात्पर्यात्। गुरुत्वे व्यभिचारवारणाय प्रत्यक्षेति जातिविशेषणम्। एवञ्च सत्तामादाय गुरुत्वाव्यभिचारतादवस्थ्यात् तद्वारणाय गुणत्वावान्तरेति। जलपरमाणुरूपादौ व्यभिचारादाह। पृथिवीति। गुणपदं सम्पातायातम्। न चेति। साधनव्यापकत्वनिरासायाह। रूपवदिति। सत्तामादायोक्तदोषसत्त्वादाह। गुणत्वव्याप्येति। पृथिवी गुणत्वादिकमादाय दोषतादवस्थ्यादाह जातीति। तेजोऽवयविनि शुद्धसाध्याव्याप्तेराह। साधनेति। विपक्षेति। सौकुमार्यादिप्रत्ययान्यथानुपपत्त्ये-

हि तेजःस्पर्शेनाभिभूतमुष्णञ्च उदकस्पर्शेनाभिभूत-
मनुष्णाशीतत्वेनाभिधीयत इति तान् प्रत्याह। अनु-
ष्णाशीतत्वे सतीति। बलवत्-सजातीयग्रहणाकृतमग्र-
हणं खल्वभिभवः। तथाचाभिभावक मन्यतरदवश्य
मुपलभ्येत। न चैवं प्रकृते किन्तु शैत्यौष्ण्यानुपलम्भे-
ऽपि तद्विलक्षणस्पर्श उपलभ्यते एवं तथाविधे तमसि

रिक्तस्पर्शकल्पनम्। अतएवानुष्णाशीत इति नञ्गर्भ एव व्यवहार
इत्यर्थः। तथाचेति। अनभिभवे योग्यव्यक्तिनिष्ठस्य तस्य सन्निकर्षे
तदुपलम्भोपपत्तेः। (१२६) न च बलवत्सजातीयसम्बन्ध एवाभावो
लाघवादिति वाच्यम्। शुष्कपार्थिवद्रव्यस्पर्शस्य तमसि त्वगि
न्द्रियावेद्यत्वापत्तेः। स्पर्शपुरस्कारेण तस्य प्रवृत्तेः। स्पर्शोऽयम-
नुष्णाशीत इति प्रत्यक्षादिना स्पर्शस्य विशेष्यतया व्यक्तिप्रसङ्गा-
दिति भावः। नित्यानित्यभेदकथनस्यार्थान्तरत्वमपाकरोति।
सेयमिति। अवयवानवस्थेति। यद्यप्यनवस्थामात्रं बीजाङ्कुर-

त्वर्थः। पाकजेति। गुणत्वव्याप्येत्यस्य स्पर्शत्वव्याप्येत्यर्थः। तेन स्पर्शत्वमादाय न
जलादौ व्यभिचारः। न चैवमप्यनुष्णाशीतत्वमादाय वायौ व्यभिचारः स्पर्शत्व-
व्याप्यव्याप्येत्यत्र तात्पर्य्यात्। तज्जातौ मानाभावादित्यप्याहुः। एवञ्चाद्यस्पर्शपदं
चिन्त्यम्। गुणपदं स्पष्टार्थम्।

(१२६) न च बलवदिति। ननु एवमपि बलवतो ग्रहणमावश्यकमित्युक्तदोष
निवृत्तिरिति चेन्न। उक्ताभिभवपदार्थमात्रदूषणे तात्पर्य्यादित्येके। प्रकारान्तरेण
बलवत्त्वेऽपि न तस्य ग्रहणमित्यभिमानेनैतदुक्तमित्यन्ये। शुक्लेति। अन्यस्पर्श-
पुरस्कारेणापि प्रवृत्तं भविष्यतीति मन्दाशङ्कामात्रं निराकर्त्तुमिदमुक्तम्। वस्तुतस्तु

शुष्कपार्थिवद्रव्यस्येति भावः । सेयं पृथिवी यद्यनित्यैव तदावयवानवस्था स्यात् । एकस्य हि कस्यचिदवयवस्य निवृत्तौ निराश्रयञ्च कार्य्यमापद्येत ।

अथ नित्यैव निष्प्रामाणिका तर्हि स्यात् । कार्य्यञ्च गन्धवदपि द्रव्यान्तरं स्यात् । अत आह । सा च द्विविधा नित्यानित्या चेति । चकारौ मिथः समुच्चये नियमनिराकरणपरौ । तेन नोक्तदोषावकाश इत्यभिप्रायः । का पुनर्नित्या । महती हि मही महत्त्वादेव कार्य्यत्वादनित्या । अणुपरिमाणात्तु नोपलभ्यत एवे-

साधारण्येन न दूषणं तथापि सर्व्वकार्य्यद्रव्यनाशात् प्रलयानन्तरं सृष्टिरिति व्यवस्था इत्यपरे । एकस्येति । सर्गादौ सर्व्वानित्यद्रव्यनिवृत्तौ द्व्यणुकस्य निराश्रयतापत्तिरित्यर्थः ।

निष्प्रामाणिकेति । नित्यपृथिव्या अनुपलम्भात् । (१२७) पृथिवीत्वस्यानित्यवृत्तित्वेनैवोपलम्भादित्यर्थः । महत्त्वादिति ।

---

पारमार्थिकोद्भूतस्पर्शत्वाभावे जलालोकसमवधानेऽपि न प्रत्यक्षता स्यादिति बोध्यम् । अनुष्णाशीतप्रत्ययस्य नाभिभूतस्पर्शत्वादिविषयत्वं येनाभिभावकोपलम्भापत्तिः स्यात् । किन्तु तदभावद्वयविषयत्वमेवेत्यत आह । स्पर्शोऽयमिति । स्पर्शस्य तत्सम्बन्धे तद्विशेष्यकधीस्तत्र न स्यादिति भावद्रव्यस्य त्वगवेद्यतापत्तिरत्रापि बोध्या । दोषान्तरमाह । तयोरिति ।

(१२७) पृथिवीत्वस्येति । तथाच व्याघात इति भावः । मूर्त्तत्वमिति । न च मनसा सिद्धसाधनम् । तन्मूर्त्तत्वासिद्धिदशायामेवास्योक्तत्वात् । वस्तुतोऽ-

त्यत आह। परमाणुलक्षणा नित्येति। लक्षणं स्वभावः कार्य्यमेवात्र प्रमाणं भविष्यतीत्यभिप्रायवता नेह प्रमाणान्तरमादर्शितम्। तथाहि स्थूलकार्य्यस्य लोष्ट्रादेरवयवक्रियाविभागादिन्यायेन विभज्यमानस्यान्यतरतमादिभावाद् यतो नाल्पीयस्त्वं परमाणुमाचक्ष्महे। एष ह्यवयवावयविप्रसङ्गो न तावन्निरवधिरेव। अनन्तावयवारब्धत्वाविशेषेण मेरुसर्षपयोः परिमाणभेदानुपपत्तेः। न च कारणसंख्याया अवि-

चाक्षुषमहत्त्वादेव यत्कार्य्यत्वं तस्मादनित्यत्यर्थः। अत्र मूर्त्तत्वं नित्यवृत्ति न वेति संशयः। अनन्तेति।

नन्वनन्तावयवारब्धत्वाविशेषेऽपि कश्चित्तादृग्बहुतरावयवारब्धः कश्चित् तादृगपेक्षयाल्पावयवारब्ध इति अवान्तरसंख्याभेदादेव परिमाणभेदः स्यात्। अत्राहुः। सर्षपो यदि साक्षात् परम्परासाधारणमेवारम्भकानावयवारब्धः स्यादेतत्परिमाणाधिकपरिमाणः स्यात्। न ह्यनवयवानां निविड़त्वेऽप्येतावानपकर्षः सम्भवति। यद्वा मेरुपदं स्थूलपरम्। सर्षपपदञ्च द्व्यणुकपरम्। तेन यदि द्व्यणुकं सावयवारब्धं स्यात् महत् स्यादिति महत्त्वापत्ति-

वयवत्वं पक्षीकार्य्यम्। तच्च द्रव्यसमवायित्वमिति बोध्यम्। स्पर्शवत्त्वेन विशेषणीयमित्यप्याहुः। तादृगिति। तथाचावयवपरम्पराया आनन्त्येऽपि साक्षात्-समवायिकारणबहुत्वात् प्रकृत परिमाणभेद इत्यर्थः।

सर्षपो यदीति। ननु साक्षादारम्भकाः सर्षपावयवाः तदपेक्षया न्यूनाश्चेति

शेषेऽपि परिमाणप्रचयाभ्यां विशेष इति युक्तम्। तयोरपि संख्याविशेषाभावेऽनुपपत्तेः। नापि प्रलयावधिः कस्यचिदन्त्यस्य निरवयवत्वे तदनुपपत्तेः।

द्रव्यस्यावयवविभागविनाशाभ्यां विना विनाशाभावात्। नापि विभागावधिः। तस्य विभज्यमानाश्रयतया तदभावेऽनुपपत्तेः। न चैकाश्रयविभाग इति

रेव तुल्यपरिमाणत्वापत्तिः। यद्वा द्व्यणुकत्रसरेण्वोः सावयवारभ्यत्वेन तुल्यपरिमाणारब्धत्वं तात्पर्य्यम्। प्रलयावधिर्नाशावधिः।

कस्यचिदिति। निरवयवद्रव्यस्य समवायिकारणासमवायिकारणनाशाभावे नाशासम्भवादित्यर्थः।

द्रव्यस्येति। ननु विभागो न द्रव्यनाशकः। आश्रयनाशजन्ये द्रव्यनाशे व्यभिचारात्। मैवम्। विभागेन (१२८) तत्कार्य्यस्यारम्भकसंयोगनाशस्योपलक्षणात्। यद्यप्येकाश्रयत्वेऽपि विभागस्तदवधिर्नास्ति तथाप्यभ्युपगम्य दूषणान्तरमाह। न चेति। यदि

यथोक्तशङ्काकर्त्तारं प्रत्यापादकाभिर्द्धारिति चेन्न। सेरुणा समं तस्य साक्षात् तुल्यावयवारब्धत्वं तदन्तर्भाव्यापदनमित्याहुः। यद्वा एतदस्वरसादाह। यद्वेति। ननु तुल्यपदार्थानन्वय इत्यत आह। यद्वेति। यद्यपि घटपटादीनां सावयवारभ्यत्वेन तुल्यपरिमाणारब्धत्वमिति व्यभिचारस्तथापि महत्त्वेन तुल्यत्वं विवक्षितम्। तच्च तत्रापीत्यदोषः।

(१२८) विभागेनेति। न चैवमपि व्यभिचारतादवस्थ्यम्। निमित्तकारणोत्तरकारणनाशत्वेनानुगमादितिभावः। तदवधिरिति विभागावधिः। अवयवावयविसम्बन्धे एकाश्रयत्वेऽपि विभागस्य नास्ति तथा सत्याश्रयावधित्वापातादित्यर्थः।

युक्तम्। किञ्चित् कुतश्चिद्विभज्यते। न तु तदेव तस्मात्। तस्मान्निरवयवावधिरयमवयवावयविप्रसङ्ग इति विज्ञायते तर्कितमेव न तु प्रमितमिति चेत्। अत्र कश्चिदाह। किमत्र प्रमाणान्तरगवेषणया त्रसरेणोः प्रत्यक्षसिद्धत्वात्। तस्य चावयवकल्पनायां प्रमाणाभावेन निरवयवत्वात्। तदसत्। तस्य चाक्षुष-

ह्येति। ननु रूपवत्त्वमत्र प्रयोजकं न तु महत्त्वम्। तस्य पृथगन्वयव्यतिरेकाननुविधानात्। सावयवत्वमपि न चाक्षुषत्वे प्रयोजकं गुणादावभावात्। द्रव्यचाक्षुषत्वे तु न विशिष्य प्रयोजकम्। सामान्यप्रयोजकादेव विशेषसमवधाने तदुपपत्तेः। दूरसमादौ तु चाक्षुषज्ञानविशेषं प्रति महत्त्वविशेषस्यैव कारणत्वं सिध्यति। न तावता महत्त्वसामान्यकारणत्वसिद्धिः। न वा नित्ये त्रुटिमहत्त्वेऽनेकद्रव्यवत्त्वं कारणं येन महत्त्वानुविधानेन तत्कारणमनेकद्रव्यवत्त्वमपि चाक्षुषप्रयोजकं स्यात्। त्रसरेणुः कार्य्यो महत्त्वे सति क्रियावत्त्वादिति चेत् महत्त्वस्य विशेषणस्य व्यावृत्त्या प्रसिद्धौ व्यर्थत्वात्। क्रियावत्त्वमात्रस्य मनसि व्यभिचारात्। पृथिवीत्वं

रूपवत्त्वमिति। उद्भूतरूपवत्त्वमित्यर्थः। तस्येति। परमाण्वाद्यनङ्गीकारादितिभावः।

सामान्येति। अन्यथा गुणादिचाक्षुषत्वे प्रयोजकान्तरमनुसरणीयमिति भावः। सावयवत्वे मानान्तरमाशङ्कते। त्रसरेणुरिति। महत्त्व इति। न च व्यावर्त्यस्य परमाणोरसिद्ध्या व्यर्थविशेषणता। क्रियावत्त्वमात्रेण कार्य्यत्वे अवयवत्वेनागतस्य

द्रव्यतया महत्त्वादनेकद्रव्यवत्त्वाच्चेति। यदि हि स्वस्य चाक्षुषता महत्त्वमन्तरेण स्यात् दूरदूरतरादौ न महत्-परिमाणप्रकर्षमनुविदध्यात्। यदि च सानेकद्रव्य-

---

निरवयववृत्ति इन्द्रियानिन्द्रियवृत्तिजातित्वात् सकलपृथिवीवृत्ति जातित्वाद्वा सत्तावदिति चेत्। न। घटत्ववत् पृथिवीमात्रवृत्ति-त्वेन प्रतिरोधात्। तस्मात् त्रसरेणुर्नित्यो महत्त्वोत्कर्षशून्य-द्रव्यत्वात्। व्योमवत्। अनित्यं हि घटादिद्रव्यं कुतश्चित् तदुत्-कृष्यतेऽपि कुतश्चिदपकृष्यतेऽपि। मैवम्। दृश्यते हि दूरात् किञ्चि-

---

क्रियावत्त्वनियमादनवस्थया क्वचिद्विश्रामे वाच्ये सामान्यतो व्यभिचारवारकतया सामान्यतः सिद्धे निरवयवत्वेऽनुमानवैयर्थ्यं अतस्तदप्रसिद्धिरेव वाच्या। न चान-वस्थयैव व्याप्तिपक्षाभावे विशेषणसार्थकता व्यभिचारवारकस्यैव साधकत्वादित्यभि-सन्धायाह। महत्त्वस्येति। अपकृष्टमहत्त्वाश्रय इत्यर्थः। व्यावर्त्त्येति। पर-माणुष्वसिद्धेरिति भावः। क्रियावत्त्वमात्रस्य स्वतोऽसिद्धव्याप्तिकमित्याह। क्रिया-वत्त्वेति। तथा चोभयासिद्धहेत्वलाभ इत्यर्थः। निरवयववृत्तीति। निरवयव-समवेतमित्यर्थः। तेन परम्परासम्बन्धेन गुणादिवृत्तितया न सिद्धसाधनम्। न वा द्वितीयहेतौ जात्यादिपदवैयर्थ्यम्। यद्यपि तन्मते त्रसरेणुनैव सिद्धसाधनं तथापि त्रसरेणुभिन्नेति विशेषणान्न दोष इति।

वस्तुनेन सिद्धसाधनवारणार्थं निरवयवेऽतीन्द्रियत्वविशेषणमिति तन्न। अतीन्द्रियप्राणाद्यारम्भकत्रसरेणुवृत्तितया परेण सिद्धसाधनकरणसम्भवात्। घटत्वादौ व्यभिचारवारणायातीन्द्रियेति। प्राणत्वादौ व्यभिचारादाहातीन्द्रि-येति। घटप्राणाद्यन्यतरत्वे व्यभिचारादाह जातीति। सकलेति घटत्वादौ व्यभिचारवारणाय। अप्रसिद्धिवारणाय पृथिवीति। जलत्वात्यन्ताभावादौ व्यभि-चारादाह जातीति। महत्त्वेति। अपकर्षपदस्य दृष्टान्तासिद्धिवारकतया व्यर्थं तथापि तन्मते तद्वारकस्यापि सार्थकत्वादुभयाभावस्याहेतुत्वाद्वा नोक्तदोषः।

वृत्ता नाद्रियेत महत्त्वमपि नाद्रियेत। तद्व्यावृत्तौ तस्यापि व्यावृत्तेस्तस्य तत्कारणत्वात्। अन्यथा तत्प्रकर्षं महत्त्वप्रकर्षो नानुविदधीत।

---

स्रोपलभ्यते चक्षुषा ततस्त्वधिकपरिमाणमुपलभ्यते। तत्र न तावत् तत्तत्परिमाणसत्त्वमेव प्रयोजकम्। अननुगमात्। महत्त्वस्य तेषु साधारणत्वात् प्रयोजकमित्यवधार्य्यते। (१२८) विशेषकारणत्वावधारणेऽपि तद्रूपसिद्धेरुपजीव्यत्वात्। एवं सावयवत्वमपि तत्र प्रयोजकम्। अन्यथा महत्त्वस्यैवाभावादवयवोत्कर्षात् महत्त्वोत्कर्षेण तस्य तद्धेतुत्वात्। एतेन महत्त्वादेर्बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारविषयत्वे स्वरूपयोग्यतावच्छेदकत्वात् दण्डत्ववदकारणत्वमित्यपास्तम्। तदुत्कर्षात् प्रत्यक्षोत्कर्षेण तस्य कारणत्वात्। न ह्यकारणोत्कर्षमकार्य्यमनुविधत्ते। दण्डत्वादौ तु नैवं प्रकारभेदेनोभयरूपत्वाविरोधाच्च। चाक्षुषद्रव्यज्ञाने विषयत्वेन तस्य कारणत्वात्। द्रव्येऽप्यनुगतत्वेन कारणतावच्छेदकत्वात्।

---

एतच्च व्यासज्य प्रतियोगिकाभावमते। उत्कर्षसमानाधिकरणापकर्षशून्यत्वादिस्यत्र तात्पर्य्यमित्यन्ये।

(१२८) ननु विशेषकारणत्वमावश्यकमन्यथा दूरादुत्कृष्टमहत्त्वाश्रयवदपकृष्टमहत्त्वाश्रयोऽप्युपलभ्येत। महत्त्वस्य साधारणत्वात्। एवञ्च महत्त्वसामान्यहेतुत्वे मानाभाव इत्यत आह। विशेषेति। विशेषकार्य्यकारणभावेऽपि सामान्यहेतुत्वसिद्धेरुपजीव्यत्वं प्रयोजकत्वं सामान्यं तथाभावं विना विशेषस्य तथाभावाभावात्। यद्विशेषयोरिति न्यायादन्यथा सामान्यस्याकस्मिकत्वापत्तेरिति भावः। तद्धेतुत्वादिति। यद्यपि जन्यमहत्त्वं तस्य हेतुत्वमन्यथा व्योमादिमहत्त्वानुपपत्तेः।

तस्माद्विवादाध्यासित त्रसरेणु र्महान् अनेकद्रव्यवांश्च अस्मदादिचाक्षुषद्रव्यत्वात्। घटादिवत्। अपर आह। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यात् महत्त्वपरिमाणतारतम्यवदिति। तदप्यसत्।

तस्मादिति। ननु (१३०) साधनावच्छिन्नसाध्यव्यापकं महत्समवेतत्वमुपाधिः। उक्तेन विपक्षबाधकेन हेतोः साध्यव्याप्यत्वात्। उपाधेः साध्याव्यापकत्वात्। भट्टानां व्योम्नः चाक्षुषत्वेन तत्र साध्याव्यापकत्वाद्वा। अणुपरिमाणेति। अणुत्वं सजातीय प्रतियोगिकोत्कर्षापकर्षानाश्रयवृत्ति परिमाणत्वव्याप्यजातित्वात्।

त्रुटिनित्यत्ववादिना च तन्महत्त्वस्य नित्यत्वेनाभ्युपगमात् न तत्र तदपेक्षा तथापि चाक्षुषमहत्त्वं प्रति तद्धेतुत्वमभिप्रेत्यैतदुक्तम्। अत्र च विनिगमनाविरहः। न च चाक्षुषत्वस्य जातित्वेन जन्यत्वविवेचने गौरवमिति वाच्यम्। चाक्षुषत्वं हि लौकिकचाक्षुषज्ञानविषयत्वमन्यथातिप्रसङ्गादेवञ्च लौकिकत्वनिर्वचनेन लाघवमिति चिन्त्यम्। महत्त्वादेरिति। आदिपदं सावयवत्वपरम्। तदुत्कर्षादिति। अत्रानेकद्रव्यवत्त्वोत्कर्षान्महत्त्वोत्कर्ष स्ततश्च प्रत्यक्षोत्कर्षः तथाचात्मप्रत्यक्षे क्लृप्तत्वाच्चाक्षुषत्वाच्च महत्त्वमेव कारणं नानेक द्रव्यवत्त्वमिति प्रयोजकत्वाभिप्रायेण ग्रन्थोऽयमिति बोध्यम्।

प्रकारभेदं विवृणोति। चाक्षुषेति।

(१३०) साधनेति। साधनैकदेशावच्छिन्नेत्यर्थः। विशिष्टावच्छेदकत्वे व्यर्थविशेषणत्वात्। यद्यपि महत्त्वमात्रे साध्ये सिद्धसाधनमिति जन्यमहत्त्वं साध्यं तथा च शुद्धसाध्यव्यापकत्वमेव तथापि यथाश्रुताभिप्रायेणेदम्। केचित्तु परेण त्र्यणुकावयवाणुत्व स्वीकारान्महत्त्वेऽपि साध्ये न सिद्धसाधनम्। नित्ये त्रुटिमहत्त्वे इति तु पूर्व्वाभिधानमभ्युपगमवादेनेत्याहुः। महत्समवेतत्वमित्यत्र महत्त्वपदं त्रुटिसमवेतत्ववादिमते साधनव्याप्तिपरिहारार्थम्।

परस्पराश्रयदोषप्रसङ्गात्। नासौ परमाणुः परमाणुः स तु तर्हि तदवयवा एव कार्य्यानुमिताः परमाणवः। न हि ते महान्तः रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात्। तथाच तत्कार्य्यत्वे प्रमाणानवक्लृप्तौ तदवयवाननुमानात्। यद्यपि चाणुत्वान्निरवयवत्वाच्च

महत्त्ववदित्यर्थः। परस्परेति। परमाणुसिद्धौ महत्त्वविरुद्धाणुपरिमाणसिद्धिस्तत्सिद्धौ परमाणुसिद्धिरित्यर्थः। न च महत्त्वापकर्ष इत्थं व्यपदिश्यते। तस्य त्रुटावेव विश्रामात्। उपसंहरति नासाविति। असौ त्रसरेणुर्न परमाणुरित्यर्थः।

भाट्टानामिति। एतच्च महत्त्वसाध्यपक्षे बोध्यम्। [illegible]मिति। त्र्यणुकद्व्यणुकयोरन्यतरगर्भतया साध्यद्वयम्। तावतैवाभिमतसिद्धेः। साजात्यञ्च परिमाणत्वसाक्षाद्व्याप्यजात्या। तथाच सजातीयपरमाणुपरिमाणप्रतियोगिकोत्कर्षानाश्रयीभूतद्व्यणुकपरिमाणवृत्तित्वमेकेन सजातीयद्व्यणुकपरिमाणप्रतियोगिकानाश्रयीभूतपरमाणुपरिमाणवृत्तित्वं चापरेण सिध्यति। द्व्यणुकापेक्षया परमाणोरणुतरत्वेन तत्परिमाणस्य द्व्यणुकपरिमाणप्रतियोगिकोत्कर्षानाश्रयत्वात्। न च दृष्टान्तासिद्धिः। सजातीयापकर्षानाश्रयत्वस्य व्योमपरिमाणे सजातीयोत्कर्षानाश्रयत्वस्य त्रसरेणुपरिमाणे सत्त्वेन तद्वृत्तितया महत्त्वे साध्यसत्त्वात्। परिमाणत्वेति। न चानुभयसिद्धे पर्वतादिमहत्त्ववृत्तिजातिविशेषे परममहत्त्वजातौ च व्यभिचार इति वाच्यम्। व्याप्यपदस्य साक्षाद्व्याप्यपरत्वात्।

न चेति। यद्यपि महदारम्भकत्वं महदुपादानत्वमन्यथा व्यभिचारापत्तेरेवञ्च व्यावृत्त्य परमाणोरसिद्धौ महदिति व्यर्थम्। तथाप्यनवस्थया सामान्यतो व्यभिचारावगमात् तद्वारणाय निर्विकल्पकसाध्यकानुमाने विशिष्टपदवत् तदुपादानमिति भावः।

तेषां महत्त्वपरिमाणारम्भेण कारणमहत्त्वप्रचयौ स्तः तथापि बहुत्वसंख्यास्तीति सर्व्वं समञ्जसम्। न। उक्तोत्तरत्वात्। अवश्यं हि त्रसरेणोरवयवैरनेकद्रव्यैर्भवितव्यम्। महत्त्वं प्रति चावयवगतस्यानेकद्रव्यत्वस्यापि कारणत्वात्। अन्यथा महत्त्वस्य तत्प्रकर्षानु-

अवश्य इति। ननु त्रसरेणववयवस्य सावयवत्वे साध्ये महत्त्वादिति अपक्षधर्म्मो हेतुः। न च महदारम्भकत्वं तदर्थः। महत्त्वस्योपाधित्वात्। मैवम्। समवेतत्वे साध्ये गुणादौ साध्याव्यापकत्वात्। न च साधनावच्छिन्नसाध्यव्यापकत्वम्। उक्तविपक्षबाधकेन साधनस्य साध्यव्यापकत्वेनोपाधेः साध्याव्यापकत्वात्।

सम्प्रदायविदस्तु यस्यां सामग्र्यां (१३१) समवायिकारणत्वेन निरवयवद्रव्यमनुप्रविशति सा न महदारम्भिका यथा ज्ञानसामग्री। न चाद्रव्यसामग्रीत्वमुपाधिः। त्रिभिः परमाणुभिस्त्रसरेणुरारभ्यते इति पक्षेऽपि परमाणुद्वयेनारब्धद्व्यणुके साध्याव्यापकत्वात्। ततस्त्रसरेणोर्महत्त्वात् तदवयवस्य सावयवत्वमावश्य-

साधनेति। एकदेशारम्भकत्वपरम्। उक्तेति। तदुत्कर्षेण तदुत्कर्षादिना। तस्य महत्त्वं प्रति हेतुत्वेन तदभावे महत्त्वाभावप्रसङ्ग इत्यर्थः। अत्रापि नित्यत्रुटिमहत्त्वपक्षे नेदं सङ्गच्छते इति चिन्त्यम्।

(१३१) समवायिकारणत्वेनेति। न च निरवयवं समवायिकारणं न महदारम्भकमित्येवास्त्विति वाच्यम्। यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात्। सम्प्रदायमत अयमप्यस्वरस इत्यप्याहुः। वस्तुतस्त्रिभिः परमाणुभिस्त्र्यणुकारम्भ-

विधानानुपपत्तेः । तस्मात् त्रसरेणोरवयवाः सावयवाः महद्‌द्रव्यारम्भकत्वात् । तन्तुवत् ।

बहवश्च ते परिमाणप्रचयानुपपत्तौ महदारम्भकत्वात् । तुल्यपरिमाणतन्त्वपेक्षयाधिकसंख्यपटारम्भक तन्तुवत् । ते च विभज्यन्ते । सावयवत्वात् । घटवत् । विपक्षे बाधकमुक्तम् । तदवयवानान्त्ववयवकल्पनानवकाशात् । प्रमाणाभावात् बाधकाच्च । द्रव्यारम्भकत्वमूर्त्तत्वादीनामनुकूलतर्काभावादेवानवस्थाप्रसङ्गस्य

क्रम् । तथाचाणुपरिमाणत्वं कार्य्याकार्य्योभयवृत्ति परिमाणत्वसाक्षाद्व्याप्यजातित्वात् महत्त्ववदित्याहुः ।

बहवश्चेति । (१३२) परिमाणारम्भकबहुत्ववन्तः परिमाणप्रचयाजन्यमहत्परिमाणाश्रयद्रव्यजनकत्वादित्यर्थः ।

पक्षे द्वाभ्यां द्व्यणुकारम्भे मानाभावः परानभ्युपगमश्च । अन्यथा कार्य्याकार्य्योभयवृत्तीत्यनुमाने परस्परसिद्धसाधनं उत्तरमापद्येतेत्यस्वरसो बोध्य इति । अणुपरिमाणत्वमित्यनेनाणुत्वं जातिरूपमभिमतमिति न स्वरूपासिद्धिः । न चाकार्य्यपदमफलं तद्विनापि द्व्यणुकसिद्धेरिति वाच्यम । तत्प्रकारकानुमितेरुद्देश्यत्वादित्येके । यदि कश्चित् परमाणावेव विप्रतिपद्यते तदा तं प्रति तत्साधनाय तथोक्तमित्यन्ये । साक्षात्पदञ्च परममहत्त्वादौ व्यभिचारवारणाय ।

(१३२) परिमाणेति । ननु दृष्टान्तासिद्धिः । अधिकसंख्यकतन्तुपरिमाणस्यापि महत्त्वारम्भकत्वात् । त्रुटिमहत्त्वातिरिक्ते सर्व्वत्र जन्यमहत्त्वे परिमाणं हेतुरिति सिद्धान्तात् । यथोक्तं यथासम्भवं द्वयं त्रयमिति चेत । न । परिमाणमात्राजन्यत्वे सति प्रचयाजन्यं यन्महत्त्वं तदाश्रयद्रव्यसमवायिकारणत्वादि-

प्रतिकूलस्य स्फुटत्वादिति परमाणुसिद्धिः। तस्मात् यत्कार्य्यं तत्सावयवमिति समनियतसिद्धौ कार्य्य-द्रव्यत्वेन सावयवत्वं प्रसाध्य यत एवावयवात् कार्य्य-द्रव्यत्वं व्यावर्त्तते तन्निरवयवं परमाणुमुपपादयिष्याम इत्यभिप्रायवानाह। कार्य्यलक्षणान्त्विति। तु शब्दः परमाणो र्व्यवच्छिनत्ति। किमत्र प्रमाणमित्यत आह। सा चेति। सेयं मुक्तरूपा दृश्यते सा प्रत्यक्षसिद्धेत्यर्थः। स्थैर्य्यं स्थिरता चिरकालावस्थायित्वमिति यावत्। आदिशब्दाद्द्रव्यारम्भकत्वं जलादिव्यूहविरोधित्वञ्च। अवयवसन्निवेशा स्तत्सामान्यविशेषाभिव्यञ्जकसंस्थान

ननु द्व्यणुकारम्भकोऽपि द्रव्यारम्भकत्वादिभिः सावयवः स्यादित्यत आह। द्रव्यारम्भकत्वेति। कार्य्यपृथिव्यां मानमाह। स्थैर्य्यमिति। चिरकालेति। यद्यप्येतज्जलादावप्यस्ति तथापि निबिडसंयोगविशेषगुणवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमभिप्रे-

त्यर्थात। यत्र निबिडसंयोगवदवयवद्वयं महदारम्भकं तत्र व्यभिचारवारणाय सत्यन्तम्। यत्र च प्रशिथिलसंयोगात् तद्द्वयं तथा तत्र तद्वारणाय प्रचयाजन्य-पदम्। यद्यपि द्रव्यान्तरमादाय बहुत्वसत्त्वात् यथाश्रुतसाध्ये न व्यभिचार-स्तथापि निरुक्तसाध्ये तथेति ध्येयम्। द्रव्यपदं स्फुटार्थम्। निबिडेति। निबिडसंयोगवत्त्वं एतादृशव्यापकमतो जातिगर्भत्वम्। करकादिव्यावृत्तनिबिड-संयोगलाभाय विशेषपदमित्याहुः। भेदेन व्याप्यत्वबोधनाय साक्षात्पदम्। रसत्वादिकमादायातिव्याप्तिवारणाय जातिपदम्।

विशेषाः। स्थैर्य्यादीनि चावयवसन्निवेशाश्च तैर्वि-
शिष्टाः। नह्येतत् द्रव्यान्तरे सम्भवति। जलादीनां
यत् तदुपनिपातमात्रेणैव भङ्गुरत्वात्।

न च पार्थिववदम्भो द्रव्यान्तरं गच्छद्विष्टभ्नाति
पूर्व्वव्यूहं वा विरुणद्धि। न च पार्थिववत् द्रव्यान्तरं
तत्तज्जात्यभिव्यञ्जकसंस्थानभेदवदिति। यतस्तत्तत्-
संस्थानविशेषवती अतएवापरजातिबहुत्वोपेता। ननु
सर्व्वस्य चेतनादन्यस्य परार्थत्वात् किमनया चेतन-
प्रयोजनत्वं साध्यत इत्यत आह। शयनेति। शयनं
शय्या। आसनमवस्थितिः। आदिग्रहणाद् भ्रमण-
कृषिकर्म्मादि। चकारादभिघातादनेकोपकारो चेति।
तदिदं पारार्थ्यमस्याः किं विषयतयैव नेत्युच्यते।
किन्तु तत्र त्रैविध्येनेत्याह। त्रिविधञ्चेति। शरीरमिन्द्रियं

प्रेतम्। विष्टम्भकत्वं स्वाधिकगुरुत्वाश्रयद्रव्यान्तरगतिप्रतिबन्ध-
कत्वं दाहविरोधित्वञ्च स्वाधिकगुरुत्ववत्पतनप्रतिबन्धकत्वम्।

नन्वत्र कार्य्यपृथिव्या एव लक्ष्यत्वात् परमाणावतिव्याप्तिरिति चेत्। न।
परमाणुभिन्नत्वेन विशेषणात्। पृथिवीमात्रं लक्ष्यमित्याहुः।

अविशेषमाशङ्क्य सामान्यविशेषाभ्यां विशेषमाह। स्वाधिकेति। स्वगुरुत्वाधिक
गुरुत्वाश्रय इत्यर्थः तेन न वायावतिव्याप्तिरित्यप्याहुः।

द्रव्यान्तरपदं व्यर्थम्। यद्यप्येतदत्र दाहव्याप्तं तथापि तर्हि तद्भिन्नद्रव्यत्वव्याप्य जाति-

विषय इति संज्ञा यस्य तदिदं तथोक्तम्। एतेन शरीरत्वमिन्द्रियत्वं विषयत्वं वा न जातिरस्ति। प्रथमद्वितीययोः पृथिवीत्वादिना परापरभावानुपपत्तेः। तृतीये च निःसामान्ययोः सामान्याभावयो र्विषयत्वात्। तस्माद् यदवच्छिन्ने आत्मनि भोग स्तदन्त्यावयवि

यदवच्छिन्न इति। पादे मे सुखमित्याद्यनुभवबलात् आत्मनि वृत्तेऽपि सुखस्यावच्छेद्यावच्छेदकभावसम्बन्ध इत्यर्थः। न च मृत(१३३)शरीरादावव्याप्तिः। आत्मविशेषगुणकारणमनःसंयोगवदन्त्यावयविमात्रवृत्तिजातिमत्त्वस्य विवक्षितत्वात्। तत्रापि मनुष्यत्वादिजातिसत्त्वात्। शरीरसंयुक्तमिति। यद्यप्येतत् दिक्काल-

मत्त्वं बोध्यम्। पूर्ववच्च परमाणौ नातिप्रसङ्गः। यदि च जलीयशरीरे प्रतिषद्धद्रव्यत्वाश्रयत्वादिदमस्ति तदा प्रतिबद्धद्रव्यत्वभिन्नेति विशेषणान्न दोषः।

(१३३) मृतेति। यद्यपि जीवनदशायां इदमस्त्येवेति नाव्याप्तिस्तथापि अवयवोपचयादिना तदानीमेवोत्पन्ने शरीरान्तरेऽव्याप्तिर्बोध्या। न च तदलक्ष्यमेवेति वाच्यम्। तत्रापि शरीरव्यवहारादिति भावः। आत्मेति।

ननु कारणत्वं स्वरूपयोग्यता फलोपधानं वा। नाद्यः। मृतशरीरसंग्रहाय जातिगर्भलक्षणानुपपत्तेः। नान्त्यः। फलानुपहितमनःसंयोगवति मृतशरीरे मनुष्यत्वादिजातिसम्भवेन तादृशसंयोगवदन्त्यावयविमात्रवृत्तित्वाभावादिति चेन्न। तादृशसंयोगवद्वृत्तिरन्त्यावयविमात्रवृत्तिश्च या जातिस्तद्वत्त्वस्य विवक्षितत्वात्। अत्राद्येन घटादावन्त्येन करादावतिव्याप्ति र्निरस्ता। द्रव्यत्वादिकमादायातिप्रसङ्गवारणाय मात्रपदम्।

ननु घ्राणत्वजातिमादाय घ्राणेन्द्रियातिव्याप्तिरिति चेन्न। आत्मनो गुणविशेष

प्राणाद्यतिव्यापकं तथापि स्मृत्यजनकज्ञानकारणीभूतमनःसंयोगाश्रयत्वमिन्द्रियत्वम्। त्वगिन्द्रियस्य सर्व्वज्ञानाजनकत्वात् तत्रा-

इति व्युत्पत्त्या आत्मविशेषगुणपदेन स्मृतेरुक्तत्वात् स्मृतिजनकमनःसंयोगश्च न प्राणमिति नोक्तदोषः।

नन्वेवं मनःपदं व्यर्थम्। न च स्मृतिहेतुशरीरप्राणसंयोगमादाय प्राणातिव्याप्तेस्तद्वारणाय तत्। तेनैवान्यथासिद्धतया प्राणमनोयोगस्याहेतुत्वाच्च दोषतादवस्थ्यमिति वाच्यम्। *अन्यावयविपदेनैव तद्वारणात्। न च प्राणोऽप्यन्तावयवीति वाच्यम्। प्राणाख्यवायुरन्त्यावयविपदेनैव निरस्त इति प्रमेयनिबन्धविरोधात्। तस्माद् यत्र स्मरणविशेषोद्देशेनान्त्यावयवि सुवर्णघटादिकं जले नीतमृज्यते, तत्र सुवर्णघटादिजलसंयोगस्मृतिकारणं तदाश्रयवृत्तिघटत्वादिकमादायातिव्याप्तिस्तद्वारणाय तदिति केचित्। अन्ये त्वात्मविशेषगुणत्वावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयत्वं विवक्षितमिति न प्राणेन्द्रियातिव्याप्तिः। अतएव विशेषपदमपि सार्थकम्। आत्मगुणत्वस्य नित्यानित्यवृत्तितया कार्य्यतावच्छेदकत्वेन तदवच्छिन्नकार्य्यताया अप्रसिद्धेः। आत्मपदञ्च संसार्य्यात्मपरमिति न दोषतादवस्थ्यम्। मनःपदञ्च प्राणातिव्याप्तिवारकमेव। प्रमेयनिबन्धश्च मतान्तरेणेत्याहुः। न च शरीरत्वस्य लक्ष्यतया प्राक् तदप्रतीतौ कथं शरीरमनोयोगत्वेन हेतुत्वग्रहः। तदग्रहे च कथमुक्तलक्षणप्रसिद्धिरिति वाच्यम्। शरीरसंयोगस्य भोगायतनसंयोगत्वेन हेतुत्वग्रहात्। भोगायतनत्वञ्च भोगावच्छेदकत्वं शरीरतदवयवसाधारणम्।

ननु नरसिंहहयग्रीवादिशरीरेऽव्याप्तिस्तत्र नरत्वसिंहत्वादेर्जातिसङ्करभयेनास्वीकारादिति चेत्। न। तत्रापि बाल्यादिभिन्नशरीरवृत्तिचैत्रत्वादिवत् जातिविशेषस्य सम्भवात्। विष्णुपदशक्यग्रहानुपपत्त्या विष्णुत्वजातिस्वीकाराच्च। ईश्वरस्य भूतावेशन्यायेनास्मदादिशरीरमेव परिगृह्णातीति तच्छरीरमनोयोगस्य तद्विशेषगुणाजनकतया तत्राव्याप्तिरिति दूषणं बोध्यम्। तेनास्मदादिविशेषगुणजननात्।

नन्वहल्यायाः प्रतिमात्वश्रवणात् तद्वृत्तिप्रतिमात्वमादायातिव्याप्तिरिति चेत्।

शरीरम्। शरीरसंयुक्तं साक्षात्प्रतीतिसाधन मतीन्द्रिय मिन्द्रियम्। प्रतीयमानतयोपभोगसाधनं विषय

व्याप्तिः। (१३४) शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानहेतुमनःसंयोगाश्रयत्वं वा। प्रतीयमानतयेति। न चाग्रे वायोर्विषयत्वाभिधानेन विरोधः। साक्षात् क्रियमाणत्वस्याविवक्षितत्वात्।

काष्ठत्वादिना सङ्करेण तज्जातित्वासिद्धेः। नानात्वे च मानाभावात्। पाषाणावस्थायामात्मविशेषगुणाभावेन तत्कारणमनःसंयोगवद्वृत्तिभावाच्च।

यद्यपीति। न च सदिति विशेषणेनैव तन्निरासः। सदित्यस्य वस्तुतः शरीरसंयोगीत्यर्थः। शरीरसंयोगित्वेन जनकमितिवार्थं। आद्ये कालाद्यतिव्याप्तिस्तदवस्थैव। अन्त्ये असिद्धिः घ्राणत्वादिनैव जनकत्वादन्यथा प्राणातिव्याप्तेर्दुष्परिहारत्वादिति। स्मृत्यजनकेति। अजनकत्वं स्वरूपयोग्यत्वम्। तेनानुभवमात्रजनकमनःसंयोगविशेषमादाय नात्मादावतिव्याप्तिः। न चैवं मनस्यव्याप्तिः। स्मृत्ययोग्य चक्षुर्मनःसंयोगादिकमादाय तत्रोक्तलक्षणसत्त्वात्। स्मृत्यजनकवृत्तितादृशसंयोगाश्रयत्वमित्यर्थः। इत्यन्ये। घटादावतिव्याप्तेराह। ज्ञानकरणेति। चक्षुर्घटसंयोगमादाय घटेऽतिव्याप्तिरिति मनःपदम्। ज्ञानपदञ्च प्रमापरम्। तेन स्वप्नवहनाड़ीमनःसंयोगस्य स्वप्नाज्ञानजनकतया नाड्यां नातिव्याप्तिः। न चेन्द्रियत्वे ज्ञाते तन्मनोयोगत्वेन ज्ञानकरणग्रहः तद्ग्रहे त्विन्द्रियत्वं ज्ञानत्वमित्यन्योन्याश्रयः। चक्षुर्मनोयोगत्वादिनापि तद्ग्रहात्।

सर्व्वज्ञानाजनकत्वादिति। एवञ्च त्वङ्मनोयोगस्यापि सत्त्वात् न तत्राव्याप्तिः। नहि संयोगिनोऽजनकत्वे संयोगजनकत्वम्। त्वचः सर्व्वज्ञानजनकत्वमिति च मतान्तरमिति भावः। सर्व्वज्ञानजनकत्वादिति पाठे त्वचस्तथात्वं न तु तन्मनोयोगस्येति नाव्याप्तिरित्यर्थः।

(१३४) शब्देति। शरीरादावतिव्याप्तेराह सत्यन्तम्। श्रोत्राव्याप्तेराह शब्देतरेति। घ्राणाद्यव्याप्तेराह उद्भूतेति। उद्भूतत्वं साक्षात्कारप्रतिबन्धकतावच्छेद

इति लक्षणरूपोपाधिनिबन्धना एताः संज्ञा इत्यर्थः । चस्त्वर्थो वाय्वादिभ्यो भिनत्ति । वायोर्हि चतुर्व्विधं कार्य्यम् नभःप्रभृतीनाञ्चैकविधमेवेति । अनेका

वायवीयस्पर्शस्य विषयत्वात् तदाधारत्वेन वायोरपि विषयत्वोपचाराद्वा शरीरादेश्च विषयत्वेऽप्यज्ञायमानस्यापि भोगसाधनत्वात्

कानुद्भूतत्वजात्यभावसमूहः । न च चक्षुरादिसामान्यगुणेऽपीति तदव्याप्तेराह विशेषेति । न च तस्याप्रत्यक्षत्वादनुद्भूतत्वमेवेति वाच्यम् । सामान्यगुणस्याश्रययोग्यतयैवाप्रत्यक्षतया तत्र साक्षात्कारप्रतिबन्धकतावच्छेदकानुद्भूतत्वे मानाभावात् । केचित्तूद्भूतपदं प्रत्यक्षविषयपरं विशेषपदं लौकिकपरम् । तेन शब्देतरलौकिकप्रत्यक्षविशेषगुणानाश्रयत्वं सतीत्यर्थः । इत्याहुः । सत्यन्तमात्रं दिगादावतिव्याप्तमिति ज्ञानकारणेति । न च मनःपदवैयर्थ्यम् । इन्द्रियावयवात्मसंयोगस्यापि ज्ञानहेतुत्वादिन्द्रियावयवेऽतिव्याप्तिवारकत्वात् । प्राणवायोरुद्भूतः स्पर्श इति मते तत्रातिव्याप्तिवारणाय तत् । प्राणमनोयोगस्य शरीरप्राणसंयोगेनान्यथासिद्धतया ज्ञानाजनकत्वादित्यन्ये ।

ननु शब्देतरत्वविशेषणमव्याप्तिवारकत्वादितरभेदानुमाने भागासिद्धिवारकमतो व्याप्तिग्रहानौपयिकतया व्यर्थम् । न च व्यतिरेकव्याप्तिग्रहे इति लक्षणाभावस्य विशिष्टाभावतया व्यापकतया च न तत्र वैयर्थ्यमिति वाच्यम् । व्यावर्त्तकविशेषणस्याप्युपसर्ज्जनवैयर्थ्यापत्तेः । नीलधूमस्यापि व्यतिरेकितया गमकत्वापाताच्च । न चान्वये व्याप्यत्वासिद्धा व्यतिरेकेऽपि तत्र तदनुमानमिति वाच्यम् । प्रकृतेऽपि तुल्यत्वात् । तथात्वान्वयेऽपि न व्याप्यत्वासिद्धिः । अव्याप्तिवारकविशेषणस्य विशिष्टाभावप्रतियोगित्वविशेषणत्वनियमात् । अन्यथा तद्वारकत्वानुपपत्तेः । नहि भवति यत्र विशेष्यमव्याप्तं तत्र विशिष्टस्य व्याप्तिं विशिष्टाभावसम्पादकतया तु तथात्वमिति चेत् । अस्तु तावदेवं तथापि यत्र विशेष्येऽव्याप्तिवारकं तत्र का

वान्तरप्रकारवच्छरीरारम्भिका पृथिव्येव न द्रव्यान्तरमित्यभिप्रायवांस्तद्विदं दर्शयति । शरीरं द्विविधं योनिजमयोनिजञ्चेति ।

ननु योनिजवन्नायोनिजमपि शरीरमुपलभामहे इत्यत आह । तत्रेति । देवानामृषीणामपि श्रूयते हि ब्रह्मणो मानसा मन्वादय इति । ननु कारणमतिपत्य

---

पृथगुपादानं । नायं विभागः किन्तु पृथिवीजातीयस्य तेन रूपेण पारार्थ्यं तद्रूपोपदर्शनमित्यप्याहुः । लक्षणरूपेति । शरीरत्वादेः पृथिवीत्वादिना परापरभावानुपपत्तेः जातित्वाभावादिति भावः ।

कारणमिति । शरीरमिति । शुक्रशोणितसन्निपातस्य कारणत्वात् तमतिपत्य शरीरं न स्यादित्यर्थः । शरीरविशेषं प्रति कारणम् । तदभावेऽप्यूष्मादेः कृम्यादिशरीरोत्पत्तेरित्याह । शरीरत्वस्येति ।

---

णेति । गन्धयोग्यताया पृथिवीलक्षणत्वे योग्यताया अव्यभिचारकत्वादिति । आहुः । इतरभेदानुमानं द्विविधमेकं लक्षणाश्रयपक्षकं प्रसिद्धमेव द्वितीयं चेत र ·र।नभेदप्रतियोगिनः लक्षणशून्यत्वादिति । तथाच यदा द्वितीयेन तदनुमानं तदा पाकजेतरपदं श्रौते व्यभिचारवारकमेव ।

नन्वेवमव्यभिचारकविशेषणस्यैव भागासिद्धिवारकतया व्यर्थत्वापत्तिः । न च ·त्र ·भवारकत्वेनैव तदनुमाने तस्य व्यभिचारवारकत्वमेवेति वाच्यम । यथा- ···प्र· रकमात्रव्यभिचारकस्य विशेषणं पाकजरसयोग्यत्वादौ लक्षणे तत्रान्यतर- ·· ··ा··व्या·नोरिति चेन्न । इतरपक्षकानुमानस्य उक्तानुमानस्य इतरत्वं ·· ·समानियतभेदे प्रतियोगितावच्छेदकं पाकजरसयोग्यत्वाभावसमानियत-

यदि कार्य्यमुत्पद्येत कार्य्यमेव न स्यात्। स्याच्च मृदादिव्यतिरेकेण घटादिरिति। न। शरीरत्वेनोष्मजक्रिमिमशकादिभिः व्यभिचारात्। संस्थानविशेषवत्त्वस्यासिद्धेः। त्रिदशाः खल्वेतेऽनेकमन्वन्तरायुषोऽनिमिषचक्षुषो नभश्चराः कामगास्त्रिनयनचतुर्मुखादयः। अस्मदादयस्तु दशदशाः शतवर्षपरमायुषो परिभ्रमच्चक्षुषो भूचराः प्रतिहतगतयो द्विभुजनयनाः। किञ्चित् संस्थानसाम्येऽपि गोगवयादिवज्जातिभेदापत्तेः। न च संस्थानमपि योनिजत्वनियामकम्। गोगजभुजगादीनां तदभावेऽपि योनिजत्वात्। तस्मात्

तथापि संस्थानविशेषवच्छरीरं प्रति न तस्य व्यभिचार इत्यत आह। संस्थानेति। देवादिशरीराणामयोनिजानेकसंस्थानवत्त्वमित्यर्थः। रूपान्तरेणापि साम्यनिरासायाह। त्रिदशा इति।

धर्म्मत्वादौ तात्पर्य्यात। अत एवोभयोरपि व्यभिचारवारकत्वादिति। तच्चिन्त्यम। एवं हि पृथिवीत्वमितरभेदमसंनियतं पाकजरसयोग्यत्वमसंनियतत्वादिति। अन्वयगतयैवोपपत्तौ तदनुसरणप्रयासगौरवात। अत्राप्युभयोर्व्यभिचारवारकत्वादिति। द्वितीयकल्पे विशिष्टाभावप्रतियोगिविशेषणतयैव न व्यर्थत्वमिति तु सम्भवत्यपि। अधिकन्तु प्रत्यक्षप्रकाशे विपश्चितम।

साक्षादिति। अत एव विषयपक्षगणेनैव द्व्यणुकादयः इत्यपि समग्रस्य संगच्छते इति भावः। वायवीयेति। तथाच साक्षात्क्रियमाणत्वविवक्षायामपि न दोषः। द्व्यणुकादेरपि विषयत्वं गौणमेवेति भावः।

सर्व्वेषां स्वकर्म्मनिबन्धनो भोगः। तच्च तन्नान्तरीयकतया जन्मायुषी आक्षिपति। तत्र येन कर्म्मणा गर्भवासादिदुःखं भोजयितव्यमस्ति। तेन योनिजमुत्पद्यते। तदन्येन त्वन्यथेति युक्तमुत्पश्यामः। तदेतदाह। धर्म्मविशेषसहितेभ्योऽणुभ्य इति। अणुभ्य इति मूलकारणनिर्देशोऽयम्। न त्वणुभिरेवाहत्य शरीरमारभ्यते। तदेतदग्रे व्यक्तीकरिष्यति।

द्व्यणुकादिप्रक्रमेणेति। क्षुद्रजन्तूनां मशकादीनां यातनाशरीराणि। यातना नरकपीड़ा तस्यैव शरीराणि इत्यत्र नारकिणामिति शेषः। क्षुद्रजन्तूनां शरीरा-

न वासस्थानविशेषं प्रति योनिः कारणम्। अपि तु कर्म्मविशेष एवेत्याह। न चेति। क्व तर्हि योनिः शरीरे कारणमित्यत आह। तत्रेति। अयोनिजदेवादिशरीरे चागमः प्रमाणम्। योनिं विना न शरीरमित्यत्र चागमे योनिपदं कारणमात्रपरं मनुष्यदेहपरं वा। चैत्र स्तदीय(१३५)योनिजशरीरान्यपार्थिवशरीरवान् शरीरत्वात् मैत्रवदित्यप्याहुः।

ननु मशकादीनामिह सुखमित्यनुभवतां न यातनाशरीराणी-

(१३५) तदीयेति। अत्र करचरणादिमदिति विशेषणम्। तेन कम्यादिशरीरेण नार्थान्तरम्। तदीयेति दृष्टान्तार्थम्। पार्थिवस्यैव सिषाधयिषितत्वेन जलीय योनिजशरीरेणार्थान्तरवारणाय पार्थिवपदम्।

णीति संस्थानभेदविवक्षया। मोक्षभोगायतनभेदविवक्षया वा षष्ठी। अधर्म्मविशेषः प्रकृष्टोऽधर्म्मः तत्सहितेभ्यः। न हि योनिजशरीर माकल्पमयःकुम्भीपाकक्रकचदारुणादिदुःखसहनक्षमम्। नापि नरकयातनासु योनिस्पर्शसुखमानुषङ्गिकमपि श्रूयते। न च नरकाश्रयेव न सन्तीति नरकेऽप्यनाश्वासप्रसङ्गात्। इति। इह योनिशब्देन यदि कारणमात्रमुच्यते तदा द्वैविध्यं नोपपद्येतात आह। शुक्रेति। सन्निपातः परस्परमेलनं तज्जं योनिजम्। पशवो ग्राम्याश्चतुष्पदाः आरण्याः मृगाः। गर्भवेष्टनचर्म्मपुटकं जरायुः। पक्षिणो विहङ्गमाः। सरीसृपाः परितः सर्पणशीलाः-

त्यत आह। नारकिणामिति (१३६)। ननु क्षुद्रजन्तव एव शरीराणीति न भेदनियतः षष्ठ्यर्थः इत्यत आह। संस्थानेति। शरीरपदं लक्षणया संस्थानपरं क्षुद्रजन्तुपरं वा। तच्छरीराधिष्ठायकभेदपरमित्यर्थः। न हीति। यद्यप्ययोनिजमपि शरीरं न तादृशंदुःखसहम्। तथाप्यागम एव तस्यायोनिजत्वे मानमिति

अत्राप्रयोजकत्वमागमरूपविपक्षबाधकानुसरणे च तत एव तत्सिद्धेर्व्यर्थमिदमनुमानमित्यस्वरसं सूचयति। अपीति।

(१३६) नारकिणामितीति। एतच्चोपलक्षणं शरीराणीत्यध्याहरणीयम्। तेन क्षुद्रजन्तूनां नारकिणाञ्च यातनाशरीराणीति लभ्यत एवेति भावः।

सर्पकीटमत्स्यादयः। यद्यपि चोद्भिदोऽपि वृक्षादयः शरीरभेदतया अत्रैव व्याख्यातुमुचिता स्तथापि अतिमन्दान्तःसंज्ञतया लौकिकापेक्षसुखदुःखभोक्त्रधिष्ठानत्वममीषामविवक्षन् प्रायेण जङ्गमोपकारितया तदधीनतया च विषयतां विवक्षन्नेष्वेवान्तर्भाव्य व्याख्यास्यन्ति।

कयाचिद्विवक्षया ह्यन्तर्भूतमपि पृथग्व्याख्यायते। यथा अयथार्थत्वेन विपर्य्यये सति स्वप्नसंशयज्ञाने लोकप्रसिद्धिमाश्रित्य कयाचिद्विवक्षया पृथक्कृतमप्यन्तर्भाव्य व्युत्पाद्यते। यथा प्रमितेरन्यत्वेनाविद्यापि यथार्थत्वेन स्मृतिर्विद्यायाम्। कयाचिद्विवक्षया सदपि किञ्चिद्रूपमभिधाय रूपान्तरमुच्यते। यथात्रैव रूपरसगन्धानां पाकजत्वमनुक्त्वा सौरभाद्युक्तम्। शरीरेन्द्रिययो र्द्व्यणुकादिप्रक्रममुपेक्ष्य योनिजत्वाद्युक्तमित्याचार्य्य शैलीयम्। कथं पुनरेतत्। इत्थं वृक्षादयः प्रतिनियतभोक्त्रधिष्ठिताः जीवनमरणस्वप्नजागरणरोग-

---

भावः। यद्यपि मातापित्रोस्तादृशसुखवत्त्वेन नारकित्वाभावेऽपि तत्पुत्रस्य नारकित्वमक्षतमेव। तथापि नारकिण एव नारकिणो जायन्ते इति मतं निरस्यति। नापीति। अन्तः संज्ञा ज्ञानम्।

भेषजप्रयोगसजातीयानुविध्यनुकूलोपगमप्रतिकूलापग-

प्रतिनियतेति। (१३७) भोगजनकमनःसंयोगवन्त इत्यर्थः।

(१३७) ननु भोक्त्रधिष्ठानं यदि तत्संयोगमात्रं तदाकाशादावेव सिद्धसाधनम्। यदि च भोगजनकमनःसंयोगवत्त्वं तदा प्रतिनियतेति व्यर्थमित्यत आह। भोगेति। ज्ञानजनकमनःसंयोगवत्त्वमात्रं साध्यमधिकस्य व्यर्थत्वात्। मूले भोक्त्रिति श्रवणात् भोगगर्भमेव साध्यमुद्देश्यमित्यन्ये। भोगत्वं जातिरतो न वैयर्थ्यमित्यपरे। न चाद्यं साध्यमिन्द्रियेऽपि गतमिति वाच्यम्। व्यापकव्यभिचारस्यादोषात्। यथाश्रुतस्यात्मनि गतत्वात्। न चैवं हस्तादीनां शरीरत्वासिद्धिः। इन्द्रियत्वबाधेन पक्षधर्मताबलात् सिद्धेरिति भावः। नचान्ययोर्भोगवत्त्व इत्येवास्त्विति वाच्यम्। यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावात् तथैवोद्देश्यत्वाच्च। अतएव मनःपदमपि।

आत्मविशेषेति। न च सुषुप्तावव्याप्तिरिन्द्रिये चातिव्याप्तिरिति वाच्यम्। जीवनस्यात्मलक्ष्यत्वेन प्रकृतसाध्यव्याप्यहेतूपन्यासस्य तथापि निर्व्वाहादिति भावः।

नन्वेवमप्यात्मपदं व्यर्थम्। भोगगर्भे साध्ये चक्षुरादौ व्यभिचारश्चेति चेत्। अत्रात्मविशेषगुणपदेनात्मनो गुणविशेषः स्मृतिरुक्ता। अतो नोक्तदोषः।

न चाद्यसाध्याविशेषः। ज्ञानत्वस्मृतित्वयोर्भेदात्। सन्दिग्धासिद्धिश्च मूले एव निराकरिष्यति। अन्यथा यथाश्रुतेऽप्यप्रतीकारात्। नचैवं मन पदं व्यर्थम्। प्राणमनोयोगस्य शरीरप्राणसंयोगेनान्यथासिद्धतया अहेतुत्वेन प्राणे व्यभिचारवारकत्वात्। आत्मादौ साध्यसत्त्वान्न व्यभिचार इति कश्चित्। अन्ये तु अन्यात्मविशेषगुणत्वावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयमनःसंयोग इत्यर्थः। तथाचात्मादिपदमप्रसिद्धिवारकतया न व्यर्थं न वा चक्षुरादौ व्यभिचार इत्याहुः। यदा तु जीवनलक्षणजिज्ञासा तदा तादृशमनःसंयोगावच्छेदकत्वं तद्वाच्यम्। शरीरावच्छिन्नात्मसंयोगत्वेन हेतुत्वात्। अवच्छेदकत्वञ्चादृष्टविशेषविशिष्टत्वं तत्कारितं सम्बन्धान्तरं वा। अतएव सुषुप्तौ नाव्याप्तिस्तदापि तददृष्टसत्त्वात्। अतएव मृत-

**आत्मविशेषगुणजनकमनःसंयोगो जीवनम्। ज्ञानजनकमनःसंयोगाजनकस्पन्दजन्यविभागजन्यज्ञानजनकमनःसंयोगध्वंसो मरणम्।**

---

शरीरे नाव्याप्तिस्तदा तदभावात्। फलैकोन्नेयस्य तस्य फलासत्त्वेऽसत्त्वात्। यद्वा जीवनयोनियत्नजनकमनःसंयोगाश्रयत्वं जीवनम्। नचात्माश्रयचिकीर्षाजन्यभिन्नयत्नजनकत्वेन तद्वयावृत्तजातिविशेषविशिष्टयत्नजनकत्वेन वा तदभिधानात्। सुषुप्तावपि तज्जनकत्वमस्त्येवेति नाव्याप्तिः। जनकत्वञ्च फलोपधानमिति न मृतशरीरातिव्याप्तिः। इदञ्च जीवनमात्मनो बोध्यम्। शरीरस्य सुषुप्तौ मनःसंयोगविरहस्यापि सम्भवेनाव्याप्त्यापत्तिरिति वदन्ति।

ज्ञानजनकेति। संयोगध्वंसमात्रं घटपटसंयोगध्वंसेऽतिव्याप्तमिति मन पदम्। तथापि पाण्डमनःसंयोगध्वंसेऽतिव्याप्तिरिति ज्ञानजनकेति। जीवनध्वंसेऽतिव्याप्तिरित्यजनकान्तं स्पन्दविशेषणम्। न च विभागजन्येति व्यर्थम्। स्पन्दस्य तदजनकत्वेनासम्भववारणार्थत्वादित्येके। यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावादित्यन्ये। न चैवमन्त्यमनःपदं व्यर्थम्। तादृशघटादौ तादृशचक्षुःसंयोगध्वंसेऽतिव्याप्तिवारकत्वात्। न चैवमप्याद्यमन पदं व्यर्थम्। यत्र प्रत्यक्षजनकाच्छरीरस्पन्दमात्राद्विभागो जातस्तेन च मरणात्मकतादृशसंयोगध्वंसो जनितः तत्राव्याप्तिवारकत्वात्। मरणकालीनस्पन्देऽपि दिगादिना समं मनसः संयोगजननादव्याप्तिवारणाय प्रथमं ज्ञानजनकपदम्।

ननु द्वितीयं ज्ञानजनकपदं स्वरूपयोग्यतापरं फलोपधानपरं वा। नाद्यः। शरीरमनःसंयोगत्वेन स्वरूपयोग्यतया पाण्डमनःसंयोगोऽपि तथेति न ध्वंसमादाय जीवनदशायामतिव्याप्तेर्नान्त्यः। अजनितज्ञानजनितचरमदुःखमनःसंयोगध्वंसे मरणरूपेऽव्याप्तिरिति चेत्। न। दुःखस्य स्वविषयसाक्षात्कारजनकत्वनियमेन फलोपधानस्य सत्त्वात्। ज्ञानपदं विशेषगुणपरमित्यन्ये।

ननु चक्षुरादावतिव्याप्तिरिति चेन्न। अन्त्यज्ञानजनकपदस्य जन्यात्मविशेषगुणत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयपरत्वादेव द्वितीयमनःपदं प्राणनिष्ठसंयोगध्वंसेऽतिव्याप्तिवारणाय बोध्यम्।

ननु प्रथमज्ञानजनकपदं फलोपधानपरं स्वरूपयोग्यतापरं वा। नाद्यः। सुषु

प्रदशायां कदाचिदन्यदापि कदाचिज्जीवद्दशायाञ्चातिव्याप्तेः। नान्त्यः। आत्मनो योगत्वेनैव तद्योग्यतया मरणकालीनस्पन्दस्यापि तादृशसंयोगजनकत्वेनाव्याप्त्यापत्तेरिति चेन्न। प्रथमज्ञानपदस्य विशेषगुणपरतया सुषुप्त्यादौ च जीवनयोनियत्नादिजनकत्वेन फलोपधानसत्त्वात्।

ननु जन्मान्तरानुवर्त्तमानतादृशसंयोगध्वंसमादाय जीवनेऽपि मृतव्यवहारापत्तिरिति चेन्न। जीवच्छरीरे तदसत्त्वादेव तदनापत्तेः। ध्वंसस्य प्रतियोगिसमानदेशत्वनियमात्। न चात्मनिष्ठतादृशसंयोगध्वंसेऽतिव्याप्तिरिति वाच्यम्। तस्यापि लक्ष्यत्वात्। अतएव तमादायात्मन्यपि मृतव्यवहारः। प्रेत्यभावस्यात्मनिष्ठत्वेनोक्तत्वात् तद्धर्मत्वनियमाच्च। नन्वेवमात्मनि जन्मान्तरानुवर्त्तमानध्वंसमादाय जीवद्दशायां मृतव्यवहारोऽस्त्विति वाच्यम्। यच्छरीरसाध्यज्ञानजनकमनःसंयोगध्वंसो यत्रात्मनि तच्छरीरावच्छेदेन तस्य तद्व्यवहारहेतुत्वात्। मनोविशेषितः संयोगध्वंसो विवक्षितो मनसि च स्वोपलक्षित इति न तत्रातिप्रसक्तिः।

ननु शरीरनाशजन्ये मरणेऽव्याप्तिः तत्र तादृशध्वंसस्य शरीरावृत्तेरिति चेत्। तत्र शरीरे मृतव्यवहाराभावेन तदसत्त्वेऽप्यदोषात्। आत्मनि तु तद्व्यवहारस्तत्र च तत्सत्त्वमस्त्येव न तु मृतशरीरे। हस्ताद्यवयवविगमाद् यत्र पाणिशरीरमुत्पन्नं तत्र मृतव्यवहारो न स्यात्। तादृशध्वंसस्य तत्रावृत्तेरिति चेन्न। तत्र मृतव्यवहारस्य गौणत्वादित्याहुः। तत्र तद्वृत्तिरनन्यगत्याङ्गीक्रियत इत्यप्याहुः।

न च शरीरमनोयोगे सत्येव यत्र प्राणोत्क्रमणान्मरणं तत्राव्याप्तिरिति वाच्यम्। जन्यात्मविशेषगुणोपधानविशिष्टमनोयोगाभावस्य विवक्षितत्वात्। विशेषगुणाभावाधीनविशिष्टाभावस्य तत्रापि सत्त्वादिति यत् तच्चिन्त्यम्। तादृशविशिष्टाभावे विभागजन्यत्वानन्वयात्। ध्वंसस्यैव विभागजन्यत्वात्। वस्तुतः शरीरमनोयोगे सत्येव तत्र मरणमित्यत्र मानाभावात्। प्राणोत्क्रमणकालेऽपि स्पर्शवद्वेगवत्प्राणसंयोगाददृष्टवदात्मसंयोगादेर्वा मनःक्रियासम्भवेन जन्यविभागजन्यमनःसंयोगसम्भवादिति दिक्।

एतच्च प्रसङ्गान्मरणव्यवहारौपयिकतल्लक्षणाभिप्रायेणोक्तम्। प्रस्तुते प्रकृतसाध्यव्याप्ये हेतूपन्यासे व्यर्थविशेषणत्वात्। तथाच ज्ञानजनकमनःसंयोग-

मादिभ्यः। प्रसिद्धशरीरवत्। न चैते सन्दिग्धासिद्धाः। आध्यात्मिकवायुसम्बन्धात्। सोऽपि मूले निषिक्तानामपां दोहदस्य पार्थिवस्य धातोरभ्यादानात्। तदपि

(१३८) स्वप्नवहनाडीमनःसंयोगजन्यं ज्ञानं स्वप्नः। तदसंयुक्तमनःसंयोगजन्यं ज्ञानं जागरणम्। रोगो धातुवैषम्यम्। चिकित्सा भेषजप्रयोगः। सजातीयानुबन्धः सजातीयस्नेहः। स च ज्ञानरूपतया यद्यपि न शरीरधर्म्मः तथापि तेन तद्धर्म्मजनकचेष्टोपलक्ष्यते

ध्वंसमात्रमेव लिङ्गतया बोध्यम्। न च तत्रापि व्यर्थविशेष्यत्वं तादृशसंयोगस्यैव व्याप्यत्वादिति वाच्यम्। यद्विउपत्तिकोपत्तेरिति न्यायात् ध्वंसनिष्ठव्याप्तिग्रहस्य विशेषणं विना असम्भवाद्विशिष्टे तदुपग्रहात् नीलधूमादेर्निष्ठावच्छेदकद्वयोपस्थितावेव बाधकावतारात्। अन्येत्विदं व्यवहारौपयिकमनुमित्यौपयिकञ्च। न च व्यर्थविशेषणता। अखण्डाभावे तस्यादोषत्वादित्याहुः।

(१३८) स्वप्नवहेति। स्वप्नवहसंज्ञिका या नाडी तन्मनःसंयोगजन्यमित्यर्थः। तेन नात्माश्रयः त्वाचतत्साक्षात्कारेऽतिव्याप्तिवारणाय मनःपदम्। ध्वंसेऽतिव्याप्तिवारणाय ज्ञानपदम्। अत्र स्वप्नवहेत्युपलक्षणं न व्यावर्त्तकमित्याहुः। अत्रापि व्यवहारौपयिकमिदं जन्यज्ञानमात्रमेव प्रकृतसाध्यव्याप्यतया लिङ्गत्वेन बोध्यम्। यद्यपि तदप्यात्मधर्म्म इति स्वरूपासिद्धस्तथापि तदवच्छेदकत्वं लिङ्गम्। अवच्छेद्यावच्छेदकभावसम्बन्धेन तस्यापि तद्धर्म्मत्वाद्वा न दोषः।

तदसंयुक्तेति। अत्र संयोगपदं चिन्त्यम्। नन्वत्र व्यर्थविशेषणत्वविशिष्टलिङ्गत्वे जन्यज्ञानमात्रस्यैव तथात्वे पूर्व्वहेतुभेद इति चेत्। न। अत्र ज्ञानपदस्य प्रत्यक्षात्मविशेषगुणपरत्वादन्यथा ज्ञानाभावदशायामव्याप्तेः। एवञ्चात्मविशेषगुणावच्छेदकत्वमात्रं लिङ्गमिति नोक्तदोषः। धात्विति। विषमधात्वधिकरणत्वमित्यर्थः। भेषजप्रयोगश्चिकित्सेत्यन्वयः। सचेति। यद्यपि पूर्व्वोक्तसम्बन्धेन तस्यापि तद्धर्म्मत्वमन्यथा पूर्व्वत्राप्यगतेः। तथापि किं चेष्टोपलक्षणेन। न च

वृद्धिक्षतभग्नसंरोहणादिभ्यामिति। अन्यथा कारणं विना कार्य्यानुत्पत्तिप्रसङ्गे सर्व्वमिदमामूलविशीर्णमा-

आध्यात्मिकवायुः प्राणाख्यः। वृक्षत्वादि(१३९)स्वप्नादिमद्वृत्ति-समानकालीनानेकवृत्तिप्राणिशरीरजातित्वात् गोत्ववदित्यत्र तात्पर्य्यम्। अभ्यादानमभ्यवहारोऽन्ननयनविशेषः। वृद्धिरवयवोपचयः। क्षतभग्नयोर्विभागविशेषविश्लिष्टावयवयोः संरोहणञ्च ताभ्याम्। वृक्षादे गिरिपाषाणेन व्यभिचारोऽभ्यादानहेतुवायोः प्राणत्वे मानाभावश्चेत्यत आह। आगमश्चेति।

नर्म्मदातीरसञ्जाताः सरलार्जुनपादपाः।
नर्म्मदातोयसंस्पर्शात् तेऽपि यान्ति परां गतिम्॥
श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः।

---

स्नेहस्य ज्ञानतया हेत्वविशेषणमाशङ्क्य तदुपलक्षणमिति बोध्यम्। सामान्यविशेषभेदादपि तद्भेदसम्भवात्। तथापि चेष्टायाः प्रत्यक्षत्वेन तत्र सन्दिग्धासिद्ध्युद्धारः सुकर इत्यभिप्रायेण तथोक्तम्।

(१३९) जीवनमरणादेः सुप्रसिद्धत्वादप्रसिद्धं स्वापादि साधयति। वृक्षत्वादीति। आदिपदं लतादिसंग्रहाय। स्वापादिमत्त्वमक्रमसम्बन्धेन बोध्यमतो न बाधः। स्वापावच्छेदकवृत्तित्वं वा साध्यम्। समानेति। शरीरपदमन्यथापि परं प्राणत्वे व्यभिचारवारणाय। न च प्राणिपदेनैव तदुद्धारः। प्राणित्वं हि ज्ञानजनकप्राण-संयोगाश्रयत्वम्। तच्च प्राणेऽपि संयोगस्य द्विष्ठत्वात्। एतेन प्राणिपदं व्यर्थम्। वृक्षादेः शरीरत्वासिद्धौ वृक्षत्वादेः शरीरवृत्तिजातित्वासिद्धिरिति दूषणद्वयमपास्तम्। घटत्वादौ व्यभिचारादाह प्राणीति। आदिपदग्राह्यजागरणगर्भे साध्ये व्यभिचाराभावेऽपि स्वप्नगर्भे साध्ये स्वप्नशून्यदेवादिशरीरविशेषवृत्तिजातौ व्यभि-चारः स्यादिति समानकालीनेति। नचैवमपि देवत्वे व्यभिचारो देवानामस्वप्नत्वा-

पर्य्येतीति संक्षेपः। आगमश्चात्रार्थे वहुतरोऽनुसन्धेय इति।

कथं पुनर्मानुषादिशरीरं पार्थिवम्। गन्धक्लेद-

इत्याद्यागम इत्यर्थः। ननु च तस्याधिकानिष्टपरत्वं वाधकं विना मुख्यान्यार्थपरत्वाभावादिति भावः।

पार्थिवमिति। (१४०) पृथिव्येकसमवायिकमित्यर्थः। पञ्च-

दिति वाच्यम्। जलीयशरीरादेरपि देवतात्वेन जलत्वादिना सङ्करेण तस्य जातित्वासिद्धौ जातिपदेनैव तन्निरासात्। नचैवं जलादावेव व्यभिचारः। तस्य स्वप्नादिमदवृत्तित्वे वाधकाभावात्। नहि सर्व्व एव जलीयादिदेवाः स्वप्नरहिताः इत्येके। वस्तुतोऽन्यानवयवीत्यत्र मात्रपदं देयम्। न च तोयादेः संसर्गिद्रव्यतयान्यानवयवित्वाभावादेव नोक्तव्यभिचार इति वाच्यम्। जलीयशरीरादि सर्व्वथा द्रव्यान्तरानारम्भात् तथाभ्युपगमात्। अतएव प्रोक्तशरीरलक्षणं सङ्गच्छते।

ननु स्वर्गिनारकिशरीरवृत्तिजातौ व्यभिचार इति चेत्। न। नानास्वर्गशरीरादिवृत्त्येकजातौ मानाभावात्। चैत्रत्वादिवत् प्रत्येकशरीरवृत्तिजातौ च समानकालीनानेकवृत्तित्वाभावात्।

ननु तथापि गोपीगतादृष्टवशेन कायव्यूहस्वीकरणात् कृष्णत्वे चण्डिकाया बहुशरीरस्वीकरणात् चण्डिकात्वे रुद्रत्वादौ च व्यभिचार इति चेन्न। तत्राप्येकजातीयत्वे मानाभावात्। भावे वा तावद्भिन्नेति विशेषणात्। एतेन योगिनो भोगार्थं कायव्यूहस्वीकरणात् तद्वृत्तिजातौ व्यभिचार इति परास्तम्। वृद्धिः क्षतभग्नेति ह्रस्वभ्रमं निवारयति। क्षत इति। प्राणत्वे इति। वायुनापि तत्सम्भवादिति भावः। तस्याधिकेति। द्वितीयाधिगमस्येत्यर्थः। एतच्चोपलक्षणम्। प्रथमागमस्य श्रुतिपरत्वमित्यपि द्रष्टव्यम्।

(१४०) पञ्चभौतिकत्वेऽपि पृथिवीकारणत्वाभ्युपगमात् प्रश्नोऽनुपपन्न इत्यत-आह। पृथिव्येकेति। समवाय इति। तथाच पञ्चभौतिकत्वमेवेति भावः।

पाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकमिति प्रसिद्धिः। सत्यम्। पञ्चानां कारणत्वमात्रेण न तु समवायितया। अथ तथैव किं न स्यात्। इत्थं द्व्यणुकादिप्रक्रमेण तावदारम्भ इति वक्ष्यते। तत्र यदि विजातीयपरमाणुभ्यः एकं द्रव्यमारभ्येत अगन्धमश्ममित्यापद्येत। एकस्य गन्धादेरनारम्भकत्वात्। आरम्भकत्वे

भूतोत्पादं यावदुक्तसंख्याप्रसिद्धा। अतो मानुषशरीरं तथास्ति नवेति पृथिव्युपादानकं द्रव्यं जलाद्युपादानकं नवेति संशयः। क्लेदः क्षरणम्। पाकः कुक्षरम्। व्यूहः क्रिया। अवकाशो मुखादावन्नादिगत्यप्रतिबन्धकः। पञ्चानामिति। जलादिधर्म्माणां तद्गतत्वेनोपलम्भस्य संयुक्तसमवायेनाप्युत्पत्तेरिति भावः। अथेति। समवायिबाधकसत्त्व एव संयुक्तसमवायोपगमादिति भावः।

ननु पार्थिवाप्यपरमाणुद्वयजन्यस्य पक्षत्वे आश्रयासिद्धिः। पार्थिवपरमाणुद्वयजन्यस्य पक्षत्वे वापादकासिद्धिः। पक्षधर्म्मावच्छिन्नं साध्यव्यापकं गन्धवदजन्यत्वमुपाधिरित्यत आह। एकस्येति। गन्धान्तरासहकृतस्येत्यर्थः। पार्थिवद्व्यणुकत्वं द्व्यणुक-

ननु शरीरपदं परारम्भकद्व्यणुकत्वेन पक्षत्वमिति नोक्तदोष इत्यरुचेराह। पक्षधर्म्मेति। द्रव्यत्वावच्छिन्नेत्यर्थः। एतच्च निर्गन्धत्वे साध्ये पृथिवीगुणे साध्याव्याप्तेरुक्तम्।

ननु समवायादिसाहित्यादेकस्य नारम्भकत्वमित्यत आह। गन्धान्तरेति। पार्थिवद्व्यणुकत्वमिति। सत्तादौ व्यभिचारादाह सत्यन्तम्। पृथिवीपरमाणुद्वया-

सततोत्पत्तिप्रसङ्गात्। अपेक्षणीयाभावात्। अथानेकस्यापि कुत एवैतत् प्रसज्यते। समवायिकारणस्यापेक्षणीयत्वात्। न ह्यनपेक्षितं समवायिकारणमारभते इति चेत्। तदेतदत्रापि तुल्यम्।

मात्रवृत्तित्वे सति यद्याप्योपादेयवृत्तिः स्यान्निर्गन्धमात्रवृत्तिः स्यादिति विपक्षबाधकेन हेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वमिति भावः।

शङ्कते अथेति। एतद्गन्धादेः सततोत्पत्तिरूपं शङ्कित्वैव सिद्धान्तिमतमाह। समवायिकारणस्येति। उत्पाद्यस्य गन्धादेर्यत् समवायिकारणं द्व्यणुकादि तदनुत्पत्तौ तदभावादेव परमाणुगन्धादि न गन्धान्तरमारभते इत्यर्थः। स एव निराकरोति। तदेतदिति।

रथ्यद्व्यणुकमात्रवृत्तिधर्मे व्यभिचारादाह। आप्येत्यादि। आपाद्ये मात्रपदमिष्टापत्तिवारणाय। विजातीयावयवारब्धे परेण निर्गन्धत्वाभ्युपगमात्। यद्यप्येवमगन्धमरसमित्यादिमूलोक्तापादनेऽपि परस्येष्टापत्तिः स्यात्। तथाच यस्य निर्गन्धत्वाभ्युपगमः स्वारसिकस्तस्यापि यदीदानीमेव तथाभ्युपगमस्येष्टापादनं कुर्य्यात् तदा तदिति मन्तव्यम्।

ननु पार्थिवाप्यद्व्यणुकवृत्तिसंयोगद्वित्वादौ व्यभिचारः। न च गुणान्यत्वे सतीत्यपि विशेषणम्। द्व्यणुकत्वादौ तदुभयद्व्यणुकान्यान्यत्वादौ च तथापि व्यभिचारादिति चेत् न। द्व्यणुकपदस्य पृथिवीसमवायिकारणतया पृथिवीसमवायिकारणमात्रवृत्तित्वे सतीत्यर्थः। पृथिवीसमवायिकारणमात्रवृत्तित्वाभ्युपगमेऽपि परस्य तद्वृत्तित्वाभ्युपगमात्। न चैवं दृष्टान्तालाभः। पृथिवीजल-

न च तन्त्वादिगतानां रूपादीनामनेकेषामेवा-
रम्भकत्वदर्शनादन्यत्रापि तथा कल्पयितुं युक्तम्।
कारणानां सजातीयतया तत्र तथोत्पत्तेः। विजातीया-
नामारम्भकत्वेऽन्यथा भविष्यति। विपक्षे बाधका-
भावात्। एतेनोष्णं जलं सुरभिः समीरण इत्याद्युप-
पद्यते। न। एकेन गुणेन गुणारम्भे जातिसङ्करप्रस-

ननु शरीरद्व्यणुकरूपगन्धादिकम् (१४१) अनेकमनेककरूपं
गन्धारभ्यमवयविरूपगन्धादित्वात् पटरूपगन्धादिवदित्याशङ्का वि-
जातीयानारभ्यत्वोपाधिना निराकरोति। न चेति। विजा
तीयाभ्यामनारम्भे बाधकं विनेयं प्रतीति भ्रान्ता स्यादिति भावः।
एकेनेति। पृथिवीत्वं जलत्वादीनामन्योन्यात्यन्ताभावसमानाधि-

द्व्यणुकसमवायिकारणमात्रवृत्तिसंयोगत्वादेरत्यात्वादिति वदन्ति। तत्संयोग-
पार्थिवद्व्यणुकान्यतरत्वे व्यभिचारतादवस्थ्यात्। वस्तुतो निर्गन्धमात्रवृत्त्यत्यन्ता-
वृत्तिपदं पूरणीयम्। तेन निर्गन्धमात्रवृत्तित्वात् स्यादित्यापादनमतो नोक्तव्यभि-
चारः। द्व्यणुकत्वादेरपि निर्गन्धमात्रवृत्तिजलद्व्यणुकादिवृत्तित्वात्। नचैवं सत्ता-
दावापाद्यसत्त्वेन व्यभिचाराभावात् सत्यन्तवैयर्थ्यमिति वाच्यम्। पृथिवीजलद्व्यणु-
कोपादेयसंयोगवृत्तितत्संयोगत्वादौ व्यभिचारवारकत्वात्। न चैवमपि मात्रपद-
व्यर्थम्। पार्थिवद्व्यणुकपूर्वीकृततत्संयोगान्यतरत्वे व्यभिचारवारकत्वात्।

लिङ्गासङ्कृतिसङ्करेति गन्धादेरिति।

(१४१) अनेकेति। परमाणुगन्धादौ व्यभिचारादाह। अवयवीति।
विजातीयाभ्यामिति। तथा चानुभवबलादवश्यं विजातीयाभ्यामारम्भ इति
भावः।

ङ्गात्। तथाहि गन्धवत्त्वाद् द्व्यणुकं पृथिवीजातीयं सांसिद्धिकद्रवत्वाशीतत्वाच्च तेजः स्यात्। अपाकजानुष्णाशीतस्पर्शवत्त्वाच्च वायुः स्यात्। तदयं प्रमाणार्थः। गन्धवन्ति द्व्यणुकानि गन्धवद्भिरेव परमाणुभिरारभ्यन्ते कार्य्यत्वे सति गन्धवत्त्वात् पार्थिवपरमाणु-

करणानामेकत्र सङ्करः स्यादित्यर्थः। न च पृथिव्या विजातीयमेव पाञ्चभौतिकं स्यादिति वाच्यम्। गन्धवत्त्वस्य पृथिवीत्वस्य व्यवस्थापकस्य तत्रापि सत्त्वात्। अन्यथा सर्व्वत्र विजातीयस्यैवारम्भकत्वे स्थूलपार्थिवस्य क्वचिदप्यनुपलम्भात् परमाणावपि पृथिवीत्वासिद्धौ भूतानां पञ्चत्वासिद्ध्यापत्तेरिति भावः। गन्धवद्भिरिति। समवायिभिरिति शेषः।

ननु पार्थिवपरमाणुद्वयारभ्यस्य पक्षत्वे सिद्धसाधनम्। विजा-

पञ्चत्वासिद्ध्यापत्तेरिति। तथाच पाञ्चभौतिकत्वबोध्यकागमस्याप्रमाणत्वे किं शरीरत्वात्वे मानमिति भावः। वस्तुतः पृथिवीत्वादेः परमाणुवृत्तित्वे तदारब्धे तदावश्यकतया सङ्करो दुर्वारः। परमाणुवृत्तिजातेरुपादेयद्रव्यवर्त्तित्वनियमात्। अत्राकाशस्य निःस्पर्शत्वात् विभुत्वाच्च द्रव्यानारम्भकत्वेन पाञ्चभौतिकत्वागमः कारणत्वमात्रपर एवाप्रमाणञ्चेति तत्त्वम्। समवायिभिरिति गन्धसमवायिभिरित्यर्थः। तथाच गन्धसमवायिभिरेव परमाणुभिरारभ्यन्ते इति साध्यार्थः। तेन संयुक्तसमवायादिसम्बन्धेन गन्धवद्भिर्जलादिपरमाणुभिर्नार्थान्तरमिति भावः। न च घटादेः परमाण्वनारभ्यत्वाद्व्यभिचारः। साक्षात्परम्परासाधारणारम्भकस्य तु विवक्षितत्वात्। वस्तुतो गन्धसमवायिभिरेवारभ्यन्ते इत्येव साध्यमतो न दोषः। हेतौ द्व्यणुकपरं कार्य्यपदमित्यन्ये।

**द्वयारब्धद्व्यणुकवत्। विवादाध्यासिताः परमाणवो गन्धवन्त्येव द्व्यणुकान्यारभन्ते गन्धवत्त्वात्। ये पुनर्निर्गन्धान्यारभन्ते न ते गन्धवन्तः यथा निर्गन्धजलाद्यारम्भकाः परमाणवः।**

तायतदारब्धस्य पक्षत्वे चाश्रयासिद्धिः। सिद्धौ वा बाधः। सपक्षातिरिक्तानां सर्व्वेषामेव पक्षत्वम्। (१४२) यद्वा मानुषशरीरावयवपरम्परारम्भकं द्व्यणुकं न निर्गन्धसमवेतं गन्धवत्त्वात् सम्प्रतिपन्नवत्। यद्यपि शरीरपाञ्चभौतिकविप्रतिपत्तावर्थान्तरं तथापि गन्धवदारभ्यत्वादगन्धवत्त्वापादने यः कश्चिदेवमस्तित्याह तं प्रत्याह। विवादाध्यासिता इति। न च घटेन व्यभिचारः। पार्थिवः परमाणुर्नाप्यपरमाणुसमवेतद्रव्यसमवायिकारणं गन्धवत्त्वात्। सम्प्रतिपन्नवत्। यद्वा पृथिवीत्वं न जलसमवेतद्रव्यवृत्ति जलावृत्तिजातित्वात्। मनस्त्ववदिति विवक्षितत्वात्।

(१४२) नन्वेवं विपक्षस्यापि पक्षप्राप्तौ संगतो बाध इत्यरुचेराह। यद्वेति। तथाच पक्षतावच्छेदकस्योभयसिद्धत्वात् नोक्तदोषः। अन्यथा साध्यतदभाववतः पक्षत्वविकल्पादनुमानमात्रोच्छेदापत्तिरिति भावः। जलीयशरीरारम्भकाणां बाधासिद्धीत्यत आह। मानुषेति। यद्वा मानुषस्यापि जलीयं शरीरं तदा तदन्यमानुषेति बोध्यम्। यद्यपि गन्धवत्परमाणुत्वादिति हेतुनिरुक्तौ नातिव्यभिचारः तथापि पाञ्चभौतिकत्ववादिनोऽपि शरीरे गन्धकेदादेरभ्युपगमात् न प्रति सिद्धसाधनमेवेति प्रकारान्तरमाह। पार्थिवः परमाणुरिति।

संयोगत्वे व्यभिचारादाह साध्ये द्रव्यपदम्। हेतौ जातिपदं विन्यस्तम्।

ननु परेण शरीरे जलत्वपृथिवीत्वादेरभ्युपगमाज्जलावृत्तित्वमन्यतरासिद्धम्।

न च नैते गन्धवन्तः तस्माद् गन्धवन्त्येव द्व्यणुकान्यारभन्ते। न च दृष्टान्तासिद्धिः। अनियमारम्भे सजातीयाभ्यामपि आरम्भाभ्युपगमात्। अन्यथा निर्गन्धस्य जलादे नीरसस्यानलादे नीरूपस्य पवनस्यानुपलम्भप्रसङ्गः। एवं सांसिद्धिकद्रवत्ववन्ति द्व्यणुकानि तथाभूतैरेव परमाणुभिरारभ्यन्ते। कार्य्यत्वे सति सांसिद्धिकद्रवत्ववत्त्वात्। आप्यपरमाणुद्वयारब्धद्व्यणुकवत्। जलपरमाणवः शीतान्येव द्व्यणुकान्यारभन्ते शीतत्वात्। ये पुनरशीतान्यारभन्ते तेन शीताः यथा-शीततेजोद्व्यणुकारम्भका इत्यादि स्वयमूह्यम्। तस्मात् सजातीयानामेवारम्भकत्वम्। न विजातीयानामिति स्थितम्। तथापि शरीरस्य कथं पार्थिवत्वनिश्चयः। इत्थं क्लेदादीनां परावृत्तावपि शरीरस्य प्रत्यभिज्ञानात्।

न च सङ्करभिया न तदनभ्युपगमात् चित्ररूपवज्जलादिविजातीयशरीराभ्युपगन्तारं प्रत्यनुमानमिति नोक्तदोष इति वाच्यम्। एवं सिद्धसाधनतापत्तिरिति चेत्। अत्र ब्रूमः। जलसमवेतस्यावयविनो यत् द्रव्यं समवायिकारणं तद्वृत्तित्वनिषेधः साध्यत इति सिद्धसाधनम्। तदभ्युपगन्तारं प्रत्येवानुमानमिति नासिद्धिः। जले तदवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वादिति हेत्वर्थ इति नासिद्धिरित्यन्ये।

प्रत्यभिज्ञानादिति मूलम्। ननु गुरुत्वपरिमाणाल्पत्वादन्यदेव तच्छरीरमिति चेन्न। तज्जात्यभेदावगाहनात् तदसिद्धेरित्याहुः।

गन्धस्य च यावद्द्रव्यभावित्वात्। घटवत्। यथाहि घटादौ पार्थिवत्वे क्लेदशोषदशयोरपि गन्धोऽनुवर्त्तते। शैत्यादयस्तु कुसुमाधिवासितजलादिगन्धवति वर्त्तन्ते तथा शरीरेऽपीति तद्वत् पार्थिवत्वमवधार्य्यते।

इन्द्रियमाह। इन्द्रियमिति। गन्धव्यञ्जकं यदिन्द्रियं तत् घ्राणम्। रूपाद्यव्यञ्जकत्वे गन्धस्यैव व्यञ्जकं

तथापीति। विजातीयानामनारम्भकत्वे मानुषशरीरं पृथिवीसमवायिकारणकमिति कुतो नियम इत्यर्थः। गन्धस्य चेति। (१४३) तद्वृत्तितयोपलभ्यमानस्य गन्धस्य बाधकं विना तदीयत्वादित्यर्थः। शैत्यादयस्त्विति। जलादिव्यावृत्तौ शैत्यादिज्ञानाभावात् तदनुवृत्तौ च तदभावात् तदौपाधिकत्वमित्यर्थः। पार्थिवत्वमिति। मानुषशरीरं पार्थिवं गन्धवत्त्वादित्यर्थः।

मनसि व्यभिचारवारणायाह। रूपादीति। (१४४) पार्थिवघ्राणे मानमाह। गन्धोपलब्धेरित्यादि। गन्धोपलब्धिः रसाद्युप

(१४३) ननु संयुक्तसमवायेन तद्ग्रह इत्यत आह। तद्वृत्तितयेति। साक्षात्सम्बन्धे बाधकाभावादिति भावः।

गन्धवत्त्वादिति। गन्धयोग्यत्वादित्यर्थः। तेन चित्रगन्धानभ्युपगमाद्विजातीयगन्धवदवयवारब्धे निर्गन्धशरीरे न भागासिद्धिः। वस्तुतस्तदन्यत्वेन पक्षत्वम्।

(१४४) रूपादीतीति। न चैवमप्याद्यपदं व्यर्थम्। रसाद्यव्यञ्जकत्वादिनापि व्यभिचारवारणात्। अन्यतरपरिचयेण केवलरसव्यञ्जनार्थत्वात्। गन्धोपलब्धीति। लौकिकगन्धसाक्षात्कार इत्यर्थः। रसाद्यनुपलब्धादिपदं स्पर्शाव्यञ्जकत्वपरिहाराय। अन्य-

यदित्यर्थः । गन्धोपलब्ध्या तावत्कारणमात्रं सिद्धम् । क्रियायाः करणनिष्पाद्यत्वनियमात् । तच्च प्राप्यकारि-जनकत्वे तदप्राप्तावजनकत्वाच्च द्रव्यम् । संयोगाश्रय-त्वात् । पार्थिवं गन्धवत्त्वात् । गन्धवच्च रूपाद्यव्यञ्जकत्वे गन्धस्याभिव्यञ्जकत्वात् । कुङ्कुमगन्धाभिव्यञ्जक-

लब्धिजनकशरीरसंयोगिकारणजन्या तदन्यसाक्षात्कारत्वात् । रूप-प्रत्यक्षवत् । न च दृष्टान्तासिद्धिः । अन्धकारस्थं गोलकं घट-साक्षात्कारकारणघटसंयोगाधिकरणतेजोवृत्तिघटसाक्षात्कारकारण-संयोगाधिकरणं रूपवत्त्वे सति घटसाक्षात्कारकारणत्वात् घटव-दिति संयोगिव्यावृत्तकारणसिद्धेः । तत्पार्थिवरसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वात् । चम्पकाद्यधिवासाधिकरणवितत-

तदघटितं साध्यद्वयं विशिष्टे व्यर्थविशेषणत्वात् रूपाभिव्यञ्जकत्वघटितञ्च न साध्यम् । दृष्टान्तस्य साध्यवैकल्यापत्तेः । न चैवं चक्षुषार्थान्तरम् । जातान्धस्य गन्धसाक्षात्-कारानुपपत्तितस्तत्र बाधस्फुरणात् । न चैवं मनसार्थान्तरवारणाय रसादीति व्यर्थम् । तत्र तदस्फुरणदशायां तदभिधानात् । सिद्धसाधनप्रसङ्गाच्च । गन्धेन सिद्धसाधनवारणाय संयोगीति । न चैवं शरीरपदमपि व्यर्थम् । उद्देश्यप्रतीत्यर्थं तदुपादानात् । अतएव कारणपदमपि । यत्तु घ्राणेन्द्रियाधारनासापुटेन सिद्ध-साधनवारणाय शरीरपदम् । तस्य च तदवयवत्वेन संयोगित्वमिति । तच्चिन्त्यम् । तस्य स्वापरसाधूपलब्धिजनकत्वेनाद्यविशेषणनिरस्तत्वात् । न च रसे परकीयत्वं विशेषणम् । गौरवात् । तदन्येति । रसाद्यविषयकबहिर्विषयकलौकिकसाक्षात्-कारत्वादित्यर्थः । दृष्टान्तेति । गोलकस्य शरीरसंयोगित्वाभावात् तदधिष्ठानस्या-न्यस्याभावादित्यर्थः ।

तैलवदिति। सर्व्वप्राणिनामिति प्राणिभेदेनेन्द्रियवैचित्र्यं निवारयति। यदि गन्धाभिव्यक्तौ सामर्थ्यद्रव्यवत्। कुङ्कुमगन्धाभिव्यञ्जककुक्कुटीचारो न दृष्टान्तः। तस्य साक्षात्कारविषयरूपवत्त्वेन रूपाद्यभिव्यञ्जकत्वाभावात्। अतएव

अन्धकारस्थमिति। एतच्च बाह्यालोकेनार्थान्तरवारणाय। तदपि मानुषगोलकं बोध्यम्। तेन मार्ज्जारादिनयनदृश्यमानतेजसा नार्थान्तरम्।

यत्तु तादृशतेजोघटसंयोगस्य स्वविषयकसाक्षात्कारकारणत्वेऽपि तस्य विषयसंस्कारकत्वाभावाद्घटसाक्षात्कारकारणत्वं नेति प्रथमघटपदेनैव तदर्थान्तरवारणम्। न च तादृशतेजोगोलकसंयोगस्य घटसाक्षात्काराजनकत्वात् अन्यघटपदेनैव तद्वारणम्। अञ्जनादेरिव तस्य चक्षुःसंस्कारकतया गोलकवृत्तेरिव तथात्वेनान्वयव्यतिरेकाभ्यां तथात्वादिति। तन्न। एवं सिद्धसाधनाभावेऽप्येतदनुमानबलादेव तद्धेतुत्वसिद्ध्यार्थान्तरस्यापरिहारात्। अन्यथा बाह्यालोकेनार्थान्तरवारणाय पक्षविशेषणानुपपत्तेः। तस्य विषयसंस्कृततया गोलकालोकालोकसंयोगस्याहेतुत्वादिति। तस्मान्मार्जारादिगोलकस्य पक्षबहिर्भाव एव युक्त इति। आकाशादिनार्थान्तरवारणाय तेजः पदम्।

ननु तेजोवृत्ति तादृशसंयोगाधिकरणमित्येवास्तु। न च प्राप्यकारित्वसाधनं तदुपादानाय तदुपादानमिति वाच्यम्। प्रस्तुतस्य दृष्टान्तासिद्धिनिवारणस्य तावतैव सम्भवे प्राप्यकारित्वसाधनेऽर्थान्तरादिति चेत्। अत्र प्राप्यकारितादृशकारणजन्यत्वसाध्याभिप्रायेण दृष्टान्तासिद्धिरूपतया तामादाय दूषणमिति तदभिप्रायेणेदमित्यन्ये। प्रसङ्गात् तत्साधनमित्यन्ये।

नन्वेवमपि द्वितीयं घटसाक्षात्कारकारणपदं व्यर्थम्। तेन विनापि प्राप्यकारित्वसिद्धेरिति चेत्। न। तथैवोद्देश्यत्वादित्याहुः।

रूपवत्त्व इति। सन्निकर्षे व्यभिचारवारणाय सत्यन्तम्। पटादौ व्यभिचारवारणाय घटपदम्। न चान्धकारोत्पन्नविनष्टे त्वचा साक्षात्कृते घटे व्यभिचारः। चाक्षुषत्वेन विशेषणात्। कारणत्वञ्च फलोपधानमतो न दोषतादवस्थ्यम्।

मस्ति पृथिव्याः किं न सर्व्वैव पृथिव्येवमित्यत आह। जलाद्यनभिभूतेरिति। अतएव श्लेष्माद्यभिभवे गन्धो न गृह्यत इति भावः। घ्राणमिति लोकप्रसिद्धमित्यर्थः। तृतीयं पृथिवीकार्य्यमाह। विषयस्त्विति। यद्यपि

नवशरावस्थगन्धव्यञ्जकत्वेन जले न व्यभिचारः। (१४५) यद्वा गन्धसाक्षात्कारासाधारणकारणतावच्छेदकद्रव्यत्वव्याप्यव्याप्यजाति-मत्त्वादिति हेतुः। जलस्य गन्धव्यञ्जकत्वं जलत्वेनैव न तु तद्व्याप्य-जात्यन्तरेण। एतेनेन्द्रियाणां प्राप्यकारित्वेऽपि संयोगरूपप्राप्तौ मानाभावः। न च द्रव्यत्वेन तत्साध्यम्। तस्याप्यसिद्धेः। तथाच

तदप्यसाधारण्येन विवक्षितम्। अतो न शरीरेण व्यभिचारः। यत्तु रूपवत्त्व-व्याप्यघटसाक्षात्कारकारणतावच्छेदकत्वादित्यर्थः। तेन शरीरे न व्यभिचारः। तत्र तदेकशरीरत्वस्य वायवीयशरीरवृत्तेरिति। तच्चिन्त्यम्। एवमसिद्ध्यापत्तेः। तदवच्छेदकगोलकत्वस्य वायवीयगोलकेऽपि वृत्तेः। तेजःसंयोगस्य तेजस्यपि सत्त्वान्न तत्र व्यभिचारः। न च रत्नविशेषे व्यभिचारः। तस्य घटसाक्षात्कारहेतु-त्वात्। तत्प्रभायाश्च साध्यसत्त्वात्। रसादीति। सत्यन्तं मनसि व्यभिचारवारणाय। नानाहेतुसूचनायादिपदम्। गन्धादौ व्यभिचारादाह द्रव्यपदम्। जलपर-माण्वादौ व्यभिचारादाह व्यञ्जकेति। रसाव्यञ्जकगर्भे हेतौ वायूपनीतजले शीत-स्पर्शव्यञ्जके व्यभिचारादाह गन्धेति। स्पर्शाव्यञ्जकत्वगर्भे च श्रोत्रे व्यभि-चारवारणाय तत्। न च तैजसशरीरनासापुटे रसाव्यञ्जकत्वगर्भे व्यभिचार इति वाच्यम्। स्पर्शव्यञ्जकत्वमात्रे तात्पर्य्यात्। रूपवत्त्वे रूपादिमत्त्वे। रसस्य रसादेरित्यर्थः।

(१४५) मूलस्य दृष्टान्तानुरोधाद्व्याख्यान्तरमाह। यद्वेति। घ्राणे व्यभिचार-वारणायासाधारणेति।

शरीरमपि विषयः न तथापि शरीरत्वेनैव तदसाधारणं पुरुषार्थसाधनमिति दर्शयितुं तदेव रूपं तस्य दर्शितम्। वक्ष्यमाणे तु विषयत्वमेवासाधारणमत-स्तदुच्यते।

द्व्यणुकादिर्यस्य प्रक्रमस्य स तथोक्तः। तेनारब्धो निष्पादितः। मृत्त्वं मृत्तिकात्वम्। पाषाणत्वं प्रस्तरत्वं स्थावरत्वम्। उद्भित्त्वं सामान्यविशेषः। तन्मृत्तिकात्वं केषु वर्त्तत इत्यत आह। तत्रेति। मृद्विकारा मृत्तिकारूपविकाराः। के पाषाणा इत्यत आह। उपलेति।

गन्धव्यञ्जकत्वं गन्धघ्राणसन्निकर्षेण व्यभिचारि। गन्धोपलब्धेः कारणजन्यत्वानुमितौ च दृष्टेनार्थान्तरम्। न च द्रव्यकरणकेति साध्यं शरीरेण सिद्धसाधनात्। नाप्यसाधारणद्रव्यकरणकेति साध्यम्। मनसः साधारण्ये सुखसाक्षात्कारासाधारणत्ववदस्यापि अविरोधात्। न च शरीरभिन्नत्वेन साध्यं विशेषणीयम्। मनसा त्वचा वा सिद्धसाधनात्। शरीरमात्रकरणकक्रियायां व्यभिचार-श्चेत्यपास्तम्।

ननु द्रव्यत्वव्याप्यपदं व्यर्थम्। न च जले व्यभिचारवारणाय तदिति वाच्यम्। शीतस्पर्शवत्त्वादिनिष्ठायोग्यजलसम्बन्धेऽपि सुरभिगन्धानभिव्यक्ते जले तदनवच्छेदकतया जातिपदादेव तद्वारणात्। न च गन्धमादाय गन्धे व्यभिचारवारणाय तदिति वाच्यम् अतीन्द्रियगन्धानभिव्यक्ते स्थलादपि गन्धविशेषोपलब्धेरेव तथात्वात्। द्वितीयव्याप्यपदस्य तथापि व्यर्थत्वाच्च। न च जातिपदं धर्ममात्रपरम्।

उपला ग्रावाणः। मणयो: माणिक्यादयः। वज्रं हीरकम्। आदिग्रहणाद् गैरिकादयः। स्थावरा इति। वृक्षाः पुष्पफलवन्तः स्कन्धशाखिनः। तृणान्युलपादीनि। ओषध्यः फलपाकान्ताः कलमादयः। गुल्मा भाटाः। लताः कुष्माण्डीप्रभृतयः। अवतानाः केतक्यादयः। वनस्पतयो विना पुष्पं फलिनः। अत्र च शरीरग्रहणेन तदवयवा मांसास्थ्यादयः तद्विकाराश्च क्षीरवृक्षादयः संगृहीताः। इन्द्रियग्रहणेनैव तदवयवाः विषयग्रहणेनैव द्व्यणुकादयः पाषाणग्रहणेनैव हरितालादयः स्थावरग्रहणेनैव पत्रपुष्पादयः तृणग्रहणे-

मांसास्थ्यादय इति। मांसवदस्थ्यवच्छेदेनापि सुखाद्यनुभवात् तस्यापि अवयवत्वमिति भावः।

अतो जल एव व्यभिचारवारणाय तदिति वाच्यम्। योग्यजलत्वस्य द्रव्यत्वव्याप्यजलत्वव्याप्यतया तथापि व्यभिचारादिति चेत्। अत्र जातिपदं धर्म्ममात्रपरम्। अन्यथा कुक्कुटोच्चारादिदृष्टान्तस्यापि साधनवैकल्यापत्तेः। अयोग्यतत्सम्बन्धेन तदनभिव्यक्तेः। तत्रापि योग्यतादिघटितोपाधेरेव तदवच्छेदकत्वात्। न च तद्वृत्तिजाते योग्यसंस्थानमात्रव्यङ्ग्यत्वमिति वाच्यम्। द्वित्वादिवत् बाधकाभावेन द्व्यणुकादिवृत्तित्वात्। एवञ्च जल एव व्यभिचारवारणाय तत्। न चैवमपि दोषतादवस्थ्यम्। द्रव्यत्वव्याप्यव्याप्यपदस्य द्रव्यत्वसाक्षाद्व्याप्यजात्यघटितद्रव्यत्वव्याप्यपरत्वात्। न च तैजसादिशरीरनासापुटे व्यभिचारः। तद्भिन्नत्वेनापि विशेषणात्। एतेन तादृशद्रव्यत्वव्याप्यजातिमत्त्वमेव हेतुः जले तु योग्यजलत्व

नैव तालादयः वृक्षग्रहणेनैव काष्ठादयः ओषधिग्रहणेनैव तद्विकारादयस्तैलतण्डुलादयः।

ननु कोऽयं द्व्यणुकादिप्रक्रमो द्व्यणुके एव प्रमाणाभावात्। त्रसरेणवस्तावत् प्रत्यक्षसिद्धाः। ते च चाक्षुषद्रव्यत्वादेव महान्तो द्रव्यस्य चाक्षुषतां प्रति रूपविशेषवन्महत्त्वस्यापि कारणत्वादन्यथा दूरदूरतरादौ तत्प्रकर्षानुविध्यनुपपत्तेः।

महत्त्वे सति रूपवत्त्वात् क्रियावत्त्वाच्च ते सावयवाः कार्य्याश्च। अन्यथा सावयवगतसंख्याद्यनुपपत्तौ महत्त्वानुपपत्तेः। नित्यत्वे प्रकर्षकाष्ठाप्राप्तेरल्पीभावस्य महत्त्वविरोधात्। न च त्रसरेणववयवा अपि सावयवाः। तदवयवकल्पनायां प्रमाणाभावात्। नहि त्रसरेणुवत् तेऽपि महान्तो रूपविशेषवतां महतां चाक्षुषत्वप्रसङ्गात्। यद्यपि च ते महत्त्वव्यावृत्तेरणुपरिमाणा निरवयवत्वाच्च प्रचयवर्ज्जिता स्तथापि बहुत्वान्महत्कार्य्यद्रव्याण्यारभन्ते। तथाच परमाणव एव त्रसरेणववयवा इति कुतो द्व्यणुकम्। उच्यते।

---

रूपाधिरवच्छेदकः। कर्कटोच्चारादौ च जातिरिति निरस्तम्। द्व्यणुकव्यापादे वैयर्थ्यापत्तेश्च। जलत्वेनैवेति। जलत्वघटितधर्म्मेणैवेत्यर्थः।

महतः कार्य्यनियमात् द्व्यणुकसिद्धिः। अन्यथा परमाणुभिरेव बहुत्वसंख्योत्पत्तेर्महद्द्रव्यारम्भे गोघटादेरपि तैरेवारम्भसम्भवादान्तरालिकाल्पाल्पतरादिकार्य्योपलम्भविरोधात्। तथाहि त्र्यणुकवदनुपलक्षितरेखोपरेखो गोघटादिरपि स्यात्। तथाच संस्थानभेदानुपलम्भे तदभिव्यङ्ग्य घटत्वादिकमपि नोपलभ्येत। न चारभ्याप्यारभन्त इति तदुपालम्भोपपत्तिः। मूर्त्तानां समानदेशताविधानात्। न्यूना-

महत इति। महावयवारभ्यत्वं नोपाधिः। (१४६) महत्त्वस्य वैयर्थ्यात्। आन्तरालिकेति। घटे नष्टे कपालशर्कराचूर्णादिकार्य्यं नोपलभ्येतेत्यर्थः।

ननु परमाणुभिः साक्षाद् घटानारम्भेऽपि तदवयवपरम्पराद्वारा महावयव्यारम्भे नोक्तदोष इत्याशङ्क्य निराकरोति। न चेति। यद्यप्यारभ्यारम्भकत्वपक्षे अवयविनमारभ्यैव परमाणुर्महावयव्यारम्भक इति सिद्धं त्रसरेणोः सावयवारभ्यत्वं सिध्य-

(१४६) महत्त्वस्येति। न च साधनव्यापकत्वपरिहारार्थत्वान्न वैयर्थ्यमिति वाच्यम। व्याप्यवद्व्यापकेऽपि वैयर्थ्यात्। तत्त्वेन व्यापकताग्रहाभावादित्येके। वस्तुतोऽनुकूलतर्काभावान्न साध्यव्यापकत्वग्रह इति बोध्यम्।

यद्यपि येन पूर्व्वं द्व्यणुकस्य खण्डयित्वा प्रसाधनात् पुनरुक्तोऽयमारम्भस्तथापि दोषान्तरदानायाधुनोक्तमित्याहुः। सिध्यन्त्येवेति। न च रेखाद्युपलम्भान्यथानुपपत्त्या महावयविनि तथात्वेऽपि त्रसरेणौ तदभावात् साक्षात् परमाण्वार-

धिकदेशतया समानदेशत्वे अविरोध इत्यपि नास्ति। न्यूनदेशता हि यत्र नास्ति तत्राधिकदेशत्वस्य स्थितिं मा विरौत्सीत् स्वदेशे तु विरुध्यादेव। तत्राप्यविरोधित्वे मूर्त्तत्वं जह्यात्। अवयवरूपादिवत्। संयोगिन्यपि वा देशे न्यूनाधिकदेशतया समानदेशत्वाविरोधः स्यात्। न चोदञ्चनादिच्छन्नदेशे घटादिः संयोगेन वर्त्तते।

त्येव। तथापि सोऽपि पक्षो निराकर्त्तव्य एवेति दूषणान्तरमुक्तम्। उदञ्चनं शरावः।

नन्वेकत्र घटे आलोकेन्द्रियादिसंयोगदर्शनाद् व्यभिचारः। न च कठिनयोर्मूर्त्तयोरसमानदेशत्वम्। एकत्र भूतले घटतद-वयवसंयोगदर्शनात्। मैवम्। घटो यदि परमाणुवृत्तिः स्यात् प्रत्यक्षद्रव्यं न स्यात्। घटो वा न स्यादित्यापादनार्थत्वात्। न चामहत्त्वमुपाधिः। साधनव्यापकत्वात्। मूर्त्तयोरेकसमवायि-देशता नास्ति इति नियम इत्यन्ये।

व्यत्वमेवास्त्विति वाच्यम। निरुपधिसहचारात तथा नियमादिति भावः। सोऽपीति। आरभ्यारम्भपक्षोऽपीत्यर्थः। शराव इति। शरावविशेष इत्यर्थः। तथाच घटशरावोदञ्चनादीनामिति पञ्चमटीका। गोवर्द्धोवर्द्धन्यायेनेति बोध्यम। अन्ये तु तत्र योगादूर्द्ध्वगमनशीलवस्तुपरत्वमत्र कृत्वा शरावपरत्वमित्याहुः।

घटो यदीति। परमाणुरूपादिकं दृष्टान्तः। द्व्यणुके व्यभिचाराद्वाह। प्रत्यक्षेति। सत्त्वादौ व्यभिचाराद्वाह द्रव्यपदम। साधनेति। आकाशादौ साध्या-व्यापकत्वमपि बोध्यम्। मूर्त्तयोरिति। परिमाणवतोरित्यर्थः। एकदेत्यपि देयम्।

कथं तर्हि चरमादितन्त्वपकर्षणे स्वल्पतरतमादिपटोपलम्भ इति चेत् । न । प्रतिबन्धकविगमेऽवस्थितसंयोगेभ्यः खण्डपटोत्पत्तेः । आद्यादितन्त्वपकर्षणे त्वयाप्येषैव रीतिरनुसरणीया । तदा हि द्वितन्तुकादिकपटकार्य्यात् न समस्तकार्य्यविनाशे खण्डपटानुत्पत्तौ च तन्त्वतिरिक्तं न किञ्चिदुपलभ्येत ।

नन्वेष विचारो द्व्यणुकेष्वपि समानः । तैरपि बहुभिः

---

कथं तर्हीति । पटनाशे (१४७) सति तदवयवतन्तूनामेवोपलम्भापातादिति भावः ।

ननु पूर्व्वपूर्व्वपटसम्बद्धताग्रिमाग्रिमतन्तूनां पटारम्भे सति तन्त्वपकर्षणात् पूर्व्वपटोपलम्भ उपपद्यत एव । मैवम् । द्वितन्तुकपटे केवलं तन्त्वारभ्यत्वदर्शनात् । अन्यत्रापि तन्तुभिरेव पटारम्भ इत्याशयात् । प्रतिबन्धकेति । प्रतिबन्धकोऽत्र महापट एव । अत्र यद्यपि प्रतिबन्धकाभावस्य संसर्गाभावत्वेन हेतुत्वान्महापटोत्पत्तेः प्रागपि खण्डपटो जायते तथापि दृढतरवेमाद्यभि-

तेनैकत्र कपाले कालभेदेन घटयोर्वृत्तौ न विरोधः । न चैकतन्तुकपटस्यासमवायिकारणसंयोगाश्रयांशुसमवेततया व्यभिचार इति वाच्यम् । तदनभ्युपगन्तृमतेनोक्तत्वात् । एतदक्षरमादेशान्त इत्युक्तमित्यप्याहुः ।

(१४७) पटनाश इति । तथा चैकत्रैव तन्तौ द्वितन्तुकादिनानापटसमवायितानभ्युपगन्तव्येति नोक्तनियम इति भावः । नन्विति । तथाचाग्रिमपटस्य पूर्व्वपटाग्रिमतन्तुसमवेततया नारभ्यारम्भकवादो मन्यानां नियमभङ्ग इति भावः ।

यदि कार्य्यद्रव्यमारभ्येत घटादयोऽप्यारभ्येरन् । तथा-चान्तरालिककार्य्यपरम्परानुपलम्भप्रसङ्गः । अपरैस्त्रसरेणुरेवारभ्यत इति नियमः । परमाणुभिरपि स एवारभ्यत इति तुल्यम् । विशेषो वक्तव्यः । उच्यते । यथाहि अवयवावयविप्रसङ्गः परमाणुषु विश्राम्यति तथायमवयवसंख्यापकर्षः क्वचिद्विश्राम्येत । न च त्रित्व मपकर्षकाष्ठा द्वित्वैकत्वयोः सम्भवात् । तन्नैक-

---

घातात् खण्डपटे नष्टे महापट उत्पाद्यते इत्याहुः । यथा हीति ।

ननु हेतुहीनात् दृष्टान्तमात्रात् न साध्यसिद्धिः । द्वितन्तुकेनान्यथासिद्धिश्च । यज्जातीयमारम्भकं तज्जातीयद्वयमप्यारम्भकमिति व्याप्तिश्च स्वतोऽप्यसिद्धा । द्व्यणुकद्वयेनारम्भानभ्युपगमात् । मैवम् । अणुत्वं कार्य्यवृत्तिपरिमाणत्वसाक्षाद्व्याप्यजातित्वात् । महत्त्ववत् । परमाणवो न महाद्रव्यारम्भकाः नित्यद्रव्यत्वात् । व्योमवदित्याशयात् ।

---

द्वितन्तुकेति । तथाच पूर्व्वपटस्य नाप्यसमवायिकारणत्वमिति भावः । तथापीति । तथाच नानापटस्यैकदा सत्त्वादेव नैकदेशसमवायत्वमिति भावः । अणुत्वमिति । अणुपरिमाणवृत्तिजातिविशेष इत्यर्थः । परममहत्त्ववृत्त्युत्कर्षरूपजातौ व्यभिचारवारणाय साक्षादिति । साक्षाद्व्याप्यत्वं जातेरेवेति जातिपदम् । परमाणव इति । आरम्भकत्वं समवायिकारणत्वमतो न कालादौ व्यभिचारः । साध्ये द्रव्यपदं अवयवाभावेन अर्थसिद्धत्वाद्यर्थेनोक्तम् । हेतौ च द्रव्यादि चिन्त्यम् ।

मनारम्भकम्। अवयवसंयोगानुपपत्तौ असमवायिकारणाभावात्। अनेकसंख्याभावे चावयविनोऽवयवापेक्षयाधिकपरिमाणानुपपत्तेः। अवयवापेक्षया चावयविनोऽधिकपरिमाणत्वनियमात्। एकस्य चावयवस्य विभागानुपपत्तौ तत्कार्य्यस्य विनाशासम्भवे नित्यत्वप्रसङ्गादिति।

तथाच द्वित्वमपकर्षपर्य्यन्तस्तदादि त्र्यमारम्भः। तच्च द्वाभ्यां परमाणुभ्यामारब्धं कार्य्यं न महत्। तथात्वे तस्य कारणाभावात्। तदपि द्व्यणुकं यदि त्र्यणुकं नारभेत, यदि च द्वित्वसंख्यायुक्तमारभेत, उभयथापि तदुत्पादनवैयर्थ्यं स्यात्। तस्मात् तेन महद्द्रव्यमारभ्यमाणं बहुत्वसंख्यायोगि नैवेवेति नियमः। न च द्व्यणुकवत्परमाणवोऽपि बहुत्वमाश्रित्य महत्कार्य्यमारभन्ते इति युक्तम्। अनियमारम्भस्य निषिद्धत्वात्। कारणकारणस्य कार्य्यकार्य्यजातीयानारम्भकत्वात्।

अनियमारम्भस्येति। त्रसरेणोः कस्यचित् द्व्यणुकेन कस्यचिच्च परमाणुभिरारम्भे नियतहेतुत्वं न स्यादित्यर्थः।

नन्वणुपरिमाणाश्रयत्वेन कारणानुगमः स्यादित्यत आह। कारणकारणस्येति। त्र्यणुककारणद्व्यणुककारणस्य परमाणोः

न हि तन्तवः पटमारभन्ते तत्कारणाञ्चांशव इति। तस्माद्विवादाध्यासिताः त्रसरेणवो न निरवयवद्रव्यारब्धाः सावयवारब्धा इति वा। महत्त्वे सति कार्य्यत्वात्। उभयवादिसिद्धद्व्यणुकारब्धत्रसरेणुवत्। घट-

स्वकार्य्यद्व्यणुकस्य यत्कार्य्यं त्रसरेणुजातीयं तदारम्भकत्वं नास्तीत्यर्थः। यद्वारभ्यारम्भवादनिषेधाभिधायक एवायं ग्रन्थः। (१४८) तस्मादिति।

ननु साधनावच्छिन्नसाध्यव्यापकमहावयवारभ्यत्वमुपाधिः। तथाच त्रसरेणु र्नित्यद्रव्यारभ्यः द्रव्यारभ्यत्वे सति महदनारभ्यत्वात्। परमाणुगन्धवदिति प्रतिरोधः। अत्राह। अस्ति तावन्महत्त्वात्मकं कार्य्यम्। तत्प्रति कारणत्वं कार्य्यद्रव्यत्वेनैव गृहीतं

(१४८) अयं ग्रन्थ इति। यद्यप्येवं सावयवारब्धा इति साध्ये सिद्धसाधनं स्यादारभ्यारम्भकवादिना तथाभ्युपगमात् तथापि तद्वादं निषेधाभिप्रायत्वेऽप्यस्य परमाणुभिरेव त्रसरेणुरारभ्यते इति पूर्व्वपक्षोऽप्युपसंहारव्याजेन तस्मादित्यादिना परिहृत इति मन्तव्यम्।

साधनावच्छिन्नेति। एतच्च प्रथमसाध्ये व्योमादौ द्वितीयसाध्ये द्व्यणुकरूपादौ पुष्टसाध्यव्यापकत्वादुक्तम्। सत्प्रतिपक्षोत्थापकतामाह। तथाचेति। साध्ये द्रव्यपदं साकिञ्चित्करम्। द्रव्यारभ्यत्वे सतीत्यस्य समवायिकारणकत्वे सतीत्यर्थः। यद्यप्यत्र द्व्यणुकगन्धादौ व्यभिचारस्तथापि विशेषादर्शनदशायामापाततः सत्प्रतिपक्षत्वम्। महत्त्वात्मकमिति। महदात्मकमित्यर्थः। कारणत्वमिति। समवायिकारणत्वमित्यर्थः। कार्य्येति। अन्यावयविभिन्नकार्य्यद्रव्यत्वेनेत्यर्थः।

वद्देति। एवं तर्हि द्व्यणुकमपि न निरवयवद्रव्यारब्धं सावयवद्रव्यारब्धं वा। कार्य्यद्रव्यत्वात्। अनवस्था-प्रतिहतत्वादिति द्व्यणुकादिप्रक्रमसिद्धिः।

इति पृथिवी समाप्ता।

---

न च महत्त्वविशेषत्वेन जनकत्वं त्रसरेणौ व्यभिचारादित्यकारण-कार्य्योत्पत्तौ विपक्षबाधकेन साधनस्य साध्यव्याप्यतया तदव्याप-कत्वेनोपाधेः साध्याव्यापकत्वात्। द्व्यणुकारब्धत्रसरेणाविव साध्या-व्यापकत्वाद्वा। यद्वा त्रसरेणुर्न नित्यद्रव्यसमवेतः शब्दान्यत्वे सत्यस्मदादिवहिरिन्द्रियग्राह्यत्वात्। पटवत्। न च पक्षसम-वेतत्वमुपाधिः। अप्रत्यक्षवृत्तिप्रत्यक्षगन्धादौ साध्याव्यापकत्वा-दित्यत्र तात्पर्य्यम्।

---

ननु लाघवादवयवत्वेनैव तद्धेतुतास्तु। तथाच द्व्यणुकासिद्धिरिति चेत्। द्व्यणुकसाधनस्य प्रागेवोक्तत्वात्। तथाच द्व्यणुकवत् परमाणुभिरपि त्रसरेणुरार-भ्यतां इत्यनियमारम्भपक्षे समाधानमिदम्। तत्रावयवत्वेन तद्धेतुत्वे परमाणुभ्यां द्व्यणुकं नारभ्येतेति तात्पर्य्यम्। विशेष एवेति। विशेषावच्छिन्न एवेत्यर्थः। व्यभिचारादिति। यद्यपि विशेषहेतुत्वस्योक्तत्वात् सामान्यतो व्यभिचारो न दोषस्तथापि महत्त्वमात्रेऽनुगतं कारणं न स्यात्। सामर्थ्यभेदकल्पने गौरवञ्चेति भावः। अनियमारम्भपक्षेऽपि द्व्यणुकाभ्युपगमादाह। द्व्यणुकेति। शब्दान्यत्वे इति। योगिज्ञानमादाय व्यभिचार इत्यत उक्तमस्मदादीति। सुखादौ व्यभि-चारादाह। वहिरिति।

ननु तथापि सामान्यलक्षणादिजन्यज्ञानमादाय व्यभिचारः पृथिवीत्वादौ च व्यभिचार इति चेन्न। अस्मदादीत्यादिना लौकिकप्रतिनियतवहिरिन्द्रियजन्य-साक्षात्कारविषयत्वस्योक्तत्वात्। यद्वा प्रतिनियतेति न देयम्। जातिमत्त्वे

अथेदानीमपो निरूपयति। अप्त्वाभिसम्बन्धादिति। अप्त्वं नाम सामान्यविशेषः। तेनाभिसम्बन्धादिति। पूर्व्ववद्व्याख्येयम्। तासां द्रव्यत्वसिद्धये गुणानाह। रूपरसेत्यादि। अत्र प्रमाणं सूचयति।

अप्त्वमिति। ननु करकासाधारणानुगतधर्मो नास्ति। न च विलयनदशायां तत्राप्यनुगतप्रतीतिः। तस्य ततो द्रव्यान्तरत्वात्। स्नेहस्य क्वाचित्कत्वं किञ्चिद्धर्मनियम्यमिति जलत्वसिद्धिरिति चेन्न। जलत्वेऽपि तदर्थं जात्यन्तरकल्पनापत्तेः। स्वभावान्नियमस्य तुल्यः। (१४८) पृथिवीत्वं गुरुत्ववृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं मेयत्वादिति चेत्। न। पृथिवीजलसाधारणजात्यार्थान्तरत्वात्। विपक्षे बाधकाभावाच्च। स्नेहादि

सतीति विशेषणाच्चित्यद्रव्यसमवायिकारणत्वाभावस्य साध्यत्वाद्वा न पृथिवीत्वादौ व्यभिचारः। न चेति। बहिरिन्द्रियप्रत्यक्षत्वावच्छिन्नसाध्यव्यापकोऽयमुपाधिरिति नात्माकाशादौ साध्याव्यापकत्वम्। अनयोर्बाह्यत्वेनेति। बहिरिन्द्रियप्रत्यक्षेत्यर्थः।

(१४८) पृथिवीत्वमिति। आत्मत्वादिभेदेनार्थान्तरवारणाय गुरुत्वे जातिविशेषणम्। सत्ताभेदेन तद्वारणाय द्रव्यत्वव्याप्येति। घटत्वभेदेन तद्वारणाय साक्षादिति। तद्व्याप्यजात्यव्याप्यत्वगर्भं साक्षाद्व्याप्यत्वं रसवत्त्व दोषोऽपि तद्भेदेन तद्वारणाय जातीति

ननु द्रव्यत्वसाक्षाद्व्याप्यपदं द्रव्यविभाजकपरमतो नोक्तदोष इत्यत आह। विपक्ष इति। द्रव्यत्वसाक्षाद्व्याप्येत्यत्र साक्षात्पदं भेदगर्भव्याप्यत्वसूचनाय। न च स्वोपादेयद्व्यणुकवृत्तीति व्यर्थम्। सत्त्वात् परमाणुमात्रवृत्तिजाति-

एते चेत्यादि। पूर्व्ववत्। यथा सूत्रकारवचनात् पृथिव्यां गन्धादयः सिद्धाः तथाप्स्वपि रूपादय इत्यर्थः।

---

समवायिकारणतावच्छेदकतया जलावयविनि जलत्वसिद्धौ जलपरमाणुः स्वोपादेयद्व्यणुकवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमानिति चेन्न। स्नेहत्वस्य कार्य्याकार्य्यवृत्तितया कार्य्यतानवच्छेदकत्वात्। स्नेहवन्मात्रवृत्तिसंयोगसमवायिकारणतया तत्सिद्धिरिति चेन्न। स्पर्शवन्मात्रवृत्तिसंयोगसमवायिकारणतयापि जात्यापत्तेः। अत्राहुः जलशब्दशक्तिग्रहो न व्यक्तिमात्रे न वा व्यक्तिविशेषे। अतिप्रसङ्गादननुगमाच्च। अतोऽनुगतधर्म्मसिद्धौ बाधकाभावात् तज्जाति-

---

मादाय दोषतादवस्थ्यात्। द्व्यणुकपदस्य द्व्यणुकादिपरत्वात्। उपादेयत्वञ्च साक्षात्परम्परासाधारणं बोध्यम्। कार्य्याकार्य्येत्यत्र कार्य्यपदं सम्पाताया-यातम्।

जलशब्देति। न च कारणतावच्छेदकतया तत्सिद्धिः न तु शक्यतावच्छेदकतयेति वाच्यम्। ततोऽपि हि न जातित्वसिद्धिः। किन्त्वनुगतधर्म्ममात्रसिद्धौ बाधकाभावाज्जातित्वं तत्तुल्यम्। तदिदमाह। अनुगतधर्म्मसिद्धाविति। अनित्येति। न च परमाणौ तदसिद्धिः। द्रव्यारम्भकपरमाणुत्वेन स्वोपादेयद्व्यणुकवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वस्य तत्रानुमानात्। न चैवं तस्य योग्यतावच्छेदकरूपवत्त्वे योग्यत्वापत्तिः। इष्टापत्तेः। नित्यस्येहस्य प्रतिबन्धकतया सहकारिविरहेण तस्य तत्रानुपपत्तेः। एतच्च नित्ययोग्यस्य फलोपधाननियम इति मतमनभ्युपेत्योक्तम्। अन्ये तु अवच्छेदकत्वं न योग्यता परिभाषापत्तेः। किन्तु सहकारिविरहप्रयुक्तकार्य्याभाववत्त्वं तद्विशिष्टमवच्छेदकं वा। न च तत्परमाणौ नित्यस्य सहकार्य्यसम्भवेन तदभावात्। तच्चाननुगतेषु दुर्ग्रहमित्यनुगतधर्म्मरूपावच्छेदकापेक्षा। तस्य चानुगतधर्म्मस्यातिप्रसङ्गो न दोषाय। स हि ज्ञातस्तथा।

तथाच सूत्रम्। रूपरसस्पर्शवत्य आपो द्रवाः स्निग्धा-श्चेति। यथा चाक्षुषवचनात् सप्त संख्यादयः पृथिव्यां तथाप्स्वपि। यथा पतनोपदेशात् पृथिव्यां गुरुत्वं तथा जलेऽपि। यथा चोत्तरकर्म्मवचनात् पृथिव्यां संस्कारः तथा तोयेऽपि। एवं गुणवत्त्वेन द्रव्यत्वे सिद्धे पृथिव्यादिव्यवच्छेदहेतून् विशेषानाह। शुक्ल-मधुरशीता एव रूपरसस्पर्शा इति। सहस्रशोऽग्नि-संयोगिनोऽप्यपरावर्त्तमान मभास्वरं शुक्लमेव रूपं अप्सु व्यवस्थाहेतुः।

त्वम्। अनित्यस्नेहत्वं वा कार्य्यतावच्छेदकम्। करकायाश्च शीत-स्पर्शाज्जलत्वानुमानम्। न चासांसिद्धिकद्रवत्वेन प्रतिरोधः। तदसिद्धेः। अदृष्टविशेषात् तत्प्रतिबन्धेनानुपलम्भात्।

अपरावर्त्तमानमिति। अपरावर्त्तमानरूपत्वं शुक्लेतररूपा-नाधारत्वम्।

न चानित्यस्नेहकारणतावच्छेदकजलत्वानङ्गीकारे तस्यातिप्रसक्तोऽवगतस्नेह-सिद्ध्यनन्तरं जलत्वस्य परमाणुवृत्तित्वानुमानेऽतिप्रसक्त्यवगमात्। तथाच तदवच्छेदेन सहकारिविरहप्रयुक्तकार्य्याभाव सम्भवस्य तदवगमाभावान्न दोष इति जलत्ववत्त्वेऽपि परमाणुर्न योग्य इति वदन्ति। तच्चिन्त्यम्। अतिप्रसक्तस्या-नवच्छेदकत्वात्। अनतिप्रसक्तत्वगर्भं तद्विषयतत्त्वावच्छेदकत्वमिति तदवच्छेदकत्वे-ऽनागतस्य जलस्य तथा सति परमाणुवृत्तित्वानुमाने धर्म्मिग्राहकमानबाधापत्तेः। अन्यथा दण्डत्वस्यापि अतिप्रसक्तस्याप्यदोषत्वे तत्तद्दण्डादिविशेषणानुपपत्तेः।

नहि पार्थिवे स्फटिकादौ वर्त्तमानं शुक्लमपि रूपमग्निसंयोगान्न परावर्त्तते । अपरावर्त्तमानमपि तैजसो भास्वरम् । तस्मादनेन विशेषेण रूपमप्सु व्यवस्थाहेतुः । एष च विशेषः पृथिवीरूपस्य पाकजत्वदर्शनेन तेजोरूपस्य भास्वरत्वकथनेन सूचितः । उक्तयुक्तेरेव जलादिरूपस्यापाकजत्वम् । पार्थिवा एव हि दृष्टभागाः क्वाथेन पच्यन्ते । एतेन रसो व्याख्यातः । नहि पार्थिवक्षीरशर्करादौ वर्त्तमानमपि माधुर्य्यं पाकेन

अनेनेति । (१५०) अपाकजाभास्वररूपं जललक्षणमित्यर्थः । एतेनेति । न च जले रसोऽसिद्धः । सौहित्यार्थिनां तत्पानानुपपत्तेः । न च सर्पाणां मारुतपवनाशनवत् तदुपपत्तिः । मानुषाणां सौहित्याय रसवत्येव पानादिति तर्कोपबृंहितं तत्प्रत्यक्षमेव रसे मानम् । तन्माधुर्य्यञ्च कषायद्रव्येण तदाञ्जनात् । न च

उक्तरीत्या परमाणावपि सहकारिविरहप्रयुक्तकार्य्याभावसम्भवाच्च निस्नेहस्य प्रतिबन्धकतया सर्व्वदा सहकारिविरहात् । तस्य गतत्वादपरावर्त्तमानत्वं पार्थिवरूपेऽपीत्यन्यथा व्याचष्टे । शुक्लेतरेति ।

(१५०) व्यर्थतया शुक्लभागमपहाय लक्षणमाह । अपाकजेति । प्रत्यक्षमेवेति । अत्र एवकारो नेतरव्यवच्छेदकः । किन्तु स्फुटसिद्धत्वद्योतकः । रसनेन्द्रियत्वस्य बाह्येन्द्रियत्वेन स्वव्यञ्जकगुणवत्त्वानुमानात् सरसत्वसिद्धेरित्याहुः ।

तन्माधुर्य्यञ्चेति । न च वैपरीत्यं केवलेऽपि जले मधुरिमत्युपलम्भात् । वस्तुतो रसान्तरेऽपि सर्व्वत्राविशेषप्रतिपत्त्या प्रशस्तः सम्भवतीति भावः ।

व्यावर्त्तते। इह तु सहस्रशः पच्यमानानामपि माधुर्य्यमेव। ईषत्स्वभावं तु तदपि तथैव। यत् पुनरम्बुसिन्धुभेदेन क्षारादिरसः पाथस उपलभ्यते स दशमूलीकषायस्येव पार्थिवद्रव्योपाधिकः। कथमन्यथा तस्यैव घनपीतमुक्तस्य मधुर एव रसः। एवमपां स्पर्शः शीत

---

कर्कटीभक्षणानन्तरं तिक्तत्वानुभवात् तिक्तो रसः स्यात्। तस्या एव तिक्तरसवत्त्वात्। केवलेऽपि तत्फले तिक्ततोपलम्भात्। तदवयवे तिक्तरसोपलम्भात्। अवयवसजातीयस्यावयविनि वृत्तेः। यद्वा कर्कटीभक्षणेन रसनाग्रवर्त्तिपित्तक्षोभः क्रियते तदीयस्तिक्तो रसस्तत्रोपलभ्यते। तथाचापाकजजातीयरसवत्त्वं जललक्षणम्। शीत एवेति।

ननु श्रीखण्डे पार्थिवेऽपि शैत्यमनुभूयते। न च घर्षकजलस्यैव तत्। तदसम्भेदे तदननुभवादिति वाच्यम्। तच्छैत्योत्कृष्टशैत्यानु-

ननु मिष्टकर्कटीफले तदभावात् का गतिरित्यत आह। तदवयव इति। भूतं सञ्चितावयव इत्यर्थः। तथाप्यवयविनः किमायातमित्यत आह। अवयवेति। यद्यपि तत्राशान्तरस्य विजातीयरसवत्त्वात् गुणविरोधेनानारम्भात् अवयवी न तज्जातीयगुणवान्। अत एव हरीतकी नीरसैवेति सिद्धान्तः। तथाचोक्तव्याप्तौ व्यभिचारोऽपि। तथाप्यवयवसजातीयरसस्य अवयविवृत्तित्वेनोपलम्भादित्यत्र तात्पर्य्यम्।

यद्वा एतदस्वरसादाह। यद्वेति। एतच्च वैद्यकादवसेयम्। तथा चेति। अवयविनि पाकानभ्युपगमात् तत्रातिव्याप्तिवारणाय जातिपदम्। यद्यप्येवमपि दोषतादवस्थ्यं तथापि पाकजजातीयान्यरसवत्त्वमित्यर्थः।

एव। क्वचित्तु सन्नपि तेजःस्पर्शाभिभवान्नोपलभ्यते। तदपगमे पुनरुपलब्धेरिति। तदेभिर्व्विशेषैः रूपरस-स्पर्शा अप्सु व्यवस्थापका इत्युक्तम्।

स्नेहस्तु स्वरूपत एवेत्यत आह। स्नेहोऽम्भस्येवेति। इह केचिदाहुः। न स्नेहो जलधर्म्मः तैलादिवज्जलेऽनुपलब्धेः। नापि पृथिव्यो विशेषगुणाः। सर्व्वपृथिव्यव्यापकत्वात्। तस्मात् पार्थिवविशेषेषु

---

भवात्। अत्राहुः। श्रीखण्डक्षोदेन घर्षकजलस्योत्कृष्टं शैत्यं व्यज्यते। यद्वा श्रीखण्डान्तर्वर्त्तिजलस्यैव घर्षणाद्बहिर्भूतस्य शैत्यमनुभूयते।

सर्व्वेति। स्नेहो यदि (१५१) पृथिवीविशेषगुणः स्यात् घट-वृत्तिवृत्तिगुणत्वव्याप्यजातिमान् स्यादित्यर्थः।

ननु सर्व्वपृथिव्यव्यापकत्वेऽपि नैमित्तिकद्रवत्ववत् पृथिवी-सामान्यगुणः स्नेहोऽस्तु। यद्वा सर्व्वपृथिव्यव्यापकत्वेऽपि तद्विशेष-गुणः स्यात्। यथात्माव्यापकत्वेऽपि सुखं तद्विशेषगुणः। अत्राहुः स्नेहत्वं यदि पृथिवीविशेषगुणवृत्तिजातिः स्यात् मद्वृत्तिगुणवृत्तिः

---

(१५१) घटरूपादेरपि प्रत्येकं सर्व्वपृथिव्यव्यापकतया विरुद्धगन्धाद्यभिगम्य-तया व्यभिचारादाह। स्नेहो यदीति। सामान्ये नैमित्तिकद्रवत्वे च व्यभि-चारवारणाय पृथिवीपदं विशेषपदञ्च। यद्यपि मूलोक्तमनुमानपरत्वमपहाय तर्कपरत्वमयुक्तं तथापि तादृशजातिमत्त्वाभावात् न पृथिवीगुण इत्यनुमेयमेव। तत्र चानुकूलतर्कोऽयमिति मन्तव्यम्।

यद्वेति। तथाचोक्ततर्कादावप्रयोजकत्वमिति भावः। स्नेहत्वमिति। सामान्ये

घृततैलवसासूपलभ्यमानः सामान्यविशेषोऽयम्। गव्य-माहिषादिषु दधित्ववदिति। तदसत्। स्निग्धस्निग्ध-तरस्निग्धतमादिभेदेन सातिशयत्वात्। न तु गोमहि-ष्यादिषु गुणमनाश्रित्य तारतम्यमस्ति। नहीषन्मधु-रातिमधुरादिवदीषद्गौ रतिशयेन गौरिति भवति। तस्मादतिशयस्य गुणैकनियतत्वात् सामान्यविशेषतया

स्यात्। यदि च पृथिवीसामान्यगुणावृत्तिप्रत्यक्षगुणत्वव्याप्यजातिः स्यात् तेजोवृत्तिवृत्तिः स्यात्। न चाप्रयोजकत्वम्। लाघवा-ज्जातित्वस्यैवोचितत्वात्। परमाणुषु चौरत्वादिव्यञ्जकाभाव-

द्रवत्वे च व्यभिचारादाह पार्थिवविशेषपदेति। तद्गन्धत्वादौ व्यभिचारादाह जातीति। अत्र पृथिवीपदेनावयविपृथिवी विवक्षितेति न पृथिवीपरमाणु-गुणग-पाकप्रयोज्य जातौ व्यभिचार इत्याहुः। वस्तुतः साक्षाद्व्याप्यत्वं जातिविशेषणम्। आपाद्ये गुणपदं स्पष्टार्थम्।

प्रथमशङ्कायां तद्गर्भमाह। यदि चेति। प्रकृते पृथिवीसामान्य-गुणत्वनिषेध-स्यैवोद्देश्यत्वात् तत्प्रकारक-प्रतीत्यर्थं पृथिवीपदमन्यथा तु चिन्त्यम्। गन्धत्वे व्यभि-चारादाह सामान्येति। गुरुत्वे व्यभिचारादाह प्रत्यक्षेति जातिविशेषणम्। गुणत्वव्याप्यत्वञ्च साक्षाद्व्याप्यत्वं संयोगनिष्ठविभुत्वजातौ व्यभिचारवारणाय। पृथिवीसंयोगान्यतरत्वे व्यभिचारादाह जातिरिति।

ननु न तादृशजातित्वं स्ववृत्ति गुणवृत्तित्वादौ प्रयोजकं, किन्तु स्नेहत्वान्यत्व-विशेषिततामित्याशङ्कां निराकरोति। न चेति। जातित्वस्येति निरुक्तजातित्वस्यैव-त्यर्थः। वस्तुतः संग्रहहेतुतया जले स्नेहस्यावश्यकत्वात्. तेनैवोपपत्तौ पृथिव्या-मपि तत्कल्पनायां मानाभावो गौरवञ्चेति भावः।

च सामान्येऽसम्भवात् गुण एव स्नेहः। किञ्च स्निग्ध-द्रव्यावयवपरम्परया अपि स्निग्धत्वादापरमाणु स्नेहः स्यात्। न च परमाणुषु पृथिवीत्वादेरन्या परजातिरस्ति। व्यवस्थापकाभावात्। क्षीरत्वादिवद्भविष्यतीति चेन्न। तस्यापि परमाणुष्वभावात्। पाकजरूपरसस्पर्शविशेषव्यङ्गं क्षीरत्वादि। तथाच पाकान्तरेण तन्निवृत्तौ क्षीरत्वादे निवृत्तिप्रसङ्गात्।

न च सत्यां व्यक्तौ सामान्यनिवृत्तिरिष्यते। न चाविवक्षितसत्ताकाः सम्भवमात्रेण ते तस्याभिव्यञ्जकाः। सर्व्वपार्थिवपरमाणूनां क्षीरत्वापत्तौ

माह। पाकजेति। न च सर्व्वत्र परमाणुषु क्षीरत्वं न वर्त्तते किन्तु यत्र न रूपादान्तरोत्पत्तिस्तत्रैवेति वाच्यम। यद्द्रव्यध्वंसजन्यं यद्द्रव्यं तत्तदुपादानोपादेयमिति व्याप्तेः क्षीरध्वंसजन्यं दधि क्षीरपरमाणुजन्यमिति दध्नोऽपि क्षीरत्वापत्तेः।

यद्द्रव्येति। घटध्वंसजन्ये घटरूपादिध्वंसे व्यभिचारादाह यदन्द्रव्यपदम। यद्द्रव्याभावजन्यमिति कृते प्रतिबन्धकद्रव्यात्यन्ताभावजन्ये द्रव्ये व्यभिचारः स्यादिति ध्वंसपर्य्यन्तेन न ध्वंसस्यापि जनकत्वात् दोषतादवस्थ्यम। ध्वंसत्वेन जनकत्वस्य विवक्षितत्वात्। न त्वसमवायिकारणजन्यमिथ्याज्ञानध्वंसस्य तत्त्वेन कार्य्यं प्रति जनकतया तत्र व्यभिचारवारणाय प्रथमद्रव्यपदम्। विस्तरस्तु कुसुमाञ्जलिमकरन्दे अनुसन्धेयः।

दध्नोऽपीति। परमाणुवृत्तिजातेस्तदुपादेयद्रव्यवृत्तित्वनियमादित्यर्थः।

तदारब्धसर्व्वकार्य्यस्य पृथिवीत्ववत् चीरत्वापत्तेः। द्व्यणुकादौ चीरत्ववन्नविष्यतीति चेन्न। तदारम्भकेषु परमाणुषु तद्व्यवस्थाहेतोः चीरत्ववत् गुणविशेषस्याभावात्। भावे वा स एव स्नेहः। न ह्यत्र रूपादयो व्यवस्थाहेतवः। न च तद्विशेषाः। तेषां घृतत्वादिव्यवस्थापकत्वात्। न च कारणसामान्यमस्ति तैलघृतवसानां बीजचीरमांसयोनित्वात्। अतएव नारिकेलस्नेहस्यापि तैलत्वम्। रसादिसारूप्यात्तु घृतमिति व्यपदेशः। तस्मात् परमाणुषु वर्त्तमानः कारण-

सर्व्वपार्थिवेति। पार्थिवपरमाणुषु व्यवस्थापकपाकजोत्पत्ते रित्यर्थः। तद्व्यवस्थाहेतोरिति। यथा चीरत्वव्यवस्थाहेतुर्गुणविशेषो न तथा स्नेहत्वव्यवस्थापको गुणविशेष इत्यर्थः। तद्विशेषाः रूपादिविशेषाः। न च कारणमिति। व्यवस्थापकमिति शेषः। अत एवेति। यद्यपि बीजप्रभवत्वमात्रमतिप्रसक्तं (१५२) स्नेहत्वविशेषितञ्च बीजद्रव्येऽप्यस्ति। तथापि गन्धरसविशेषाभिव्यङ्ग्यं तैलत्वं जातिः। अतएव घृततैलसंशये गन्धादिविशेषात् तैलत्वनिश्चयः।

(१५२) अतिप्रसक्तमिति। अङ्कुरादिष्विति शेषः। स्नेहत्वेति। स्निग्धत्वविशेषितञ्चेत्यर्थः। स्नेहाश्रयस्यैव तैलत्वात्। न च स्नेहस्य जलधर्म्मत्वात् तैलस्य च पार्थिवत्वाद्वैरमिति वाच्यम्। संयुक्तसमवायेन तद्वृत्तित्वात्। अतएवाह बीजद्रव्येऽपीति। बीजस्यापि बीजप्रभवत्वात् स्निग्धत्वाच्चेत्यर्थः। बीजद्रव्येऽपीति क्वचित् पाठः। तत्र तस्यापि तथात्वादतिप्रसक्तिस्तुल्यैव। स्नेहत्वेऽपीति। स्निग्ध-

गुणप्रक्रमेणान्यावयविपर्य्यन्तमायातो गुणविशेषः स्नेह इति युक्तम्। न च घृतादिष्विव स्नेहोपलब्धिः। सातिशयो हि स्नेहस्तत्रोपलभ्यते। गुरुत्वमिव सुवर्णे। वस्तुतस्तु जलसाधारणी स्निग्धता। अन्यथा जलावसेकेन सक्तुशिकतादीनां संग्रहो न स्यात्। सहि स्नेहद्रवत्वकारितः संयोगविशेषो धारणाकर्षणहेतुः।

---

एवञ्च सार्षपस्नेहेऽपि तैलत्वमिति भावः। वाचस्पतिमिश्रास्तु तिलस्य विकारस्तैलं स्नेह इति योगो बाधकाभावात् तिलप्रभवस्नेह एव तैलपदप्रयोगात् स्नेहत्वेऽपि शक्तेस्तैलपदं योगरूढम्। सार्षपादौ तु तैलव्यपदेशो भाक्तः। अपि च बीजप्रभवस्नेहत्वं न तैलत्वादिव्यञ्जकं जातिनियतधर्म्मस्यैव तथात्वात्। तस्य च तथात्वे मानाभावात्। न च तैलपदेन देवप्रवृत्तिनिमित्तं तदज्ञानेऽपि तैलपदप्रवृत्तेरित्याचिरे।

प्रत्यक्षं विप्रतिपद्यमानं प्रति कार्य्यं प्रमाणमाह। वस्तुतस्त्विति।

---

त्येऽपीत्यर्थः। वस्तुतोऽत्रापि गन्धरसविशेषव्यङ्ग्यतैलत्वजातौ बाधकाभावात् तत्रैव शक्त्या योगरूढिः। उपाधिशक्यत्वे गौरवात्। अपि चेत्यादि च न जातित्वबाधाभ्युपगमः किन्तु तदन्यव्यञ्जकव्यवस्थितये। नचैवमाचार्य्यमतभेदः। तत्र रूढिमात्राभ्युपगमात्। अतएव सार्षपादौ मुख्यत्वमत्र च भाक्तम्। तदिदमाह सार्षपादाविति। न च शक्यत्वाबाधात् कथं भक्तिरिति वाच्यम्। एवं पङ्कजं कुमुदमित्यत्रापि हि लक्षणा न स्यात्। व्यक्तिवचनान्यायेन जातित्वान्वयबोध्य

न चासौ केवलद्रवत्वहेतुकः। काचकाञ्चनादिभिरति-
द्रवीभूतैरपि वालुकाद्यसंग्रहात्।

नापि स्नेहमात्रकारितः स्त्यानैर्घृतादिभिरप्यसंग्र-
हात्। तस्मात् सकलजलहेतुकः संग्रहो भवंस्तत्र
द्रवत्वमिव स्नेहमपि सांसिद्धिकमवस्थापयति। तथापि
नैमित्तिकद्रवत्वमिव नैमित्तिकः पृथिव्यामयं भविष्यति
पार्थिवे घृतादावनुपलब्धेरिति चेत्। न। तदन्वय
व्यतिरेकाननुविधानात्। नहि पार्थिवं यथा जतुघृता-
दिषु द्रव्येषु पावकसंसर्गात् द्रवत्वमुपलभ्यते तद्विरोधि-

द्रवत्वमिति। (१५३) यथा तेजःसंयोगासमवायिकारणका
वृत्तिद्रव्यत्वव्याप्यजातिमद्द्रवत्वं जले तथा स्नेहोऽपि तत्संयोगा
जन्यजातीय इत्यर्थः।

तथा निराकाङ्क्षत्वात् स्वतन्त्रोपस्थितये पुरोडाशकपालवत् लक्षणेति यदि तदा-
त्रापि तुल्यम्। इयांस्तु विशेषः यत् पङ्कजपदे योगोऽतिप्रसक्तोऽत्र रूढिरिति।
एवञ्च धर्म्मशास्त्रे तैलपदाद्विशिष्टोपस्थितावेकदेशलक्ष्यधर्म्मत्वादेरन्वये एकदेशबाधा
पत्त्या लक्षणापत्त्या च विशिष्टस्यैव विधिनिषेधविषयतेति बोध्यम्।

केचित्तु प्रथममते योगरूढिराचार्य्यमते तैलत्वजात्या मिश्रमते तादृशोपाधिने-
त्याहुः। जातिनियतेति। अस्य च न तथात्वं पूर्व्वोक्तातिप्रसक्तेरिति भावः।

(१५३) यथेति। तेजःसंयोगासमवायिकारणकावृत्तित्वं तदवृत्तित्वम्।
अन्यथा द्रव्यत्वव्याप्यपदवैयर्थ्यापत्तेः। यद्यपि स्नेहस्य स्नेहत्वेनैवासाधारण्यं तथापि
तत्र सांसिद्धिकत्वविशेषणं मूले स्वरूपनिर्वचनम्। तत्संयोगेति। तेजःसंयो
गेत्यर्थः।

सलिलावसेकात्तु निवर्त्तते तथा स्नेहः। तस्मात् पाकजतथाविधगन्धरसरूपादिमद्भिः परमाणुभिः द्व्यणुकादिप्रक्रमेण घृतादिद्रव्यमारभ्यते तत्र चोपष्टम्भकतया निमित्ततामापन्नाः पाथसीयावयवाः तेषां संयुक्तसमवायेन स्नेहस्तत्रोपलभ्यते इति स्थितम्। सांसिद्धिकञ्च द्रवत्वं अम्भस्येवेत्यनुकर्षणार्थश्चकारः। तैलक्षीरादेस्तु पार्थिवत्वे सिद्धे संयुक्तसमवायात् तदुपलब्धिः। शैत्यस्नेहवत्। तेषां पार्थिवत्वमेव कथमिति चेत्। तैलस्य भौमानलेन्धनत्वात्। घृतवत्। क्षीर-

घृतादीनां पार्थिवत्वे मानमाह। पाकजेति। तत्र स्नेहप्रतीतिमुपपादयति। संयुक्तेति। न चेदमसिद्धं जले स्नेहस्यावश्यकत्वात्। तैलादौ सांसिद्धिकद्रवत्वाधारस्य तस्यावश्यकत्वात् तत एव तत्प्रतीतेरन्यथासिद्धेः। दहनाप्रतिकूलता च स्नेहप्रकर्षादिति भावः।

भौमेति। अबिन्धनव्यावृत्तः काष्ठेन्धनानिवृत्तिजातिविशेषो भौमानलत्वम्। न च तैलोपष्टम्भकजलभागेन व्यभिचारः। दिव्यानलप्रतियोगिककारणतावच्छेदकशून्यत्वे सति भौमा-

अबिन्धनेति। अस्मात्तेन्धनव्यावृत्त इति भावः। तेन भौमस्यापि तैलोपष्टम्भकजलेन्धनतया नासिद्धिः। नचैवं गजोदर्य्यवज्रानलप्रसक्तस्यापि काष्ठेन्धनत्वात्। तदुक्तं नहि गजानामुदर्य्यं तेजो घटकाष्ठादि पचतीति वाच्यम्। तत्र काष्ठस्य पचनीयत्वमात्रमुक्तं न त्विन्धनत्वमपीत्याहुः। दिव्येति। तैलसंसर्गिजले च

स्यापि पिण्डीभावेऽपि प्रत्यभिज्ञानात्। घृतवदेवेत्यादि स्वयमूह्यम्।

नलेन्धनत्वस्य विवक्षितत्वात्। अतएव पवने न व्यभिचारः। तेजोमात्रोत्पत्तावेव तस्य निमित्तत्वात्। न चानलदाह्यत्वे सत्यनलकारणत्वमिन्धनत्वम्। दाहो हि भस्मीभावो वा रूपपरावृत्तिर्वा उभयथापि भौमेति व्यर्थम्। न चानलनाशहेतुनाशप्रतियोगित्वे सत्यनलकारणत्वमिन्धनत्वम् अनलावयवेऽपि गतत्वात्। न च कारणत्वं निमित्तत्वमभिप्रेतम्। अनलस्येन्धननाशनाश्यत्वे मानाभावात्। इन्धननाशे ह्यनलान्तरं नोत्पद्यते। पूर्व्वानलस्त्ववयवक्रियाविभागादिति न्यायान्नश्यतीत्यपास्तम्। वायौ दिव्यानलप्रतियोगिककारणतावच्छेदकवायुत्वसद्भावेन विशेषणासिद्धिः। रसवत्त्वेन हेतोर्विशेषणाच्च।

तादृशजनकत्वसत्त्वान्न व्यभिचारः। सत्यन्तमात्रमाकाशादौ व्यभिचरतीति भौमेति। न च भौमेति व्यर्थम्। भौमानलत्वस्य जातिविशेषतया तदभावादित्येके। आग्नेयभेषजलक्षणाहृतधातुसाम्यस्योदर्य्यदीपकतया तत्र व्यभिचारवारकत्वादित्यन्ये। न च दिव्यपदमसिद्धिवारकतया व्यर्थं, विशिष्टाभावे तदभावात्। असिद्धिवारकत्वाद्वा। यथोक्तविवक्षात एव यथाश्रुते दूषणं कश्चित् समाधानमयुक्तमित्यत आह अतएवेति। भौमेतीति। भौमानलेति व्यर्थमित्यर्थः। अन्यथा समाधिसाम्यापत्तेरिति बोध्यम्। अनलनाशेति। सत्यन्तं दिगादाववशिष्टमनलनाशप्रतिबन्धकमन्त्रादावतिप्रसङ्गवारणाय। रसवत्त्वेनेति। चो वाकारार्थः। तथा चोक्तमूर्त्तत्वे सति रसवत्त्वादिति पर्य्यवसितो हेतु। केचित्तु रसवत्त्वे सति भौमानलेन्धनत्वादिति हेतुः। न च तैलोपष्टम्भकजले व्यभिचारः। तद्विनाशेऽन्धनं जलान्तरे तथादर्शनात्। किन्त्वल्पत्वादनिर्वापकत्वमात्र मित्याहुः। वस्तुतस्तु तस्य

तास्तु पूर्व्ववत् द्विधा । नित्यानित्यभावात् । तु शब्दोऽप्यर्थः । कार्य्यतया परमाणुतया च । पूर्व्ववदिति । यथा पृथिवी नित्या चानित्या च आपोऽपि तथेत्यर्थः । ता इत्यत्र विभक्तिविपरिणामेण तासां कार्य्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञम् । तदेतन्निगदव्याख्यातम् । पृथिव्यामिवात्रापि तात्पर्य्यमूहनीयम् । आपः क्वचिच्छरीरारम्भकाः द्रव्यारम्भकत्वात् पृथिवीवत् । द्रव्यस्य हि द्रव्यारम्भणयोग्यता शरीरेन्द्रियभावेन व्याप्ता । यदेतेष्वेकमारभते तदन्यदपि । यन्नैकं न तदन्यदपि इत्यन्वयव्यतिरेकाभ्यामुपलम्भात् । ततो यद्यापः शरीरं नारभेरन् इन्द्रियविषयावपि नारभेरन् । न चैवं तस्मात् क्वचिच्छरीरमप्यारभन्त

आप इति । न च नद्यादिजलस्य पक्षत्वे बाधः । शरीरारम्भकस्य पक्षत्वे चाश्रयासिद्धिः । जलत्वं (१५४) शरीरारम्भकवृत्ति स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् । पृथिवीत्ववदिति विवक्षितत्वात् । न च गन्धवद्वृत्तित्वमुपाधिः । गन्धवत्त्वं शरीर-

तथात्वेऽपि तदन्यत्वविशेषितमिदमेव लिङ्गमुक्तमून्यत्वस्याम्योम्याश्रयपक्षपक्षत्वात् । पार्थिवत्वनिश्चये उक्तमून्यत्वनिश्चयस्तन्निश्चये च पार्थिवत्वनिश्चयात् । तैजस्य च तदा जलत्वपार्थिवत्वसन्देहादिति ।

(१५४) शरीरारम्भकेति । शरीरसमवायिकारणेत्यर्थः । गन्धवदिति ।

इति स्थिते कीदृक् शरीरमित्यपेक्षायामाह । शरीरं योनिजमेवेति । शुक्रशोणितयोर्नियमेन पार्थिवत्वात् । पार्थिवेन च पाथसीयानारम्भात् तदयोनिजमेव ।

नन्वनुपलब्धिवाधितं तदित्यत आह । वरुणलोक इति । व्यवहितविप्रकृष्टत्वात् नोपलभ्यते । न त्वभावात् । आगमादुपलब्धेरिति भावः । ननु स्वभावद्रव्यत्वादपीतरारब्धं कथमुपभोगायतनं तदित्यत आह । पार्थिवेति । यथा कठिनत्वात् पृथिव्यास्तदारब्ध मवाद्यवयवोपष्टम्भादुपभोगसमर्थं तथाप्यत्वात् द्रुतमपि पार्थिवाद्यवयवोपष्टम्भात् तदप्युपभोगसमर्थं विजातीयानारम्भकत्वमात्रं प्रतिषिद्धम् । न तु परम्परानुग्रहोऽपीति भावः । इन्द्रियमिति । यद्रसोपलब्धिसाधनमिन्द्रियं तदाप्यम् । अत्रापि रसोपलब्ध्या स्वरूपमात्रसिद्धिः । आप्यत्वञ्च रूपाद्यव्यञ्जकत्वे सति रसस्य-

निष्ठात्यन्ताभावप्रतियोगि निर्गन्धावृत्तित्वात् घटत्ववदिति साध्याव्यापकत्वात् । यथेति । शरीरस्य भूतान्तरोपष्टम्भकसम्बन्धः आवश्यक इति भावः । रूपाद्यव्यञ्जकत्व इति । न च कपायद्रव्येण

गन्धयोग्यवृत्तित्वमित्यर्थः । गन्धवत्त्वमिति । गन्धयोग्यमित्यर्थः । निर्गन्धेति । गन्धायोग्येत्यर्थः । यथा शरीरस्येति । पार्थिवस्येति शेषः । रूपादीति । सत्यादि

वाभिव्यञ्जकत्वात्। सक्तुरसाभिव्यञ्जकदन्तोदकवत्। प्राणिभेदेनेन्द्रियवैचित्र्यनिराकरणाय सर्व्वप्राणिनामिति। अन्यावयवैरभिभूतेरिति। वाताद्यभिभवे जड़जिह्वत्वादिति भावः।

किं नामधेयं तदित्यत आह। रसनमिति। तृतीयां विधामाह। विषयास्त्विति। आप्यत्वे हिमकरकयोः शिलीभावोपपत्तिं द्रवत्वे वक्ष्यतीति।

जलरसाभिव्यञ्जकेन व्यभिचारः। पार्थिवरसाभिव्यञ्जकद्रव्यत्वस्य हेतोर्विवक्षितत्वात्। अतएव नेन्द्रियसन्निकर्षेण व्यभिचारः। न च द्रव्यत्वमसिद्धं रससाक्षात्कारस्येन्द्रियजन्यतया तत्सिद्धेः।

ननु हिमकरकयोर्नाप्यत्वं सांसिद्धिकद्रवत्वाभावादित्यत आह। हिमेति। शीतस्पर्शवत्त्वेन जलत्वसिद्धौ सांसिद्धिकं द्रवत्वमपि तत्प्रतिबद्धं (१५५) भौमेनोष्मणा विलयनदशायां तत्र द्रवत्वोपलम्भादित्यर्थः।

पदं व्यर्थम्। जलस्य लुप्ताकारादिरूपव्यञ्जकतया विशिष्टाभावनिर्व्वाहकतया- सिद्धिवारकत्वेन सार्थकत्वादित्याहुः। स्पर्शव्यञ्जकघटितहेत्वन्तरसूचनाय तदित्यन्ये। रूपपदं परकीयरूपपरमन्यथा मूलस्य दृष्टान्तासिद्ध्यापत्तेः। अतएवायद्भुते। न चेति। अन्यथा तस्य स्वीयरूप व्यञ्जकतया शङ्काविरहात्। पार्थिवेति। न च तस्यापि स्वीयरसव्यञ्जकतया दोषतादवस्थ्यम्। परकीयत्वस्यापि रसविशेषणात्। अतएवेति। द्रव्यत्वाविशेषणादेवेत्यर्थ। इन्द्रियेति। इन्द्रियत्वस्य संयोगाश्रयत्वस्य घटिततया द्रव्यत्वसिद्धेरित्यर्थः।

(१५५) भौमेनेति। न च द्रव्यान्तरमेव गौरवेण तदकल्पनात्। कल्पने

तेजसो लक्षणमाह । तेजस्त्वाभिसम्बन्धादिति । व्याख्यानं पूर्व्ववत् । तस्य द्रव्यत्वव्यवस्थितये गुणानाह । रूपस्पर्शेति । अत्र प्रमाणं सूचयति । पूर्व्ववदेषां सिद्धिरिति । तेजो रूपस्पर्शवदिति सूत्रकारवचनात् रूपस्पर्शौ । चाक्षुषवचनात् सप्त संख्यादयः । अद्भिः सामान्यवचनात् द्रवत्वम् । उत्तरकर्म्मवचनात् संस्कार इति पृथिवीवदेते सिद्धाः । प्रसिद्धा इत्यर्थः । तेजस्त्वव्यवस्थापकानाह । शुक्लभास्वरञ्च रूपमिति । च स्त्वर्थः पृथिव्यादिरूपाद्व्यवच्छिन्नत्ति । भास्वरत्वं सामान्यविशेषः । स च रूपान्तरप्रकाशक-

तेजस्त्वेति । यद्याप्युष्णादिसाधारणो नानुगतमतिः जलत्वं द्रवत्वसमानाधिकरणगन्धव्यधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं सेयत्वात् टवदित्यनुमानमप्रयोजकम् । तथाप्यनित्यभास्वररूपोष्णस्पर्शौ प्रति यत्समवायिकारणत्वं तदवच्छेदकत्वेनावयविनि तेजस्त्वजातिसिद्धौ परमाणावपि स्वोपादेयद्व्यणुकवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं साध्यमिति भावः ।

वावयवान्तरकल्पने गौरवात् । समानोपादानकतया विलीनस्य जलत्वमावश्यकमिति भाव ।

तथापीति । एवञ्च परमाणोरपि स्वरूपयोग्यत्वे यथा तत्र न तदुत्पत्तिस्तथोक्तं जलग्रन्थे । वस्तुतस्तु तेजःपदं शक्यतावच्छेदकतयानुगतधर्म्मसिद्धौ बाधकाभावात् तज्जातित्वमिति बोध्यम् ।

त्वेन व्यज्यते । तद्वद्रूपं तेजस एव । तेन भास्वररूपं तेज एव । इति लक्षणार्थः । शुक्लमिति स्वरूपकथनम् । पच्यमानेन्धनसन्निधिकृतस्तु लोहिताद्युपलम्भः । तद्विरहे चन्द्रतारकादिमहसि शुक्लस्यैवोपलम्भ इति प्रतिपादनार्थम् ।

न च तत्राप्यविन्धनतया तोयरूपसंक्रान्त्या धावल्यप्रतीतिरिति वाच्यम् । अपां रूपेण विजातीयानभि-

ननु भास्वरत्वेनैवेतरव्यावृत्तिसिद्धेः शुक्लमिति व्यर्थमित्यत आह । शुक्लमितीति । यद्वा ननु वह्न्यादेररुणकपिलादिरूपोपलम्भादित्यत आह शुक्लमितीति । तत्फलमाह । पच्यमानेति । न च पार्थिवरूपाभिभूतरूपेणाग्निना परप्रकाशानुपपत्तिः । अनभिभूतस्यैव तेजसः परप्रकाशकत्वादिति वाच्यम् । असिद्धेः । तेजसः स्वपरप्रकाशने पार्थिवादिसंयोगविशेषस्यैव प्रतिबन्धकत्वात् । सिद्धावपि रूपत्वव्याप्यजात्यभिभवेऽपि रूपानभिभवात् ।

ननु तेजसा समं जलरूपस्य संयुक्तसमवायात् तेन तेजोरूपान्तरस्याप्रतीतेः शुक्लत्वप्रतीति चन्द्रमहसि स्यादित्याशङ्का निरा-

अनभिभूतस्यैवेति । अनभिभूतरूपस्यैवेत्यर्थः । अन्यथा सुवर्णस्यापि परप्रकाशकतापत्तिरिति भावः । असिद्धेरिति । तथा नियमस्येति शेषः ।

नन्वेवं सङ्कातिप्रसङ्ग इत्यत आह । तेजस इति । सुवर्णादेरित्यर्थः । रूपस्येति । रूपत्वव्याप्य शुक्लत्वजात्यभिभवेऽपीत्यर्थः । रूपेति । वह्न्यादेरिति शेषः । सुवर्णे रूपमेवाभिभूतमिति फलबलात् कल्प्यत इति भावः ।

भवात्। नहि जलप्लावितानीत्यादयः। क्वचित्तं न इति। उष्ण एव स्पर्श इति। एवकारश्चन्द्रचामीकरचक्षुरादिष्वनुपलम्भहेतुकां विप्रतिपत्तिमपनेतुम्। तेषां तैजसत्वेनोष्णत्वानुमानादनुद्भवेनानुपलम्भो न त्वभावात्। तदपि द्विविधमिति पूर्ववत् तात्पर्य्यम्।

कार्य्यभेदमाह। शरीरादित्रयमिति। शरीरमादि यस्य त्रयस्य तत्तथा। न पार्थिववत् तैजसं शरीरमुपलभ्यते इत्यत आह। शरीरमिति। तैजसोऽपि शरीरारम्भकत्वं तोयवत्साधनीयम्। ज्वलदनल

करोति। न चेति। चक्षुरादीत्यादिपदात् मणिप्रभापरिग्रहः। (१५६) तत्रानुष्णाशीतस्पर्शोपलम्भात्। न च पार्थिवस्पर्शोपाधिकः स: पार्थिवरूपाभाने तत्स्पर्शाभानात्। अन्यथा वायावपि स्पर्शविरहापत्तेः। तेषामिति। चन्द्रादि तैजसं भास्वररूपत्वादालोकवत्। न चोद्भूतस्पर्शत्वमुपाधिः। चक्षुःसुवर्णयो धर्म्मिग्राहकमानात् तैजसत्वसिद्धौ साध्याव्यापकत्वादिति। एवञ्चोष्मादावपि तैजसत्वेन शुक्लभास्वररूपत्वानुमानमित्यर्थः।

---

(१५६) मणिप्रभायामनुष्णस्पर्शविप्रतिपत्तिमोक्तं दर्शयति। तत्रानुष्णेति। चक्षुरिति। न च साधनावच्छिन्नसाध्यव्यापकत्वं भास्वररूपसमवायिकारणता-वच्छेदकत्वेनैव तैजसत्वसिद्धेर्विपक्षबाधकेन हेतोः साध्यव्याप्यत्वेनोपाधेस्तदव्यापकत्वादिति भावः।

कल्पेन कस्तेनोपभोग इत्यत आह। पार्थिवेति। इन्द्रियमाह। यद्गन्धाद्यव्यञ्जकत्वे सति रूपस्य व्यञ्जकमिन्द्रियं तत्तैजसम्। सर्व्वप्राणिनामिति। प्राणिभेदेनेन्द्रियप्रकृतिवैचित्र्याशङ्कानिरासार्थम्। तत्-

योग्यानुपलम्भबाधं निराकरोति। अनुद्भूतत्वेनेति। न चानुद्भूतरूपस्पर्शासिद्धिः। रूपवन्मात्रवृत्तितेजस्त्वमुद्भूतस्पर्शरूपवन्मात्रवृत्ति द्रव्यत्वमाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदित्यनुद्भूतरूपस्पर्शवत्तेजःसिद्धेः। अनुद्भूतत्वञ्च जातिभेदः। तच्च रूपत्वादिव्याप्यं नानेति न जातिसङ्करः। उद्भूतत्वस्य च तत्तुल्यतया नानात्वेऽपि साक्षात्कारं प्रत्यनुद्भूतत्वव्यतिरेकस्यैवानुगतस्य हेतुत्वमिति भावः।

तेजसोऽपीति। स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् तेजस्त्वस्य पृथिवीत्ववच्छरीरारम्भकवृत्तित्वमनुमेयमित्यर्थः।

गन्धाद्यव्यञ्जकत्वे सतीति। न च दीपस्य स्वकीयस्पर्शव्यञ्जकत्वात् साधनविकलो दृष्टान्तः। रूपसाक्षात्कारासाधारणकारणं

प्रसङ्गादाह। एतच्चेति। अनुद्भूतरूपतेजःसिद्धिरित्यर्थः। रूपस्पर्शवन्मात्रवृत्तीति। एतच्च पक्षविशेषणम् नीलरूपादिवृत्तित्वपर्य्यवसानेनार्थान्तरवारकबाधस्फोरणाय। रूपस्पर्शान्यतरगर्भतयानुमानद्वये तात्पर्य्यम्। तेनान्यतरानुद्भूतत्वमात्रेण नान्यथासिद्धिः। यद्यपि मूले स्पर्शानुभवमात्रमुक्तं तथापि तेजस्त्वेनोष्माद्यनुद्भूतस्यैव रूपस्यानुमानमुक्तमिति तदभिप्रायेण तथोक्तम्। न च चक्षुरादेरनुद्भूतरूपाद्यसिद्धदशायां रूपादिवन्मात्रवृत्तित्वमसिद्धमिति वाच्यम्। तस्योभयवादिसिद्धत्वात्। तेजस्त्वं यदि नीलरूपवृत्तिद्रव्यत्वव्याप्यजातिः स्यात् रूपवद्वृत्ति न स्यादिति तर्कसिद्धेः।

सद्भावे रूपोपलब्धिः प्रमाणम्। तैजसत्वे च रसाद्यव्यञ्जकत्वे रूपाभिव्यञ्जकत्वं प्रदीपवत्।

तैजसम्। रसाद्यव्यञ्जकत्वे सति स्फटिकाद्यन्तरितप्रकाशकत्वात् प्रदीपवदित्यत्र तात्पर्यात्। मनःशरीरयोश्च रसव्यञ्जकत्वात् नानैकान्तः। अनुमानान्तरं चक्षुषः तैजसत्वसाधकं पृथिव्यामुक्तम्।

नन्वनुद्भूतत्वेनानुपलम्भ इत्ययुक्तम्। उद्भूतत्वव्याप्यप्रत्यक्षत्वपरतया साध्याविशेषादित्यत आह। अनुद्भूतत्वञ्चेति। रूपत्वादीति। शुक्लत्वादिव्याप्यमित्यर्थः। नानात्वेऽपीति। नानात्वसम्भवेऽपीत्यर्थः। उभयजात्यभ्युपगमे मानाभावात्। न चेति। नचादिपदग्राह्यरसाद्यव्यञ्जकतया विशिष्टाभावसत्त्वादिदमयुक्तमिति वाच्यम्। आदिपदस्य प्रत्येकहेतूपलक्षकत्वात्। अन्यथा रसाद्यव्यञ्जकत्वमात्रस्यैव सामर्थ्ये अधिकस्य व्यर्थत्वात्। अतएव तदेव हेतुविशेषणमाह। रसेति।

अत्रापि यद्यादिपदं तदा गन्धाद्यव्यञ्जकत्वलक्षणहेत्वन्तरसूचनाय। न च गोलके व्यभिचारः। तस्य स्वरसादिव्यञ्जकत्वात्। यद्यप्येवमपि स्वकीयशरीरगोलके व्यभिचारस्तथापि तदन्यत्वे सतीत्यपि विशेषणं बोध्यम्। प्रकाशकत्वञ्च प्रकाशकारणत्वं अतो न विषयतत्सन्निकर्षादौ व्यभिचारः। एवञ्च रूपव्यञ्जकगर्भतया सामञ्जस्ये स्फटिकादीत्यादिना विशेष्यभागान्यथाकरणं किमर्थमिति चिन्त्यम्। केचित्तु रूपेत्यादिना पक्षतावच्छेदकनिर्वचनम्। रसाद्यव्यञ्जकरूपव्यञ्जकसमवायं वाच्यमित्यन्यथा हेतूपादानम्। न च रूपसाक्षात्कारकारणत्वावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयपरमेतदिति वाच्यम्। असम्भवात्। चाक्षुषत्वजातेरेव लाघवेन चक्षुर्जन्यतावच्छेदकत्वात्। द्रव्यादिसाक्षात्कारसंग्राहकत्वाच्च। न च विशेषितहेतोरपि तथात्वसम्भवे कथं तत्परत्वमेवेति वाच्यम्। अस्याशोकरनितादेशकत्वत्वात्। न च चाक्षुषत्वजातिरेव पक्षतावच्छेदिकास्त्विति वाच्यम्। गोलकभेदासिद्धौ तदसिद्धेरित्याहुः। तच्चिन्त्यम्। तद्धर्मनियतस्याप्यनेकस्य तथात्वसम्भवेन गुरुहेतुत्यागस्यासम्भवदुक्तिकत्वात्। मन इति। तथाच सत्यन्तेन तन्निरास इत्यर्थः।

इह केचिदाहुः। अप्राप्यकारि चक्षुरधिष्ठानासम्बद्धार्थग्राहित्वात्। यत् पुनः प्राप्यकारि न तदधिष्ठानासम्बद्धार्थग्राहि। यथा रसनादि। पृथुतरग्रहणाच्च। यदि प्राप्यकारि चक्षुः स्यात् स्वतोऽधिकपरिमाणं न गृह्णीयात्। न खलु नखरं परशुच्छेद्यं छिनत्ति। शाखाचन्द्रमसोस्तुल्यकालग्रहणाच्च। यदि हि गत्वा गृह्णीयात् निकटस्थमाशु गृह्णीयात्। दवीयस्तु चिरेणेति न तुल्यकालमुपलम्भयेत्। अनुभवति तून्मीलयन्नेव नयने शाखां शीतमयूखञ्चेति। काचाभ्र-

अप्राप्यकारीति। ननु गोलकस्य पक्षत्वेऽपि सिद्धसाधनं तदन्यस्य पक्षत्वे चाश्रयासिद्धिः। सिद्धौ वा धर्म्मिग्राहकमानबाधः। अत्राहुः। तदन्यस्यैव पक्षत्वे न बाधः। धर्म्मिग्राहकमानस्य प्राप्यकारित्वानुपजीवकत्वात्। तस्य व्यवहितानुपलब्धिगम्यत्वात्। यद्वा गोलकमेव पक्षः स्वासम्बन्धविषयग्राहकत्वञ्च साध्यम्। न च सिद्धसाधनम्। (१५७) घटसाक्षात्कारकारणतेजःसंयोगसमानाधिकरणघटसाक्षात्कारकारणतेजःसंयोगवत्त्वस्य सिषेध्यत्वात्। अनैकान्तिकत्वाद्विरुद्धत्वादित्यर्थः। पृथुतरग्रहणस्य साधिकपरिमाणद्रव्यग्राहिणा त्वगिन्द्रियेणानैकान्तिकत्वे सत्येव समाधाना-

(१५७) घटेति। एतच्च प्रागेव व्याख्यातप्रायम्। व्यभिचरितो व्यतिरेकाविरुद्ध इत्याशयेनाह। विरुद्धत्वादित्यर्थ इति। सजातीयेति। यावद्गुरुत्वाभावसम्बलनमित्यर्थः।

दलस्फटिकाद्यन्तरितोपलब्धेश्च। यदि हि प्राप्तं गृह्णीयात् प्रतिघातिना स्फटिकादिद्रव्येण विष्टम्भादप्राप्तं प्रसर्पत् तृणादिकं नाददीत। तस्मादप्राप्यकारि। ततो न तैजसमिति। तदसत्। अधिष्ठानसम्बद्धार्थग्राहित्वस्य प्रदीपेनानैकान्तिकत्वात्। पृथुतरग्रहणस्यापि पृथ्वग्रतया तद्देशोपपत्तेः। तुल्यकालग्रहणान्त्वसिद्धमेव। तदभिमानस्य कालसन्निकर्षेणोपपत्तेः। अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यत्प्राचीनाचलचूड़ावलम्बिन्येव मयूखमालिनि भवनोदरेष्वालोक इत्यभिमानो लौकिकानाम्।

---

न्तरमाह। पृथुतरेति। यत्काले चन्द्रमसा संयुक्तं चक्षुस्तत्काले शाखयापीति तुल्यकालग्रहोपपत्तिः। न चाग्रावच्छेदेनैव चक्षुःसंयोगो ग्राहकोऽन्यथा मूलावच्छेदेन गोलकस्य नित्यसम्बन्धात् तद्ग्रहोपपत्तिरिति वाच्यम्। तिर्य्यग्भावेन शाखाचन्द्रमसोरग्रावच्छेदेन चक्षुःसंयोगाविरोधादिति समाधानं मन्यवाह। तुल्यकालेति। शाखाग्रहणानन्तरमेव चन्द्रग्रहणम्। तयोस्तुल्यकालत्वधीर्भ्रम इत्यर्थः।

लाघवातिशयेनेति। सजातीयसम्बलनमेवातिशयः। गुरुत्वाभावात्मके लाघवे जात्यात्मकप्रकर्षाभावात्। एतदेव दृष्टान्तेन द्रढयति। यत्प्राचीनेति।

केचित्तु संसर्गिद्रव्यतया निःसरदेव नायनं तेजो बाह्यालोकेनैकतां गतं युगपदेव तावद्दैर्घ्येन संसृष्टमिन्द्रियमुत्पादितवदिति शाखाचन्द्रमसोस्तुल्यकालग्रहणमुपपद्यत इति समाधानमाहुः । तदसत् । पृष्ठभागव्यवहितार्थोपलम्भप्रसङ्गात् । इन्द्रियप्राप्तये ह्यार्जवावस्थानमप्युपयुज्यत इति स्फटिकाद्यन्तरितोपलब्धिरपि प्रसादस्वभावतया स्फटिकादीनां तेजस्तेरप्रतिबन्धकत्वात् । प्रदीपप्रभावदेवोपपत्तेरिति । येषान्त्वप्राप्यकारि चक्षुः तेषामप्राप्तत्वाविशेषादव्यवहितमिव कुड्यादिव्यवहितमपि किं न गृह्णाति । नहि

---

आलोकमतं दूषयितुमुपन्यस्यति । केचित्त्विति । पृष्ठभागेति । वस्तुतोऽनुद्भूतरूपेण चक्षुषा उद्भूतरूपेणालोकेन सहारम्भे विरोधः । आरम्भेऽपि वावयवस्येन्द्रियत्वं स्यात् । न चावयविनः कार्य्यैकोन्नेयत्वात् तस्य । एतेनैतस्ततः स्थितैः प्रेक्षकाणां परस्परनयनैर्नारम्भविरोधः । तेषामनुद्भूतरूपत्वादित्यपास्तम् ।

नन्विन्द्रियमेव पृष्ठदेशे व्यवहितेन कुतो न सम्बध्यते इत्यत आह । इन्द्रियप्राप्तय इति । तस्मिन् सतीति । ननु यत्र क्वचित् कुड्यादि न प्रतिबन्धकं किन्तु ग्राह्यग्राहकमध्यवर्त्ति । न चाल्पपरिमाणेन तादृशेन महापरिमाणद्रव्याग्रहणापत्तिः । ग्राह्याधिकपरिमाणस्य तन्मध्यवर्त्तिनः कुड्यादेः प्रतिबन्धकत्वात् । न चैवं गोलकस्यैव